# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 4.




# कणाद-मुनि-प्रणीतम् वैशेषिकदर्शनम् ॥

शङ्कर-मिश्रकृत-वैशेषिक-सूत्रोपस्कार जयनारायण-तर्क-
पञ्चानन-कृत-कणादसूत्रविवृतिभ्यां सहितम् ॥

श्रीयुक्त जयनारायण-तर्कपञ्चानन

श्रीयुक्त नन्दकुमार-तर्करत्नाभ्यां

परिशोधितम् ॥

---

# THE VAI'SESHIKA DARS'ANA

WITH THE

COMMENTARIES OF S'ANKARA MIS'RA AND JAYA-
NÁRÁYANA TARKA PANCHÁNANA.

EDITED BY

PANDITA JAYANÁRÁYANA TARKA PANCHÁNANA AND PANDITA
NANDA KUMÁRA TARKARATNA,

*Professors of the Sanskrit College of Bengal.*

FASCICULUS I.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1860.

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES.

THE

# VAI'SESHIKA DARS'ANA,

WITH THE COMMENTARIES OF S'ANKARA MIS'RA
AND JAYANA'RA'YANA TARKA PANCHA'NANA.

EDITED BY

PANDITA JAYANA'RA'YANA TARKA PANCHA'NANA.

CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1861.

कणाद-मुनि-प्रणीतम्।

# वैशेषिकदर्शनम्।

---

शङ्कर-मिश्रकृत-वैशेषिक-सूत्रोपस्कार

जयनारायण-तर्कपञ्चानन-कृत-कणादसूत्रविवृतिभ्यां

सहितम्।

श्रीयुक्त-जयनारायण-तर्कपञ्चाननेन

परिशोधितम्॥

---

कलिकातानगरे.

व्याप्तिष्ट मिसन् यन्त्रे ग्रन्थोऽयं मुद्राङ्कितोऽभूत्।

शकाब्दाः १७८३ ई०१८६१.

# वैशेषिकदर्शनस्य

## निर्घण्टपत्रम्।

### प्रथमाध्यायः।

वैशेषिकसूत्राणां निर्घण्टपत्रं समाप्तम्॥०॥

---

# वैशेषिकसूत्रोपस्कारस्य

## निर्घण्टपत्रम्।

---

### प्रथमाध्यायः।

दशमाध्यायसमाप्तिः।

वैशेषिकसूत्रोपस्कारस्य निर्घण्टपत्रं सम्पूर्णम्।

## कणादसूत्रविवृते-

### निर्घण्टपत्रम्।

---



प्रथमाध्याय-प्रथमाह्निकसमाप्तिः।

॥*॥ कणादसूत्रविवृतेर्निर्घण्टपत्रं समाप्तम्॥*॥

# वैशेषिकदर्शनम्।

## प्रथमाध्याये प्रथमाह्निकम्।

### वैशेषिकसूत्रोपस्कारः।

श्रीगणेशाय नमः॥

उ॰ ऊर्द्ध्वबद्धजटाजूटक्रोडक्रीडत्सुरापगम्।
नमामि यामिनीकान्तकान्तभालस्थलं हरम्॥ १॥
याभ्यां वैशेषिके तन्त्रे सम्यग् व्युत्पादितोऽस्म्यहम्।
कणादभवनाथाभ्यां ताभ्यां मम नमः सदा॥ २॥
सूत्रमात्रावलम्बेन निरालम्बेऽपि गच्छतः।
खेखेलवन्ममाप्यत्र साहसं सिद्धिमेष्यति॥ ३॥

---

### कणादसूत्रविवृतिः।

वि॰ उत्पत्तिस्थितिसंहृतीर्वितनुते विश्वस्य यः स्वेच्छया
तद्विच्छिन्न परिस्फुरन्नपि न यः प्राकृतैर्ज्ञायते।
यत्तत्त्वं विदुषां न संसृतिसरित्पूरे पुनर्मज्जनं
सोऽयं वः स्थिरभक्तियोगसुलभो भूयाद्भवो भूतये॥ १॥
मेघाङ्गीमपि सम्भृतांशुनिकरैर्ध्वान्तौघविध्वंसिनीं
भक्तानां भवभेदिनीमपि भवप्रेम्णा सदानन्दिनीं।
माहेशीं कुलकामिनीमपि दिशो वासो वसानां घनै-
र्गम्भीमप्यमजां शिवामपि शवासीनां भवानीं भजे॥ २॥
प्रणम्य श्रीगुरून् श्रीमान् जयनारायणो द्विजः।
कणादसूत्रविवृतिं तनोतीश्वरतुष्टये॥ ३॥

उ॰ तापत्रयपराहता विवेकिनस्तापत्रयनिवृत्तिनिदानमनुसन्दधाना नानाश्रुतिस्मृतीतिहासपुराणेष्वात्मतत्त्वसाक्षात्कारमेव तदुपायमाकलयाम्बभूवुः। तत्प्राप्तिहेतुमपि पन्थानं जिज्ञासमानाः परमकारुणिकं कणादं मुनिमुपसेदुरथ कणादो मुनिस्तत्त्वज्ञानवैराग्यैश्वर्य्यसम्पन्नः षषां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमेवात्मतत्त्वसाक्षात्कारप्राप्तये परमः पन्था इति मनसिकृत्य तच्च निवृत्तिलक्षणाद्धर्मा-

---

वि॰ इह खलु जन्मजरामरणादिजनिततापकलापं जिहासवः सर्व्व एवान्तेवासिनस्तज्ज्ञाननिदानमात्मतत्त्वदर्शनमाकर्णयन्ति श्रुतिस्मृतीतिहासपुराणादिषु। तथा हि श्रुतिः,

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चैतावदरे खल्वमृतत्वमिति"।

"यदात्मानं विजानीयादहमस्मीति पूरुषः।

किमिच्छन् कस्य कामाय संसारमनुसंसरेत्"॥

इत्यादि।

स्मृतिश्च,

"आगमेनानुमानेन ध्यानाभ्यासरसेन च।

त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्"॥ इति।

अथ केचिदन्तेवासिनो विधिवदधीतवेदवेदाङ्गा अनसूयकाः सम्पन्नश्रवणा मननार्थं भगवन्तं कणादमहर्षिं विधिवदुपसेदुः। ततः परमकारुणिकः स मुनिर्दशाध्यायीतन्त्रं तानुपदिदेश। तत्र प्रथमाध्याये समवेताशेषपदार्थकथनम्। द्वितीयाध्याये द्रव्यनिरूपणम्। तृतीयाध्याये आत्मान्तःकरणलक्षणम्। चतुर्थाध्याये शरीरतदुपयोगिविवेचनम्। पञ्चमाध्याये कर्म्मप्रतिपादनम्। षष्ठाध्याये श्रौतधर्म्मविवेचनम्। सप्तमाध्याये गुणसमवाययोः

सू॰ अथातो धर्म्मं व्याख्यास्यामः॥ १॥

---

उ॰ इतेषामनायासेन सेत्स्यतीति लक्षणतः स्वरूपतश्च धर्म्ममेव प्रथममुपदिशाम्यनन्तरं षडपि पदार्थानुद्देशलक्षणपरीक्षाभिरुपदेक्ष्यामीति हृदि निधाय तेषामवधानाय प्रतिजानीते।

अथेति शिष्याकाङ्क्षानन्तर्य्यमाह। अत इति। यतः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसेदुरित्यर्थः। यद्वा अथशब्दो मङ्गलार्थः। तदुक्तम्,

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।

कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"॥ इति।

युक्तञ्चैतत् कथमन्यथा सदाचारपरम्पराप्राप्तकर्त्तव्यताकस्य मङ्गलस्य वैशेषिकशास्त्रं प्रणयतो महामुनेरनाचरणं सम्भाव्यते। न च कृतमङ्गलस्यापि फलादर्शनादकृतमङ्गलस्यापि फलदर्शनादननुष्ठानं न हि निष्फले

---

वि॰ प्रतिपादनम्। अष्टमाध्याये ज्ञानोत्पत्तिसन्निदानादिनिरूपणम्। नवमाध्याये बुद्धिविशेषप्रतिपादनम्। दशमाध्याये आत्मगुणभेदप्रतिपादनम्। उद्देशो लक्षणं परीक्षा चेति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिः विभागस्तु विशेषोद्देश एवेति नाधिक्यम्। यद्यप्यत्र तन्त्रे पदार्थनिरूपणस्यैव प्राचुर्य्यं तथापि पदार्थतत्त्वज्ञाननिदानतया धर्म्मस्यैव प्राधान्यात् तन्निरूपणमेव प्रथमं प्रतिजानीते॥

अथशब्दस्यानन्तर्य्यमर्थः शिष्यजिज्ञासानन्तरमित्यर्थः यतः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसन्नाः। अतः कारणात्

उ० प्रेक्षावान् प्रवर्त्तत इति वाच्यम्, अकरणस्थले जन्मान्तरीयस्य करणस्थले चाङ्गवैगुण्यस्य कल्पनया सफलत्वनिश्चयात्। न हि शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकस्यापाततः फलादर्शनमात्रेणाकारणत्वशङ्काऽपि न चैहिकमात्रफलकत्वान्न जन्मान्तरीयानुमानं पुत्रेष्टिवदैहिकमात्रफलकत्वानुपपत्तेः। कारीर्य्यादौ तु तथा कामनयैवानुष्ठानादैहिकमात्रफलकत्वम्। अत्र च समाप्तिकामोऽधिकारी स्वर्गकाम इव यागे तत्रापूर्व्वं द्वारमिह तु विघ्नध्वंस इति विशेषः निर्व्विघ्नमारब्धं समाप्यतामिति कामनया प्रवृत्तेः। न च विघ्नध्वंसमात्रं फलं समाप्तिस्तु स्वकारणादेवेति वाच्यम्, तस्य स्वतोऽपुरुषार्थत्वात् समाप्तेस्तु सुखसाधनतया पुरुषार्थत्वात् उपस्थितत्वाच्च, किञ्च दुरितध्वंसमात्रं न फलं तस्य प्रायश्चित्तकीर्त्तनकर्म्मनाशापारगमनादिसाध्यतया व्यभिचारात् प्रारब्धपरिसमाप्तिप्रति-

---

वि० अथानन्तरमिदानीं धर्म्मं व्याख्यास्यामो निरूपयिष्याम इत्यर्थः। केचित्तु अथशब्दो मङ्गलार्थः,

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ"॥

इति स्मरणात् एतेन शास्त्रं प्रणयता महर्षिणा शिष्टाचारपरम्परापरिप्राप्ताभिमतकर्म्मारम्भसमयकर्त्तव्यताकं मङ्गलाचरणं कथं न कृतमित्याक्षेपोऽपि निरस्त इत्याहुः। अन्ये तु योगजधर्म्मेण विघ्नाभावनिश्चयात् मुनिना मङ्गलाचरणं न कृतं कृतं वा किन्तु ग्रन्थादौ तन्न निबद्धमित्याहुः। वस्तुतस्तु गौतमीये

उ॰ बन्धकदुरितध्वंसत्वेन फलत्वे समाप्तेरेव फलत्वोचितत्वात् तत्रापि च हिरण्यदानप्रयागस्नानादिजन्यत्वेन व्यभिचा-रात् तेषामपि मङ्गलत्वाभिधानं साहसम्। किञ्च मङ्गले सति समाप्तेरावश्यकत्वमित्येवं मङ्गलस्य कारणता तदुक्तम् "श्रौतात् साङ्गात् कर्म्मणः फलावश्यम्भावनियमादिति"। अतएव विकल्पितमपि कारणं कारणमेव फलागमार्थ्य-नियमस्यैव वैदिककारणत्वात् विकल्पे तु वैजात्यकल्पनं वैजात्यमेव। यत्रान्वयव्यतिरेकगम्या कारणता तत्र फल-पूर्व्वभावनियमो ग्राह्यो न तु वेदेऽपि तत्र व्यतिरेकभा-गस्य गुरुत्वेनानुपस्थितेः तथा च साङ्गे मङ्गले समाप्ति-रावश्यकीति न व्यभिचारः समाप्तिस्तु यस्मिन् अनुष्ठिते सम्पूर्णमिदं कर्म्मेति प्रमा सा च ग्रन्थादौ चरमवाक्य-लिखने यागादौ चरमाहुतौ पटादावन्यतन्तुसंयोगे ग्रामगमनादौ ग्रामचरणचरमसंयोगे एवं तत्र तत्रोहनी-यमिति मङ्गलजन्यसमाप्तौ वैजात्यकल्पनेऽपि नोभयथा व्यभिचारः। मङ्गलस्य विघ्नध्वंसद्वारकसमाप्तिफलकं कर्म्म तच्च देवतानमस्कारादिरूपमेव स्वतःसिद्धविघ्नाभावस्य-

---

वि॰ भगवन्नामगणान्तःपातिप्रमाणशब्दोच्चारणवत् अत्र शास्त्रे तथा-विधधर्म्मशब्दोच्चारणरूपमेव मङ्गलमित्याहुः। अत्र धर्म्मस्य शा-स्त्रोपयोगिता चित्तशुद्धिविविदिषादिद्वारिकैव "विविदिषन्ति यज्ञेनेत्यादि" श्रुतेः,

"कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते"।

सू॰ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः ॥ २ ॥

उ॰ सेऽपि सामान्यतो गृहीतस्य विघ्नध्वंसद्वारकत्वस्यानपायात् नमस्कारादीनां तादृप्येणैव विघ्नध्वंसद्वारकत्वप्रतिपत्ते र्नाव्याप्तिरिति दिक् ॥ १ ॥

अथ प्रतिज्ञातार्थमाह।

अभ्युदयस्तत्त्वज्ञानं निःश्रेयसमात्यन्तिकीदुःखनिवृत्तिः तदुभयं यतः स धर्म्मः अभ्युदयद्वारकं निःश्रेयसमिति मध्यपदलोपी समासः पञ्चमीतत्पुरुषो वा स च धर्म्मो निवृत्तिलक्षणो वच्यते, यदि तु निदिध्यासनादियोगसाध्यो धर्म्मोऽदृष्टमेव तदा विधिरूपः। वृत्तिकृतस्तु अभ्युदयः सुखं निःश्रेयसमेककालीनसकलात्मविशेषगुणध्वंसः प्रमाणञ्च धर्म्मे देवदत्तशरीरादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्व्वकं कार्य्यत्वे सति तद्भोगसाधनत्वात्तन्निर्म्मितसर्व्वदित्याहुः। तदेतद्व्याख्यानं प्रत्येकसमुदायाभ्यां न व्यापकं इत्यर्व्वाचीनैरुपेक्षितं वस्तुतस्तु को धर्म्मः किं लक्षणश्चेति सामान्यतः शिष्यजिज्ञासायां यतोऽभ्युदय-

वि॰ इत्यादि स्मृतेश्चेति मन्तव्यम् ॥ १ ॥

ननु धर्म्मस्याकिञ्चित्करत्वेन तन्निरूपणं व्यर्थमतो धर्म्मस्य परमपुरुषार्थसाधनत्वं दर्शयन् तल्लक्षणमाह।

अभ्युदयः स्वर्गः निःश्रेयसं मोक्षस्तयोः सिद्धिरुत्पत्तिर्यतः कारणात् स धर्म्मः तथा च स्वर्गापवर्गरूपपरमपुरुषार्थसाधनतया बुभुक्षूणां मुमुक्षूणाञ्चोपादेयत्वाद्धर्म्मस्य व्याख्यानं युक्तमेव

उ० निःश्रेयससिद्धिरित्युपतिष्ठते तथा च यतोऽभ्युदयसिद्धि-र्यतश्च निःश्रेयससिद्धिस्तदुभयं धर्म्मः एवं पुरुषार्थासाधारणकारणं धर्म्म इति वक्तव्ये परमपुरुषार्थयोः सुखदुःखाभावयोर्विशेषतः परिचयार्थमभ्युदयनिःश्रेयससिद्धिरित्युक्तं स्वर्गापवर्गयोरेवान्येच्छानधीनेच्छाविषयत्वेन परमपुरुषार्थत्वात् साधयिष्यते च दुःखाभावस्यापि पुरुषार्थत्वम् ॥ २ ॥

ननु निवृत्तिलक्षणो धर्म्मस्तत्त्वज्ञानद्वारा निःश्रेयसहेतुरित्यत्र श्रुतिः प्रमाणं श्रुतेरेव प्रामाण्ये वयं विप्रतिपद्यामहे अनृतव्याघातपुनरुक्तदोषेभ्यः पुत्रेष्टौ कृतायामपि पुत्रानुत्पादादनृतत्वम् "उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोतीति" विधेः प्राप्त एवोदितादिकाले होमो व्याहन्यते "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति" इत्यादिना । तथा "त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह"

---

वि० अत्र च धर्म्मस्य स्वर्गसाधनता साक्षादेव अपवर्गसाधनता तु तत्त्वज्ञानद्वारेति विशेषः अत्र सुखजनकत्वावच्छेदकतया सिद्धा धर्म्मत्वजातिर्धर्म्मपदवाच्यत्वं वा धर्म्मस्य लक्षणमभिप्रेतमिति ध्येयम् ॥ २ ॥

ननु धर्म्मे तस्य तत्त्वज्ञानादिसाधनत्वे च किं मानं वेद एव मानमिति चेत् न तत्प्रामाण्यस्यापि सन्दिग्धत्वात् तथा ह्यत्र-

सू० तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥

---

उ० इत्यनेन प्रथमोक्तमथाभिधेयोक्तिरवधारणाभिधानात् पौनरुक्त्यमेव। न चाम्नायप्रामाण्यप्रतिपादकं किञ्चिदस्ति नित्यत्वे विप्रतिपत्तौ नित्यनिर्दोषत्वमपि सन्दिग्धं पौरुषेयत्वे तु भ्रमप्रमादविप्रतिपत्तिकरणापाटवादिसम्भावनया आप्तोक्तत्वमपि सन्दिग्धमेवेति न निःश्रेयसं न वा तत्र तत्त्वज्ञानं द्वारं न वा धर्म्म इति सर्व्वमेतदाकुलमत आह।

तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति यथा "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य" इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते। तथा च तद्वचनात्तेनेश्वरेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यं यद्वा तदिति सन्निहितं धर्म्ममेव परामृशति तथा च धर्म्मस्य वचनात् प्रतिपादनात् आम्नायस्य वेदस्य प्रामाण्यं यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति तत्प्रमाणमेव यत इत्यर्थः। ईश्वरस्तदाप्तत्वञ्च साधयिष्यते यच्चोक्तमनृतव्याघातपुनरुक्तदोषेभ्य इति तत्रानृतत्वे जन्मान्तरीय-

---

वि० चरमसूत्रं "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य" इतीत्याशङ्कां निरस्यति ॥

तेनेश्वरेण वचनात् कथनात् आम्नायस्य वेदस्य प्रामाण्यमवश्यं स्वीकार्य्यमिति शेषः। ईश्वरस्याप्रक्रान्तत्वेऽपि प्रसिद्धार्थकेन तच्छब्देन परामर्शो भवत्येव यथा कक्षा च सा कान्तिमती कलावत

उ० फलकल्पनं कर्म्मकर्तृसाधनवैगुण्यकल्पनं वा श्रौतात् साङ्गात् कर्म्मणः फलावश्यम्भावनिश्चयात् नच कारीरीवदैहिकमात्रफलकत्वं तत्र हि मृत्युच्छस्यसञ्जीवनकामस्याधिकारः पुत्रेष्टौ पुत्रमात्रकामस्येतिविशेषात् नच व्याघातोऽपि उदितादिहोमं विशेषतः प्रतिज्ञाय तदन्यकाले होमानुष्ठाने "श्यावोऽस्याहुतिमभ्यवहरति" इत्यादिनिन्दाप्रतिपादनात् नच पुनरुक्ततादोषोऽपि एकादशसामिधेनीनां प्रकृतौ पाठात् "पञ्चदशावरेण वाग्वज्रेणावबाधे तमिमं भ्रातृव्यम्" इत्यत्र सामिधेनीनां पञ्चदशत्वस्य प्रथमोत्तमसामिधेन्योस्त्रिरभिधानमन्तरेणानुपपत्तेस्तथाभिधानात् ॥ ॥ ३ ॥

शिष्याकाङ्क्षानुरोधेन स्वरूपतो लक्षणतश्च धर्म्मं व्याख्यायाभिधेयसम्बन्धप्रतिपादनाय सूत्रम्।

---

वि० इति कुमारसम्भवे तच्छब्दस्याप्रक्रान्तवाचित्वं यथा वा तदप्रामाण्यमित्यादिगोतमसूत्रे अप्रक्रान्तस्य वेदस्य तच्छब्देन परामर्शः यदा ईश्वरवाचकमेवात्र तत्पदम्,

"ॐ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः"।

इति वचनात् तथा च नित्यसर्व्वज्ञनिर्दोषपुरुषप्रणीतत्वात् वेदस्य प्रामाण्यमवश्यमेवाभ्युपेयमित्यर्थः ॥ ३ ॥

इदानीं प्रेक्षावतां प्रवृत्तये शास्त्रस्य प्रयोजनाभिधेयसम्बन्धान् प्रदर्शयन् पदार्थानुद्दिशति॥

सू० धर्म्मविशेषप्रसूताद्* द्रव्यगुणकर्म्मसामान्यवि-

उ० एतादृशं तत्त्वज्ञानं वैशेषिकशास्त्राधीनमिति तस्यापि निःश्रेयसहेतुत्वं दण्डापूपायितम्। तत्त्वं ज्ञायतेऽनेनेति करणव्युत्पत्त्या शास्त्रपरत्वे धर्म्मविशेषप्रसूतादित्यनेनानन्वयापत्तेः। सर्व्वपदार्थप्रधानो द्वन्द्वश्चात्र समासः सर्व्वपदार्थतत्त्वज्ञानस्य निःश्रेयसहेतुत्वात् तदत्र शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः शास्त्रतत्त्वज्ञानयोर्व्यापारव्यापारिभावः निःश्रेयसतत्त्वज्ञानयोः कार्य्यकारणभावः द्रव्यादिपदार्थशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धोऽवगम्यते एतेषाञ्च सम्बन्धानां ज्ञानान्निःश्रेयसार्थिनामिह शास्त्रे प्रवृत्तिः मोक्षमाणाश्च मुनेर्गृहीताप्तभावा एव शास्त्रे प्रवर्त्तन्ते। निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः। दुःखनिवृत्तेश्चात्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वं युगपदुत्पन्नसमानाधिकरणसर्व्वात्मविशेषगुणध्वंससमानकालीनत्वं वा। अशेषविशेषगुणध्वंसावधिकदुःख-

वि० धर्म्मविशेषः ऐहिको जन्मान्तरीयो वा सुकृतविशेषः तत्प्रसूतात् तज्जन्यादित्यर्थः। इदञ्च तत्त्वज्ञानादित्यस्य विशेषणं साधर्म्म्यं समानो धर्म्मः, वैधर्म्म्यं विरुद्धो धर्म्म इति मुक्तावलीकारः तृतीया प्रकारे तत्त्वज्ञानादित्यत्र पञ्चम्यर्थः प्रयोज्यत्वं तथाच सुकृतविशेषेण द्रव्यादिपदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानं जायते, तत आत्ममननं अनन्तरं निदिध्यासनेनात्म-

* धर्म्मविशेषसूतादित्यपि पाठः।

सू॰ शेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥

---

उ॰ प्रागभावो वा मुक्तिः नचासाध्यत्वान्नायं पुरुषार्थः कारणविघटनमुखेन प्रागभावस्यापि साध्यत्वात् नच तस्य प्रागभावत्वक्षतिः प्रतियोगिजनकाभावत्वेन तथात्वात् जनकत्वञ्च स्वरूपयोग्यतामात्रम्, नहि प्रागभावश्चरमसामग्री येन तस्मिन् सति कार्य्यमवश्यम्भवेत् तथा सति कार्य्यस्याप्यनादित्वप्रसङ्गात् तथाच यथा सहकारिविरहादियन्तं कालं नाजीजनत् तथाग्रेऽपि तद्विरहान्न जनयिष्यति हेतूच्छेदे पुरुषव्यापारात् इत्यस्यापि प्रागभावपरिपालन एव तात्पर्य्यात्, अत एव गौतमीयद्वितीयसूत्रे "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इत्यत्र कारणाभावात् कार्य्याभावाभिधानं दुःखप्रागभावरूपामेव मुक्तिं द्रढयति नहि दोषापाये प्रवृत्त्यपायः, प्रवृत्त्यपाये जन्मापायः, जन्मापाये दुःखापाय

---

वि॰ साक्षात्कारो जायते, तदनन्तरं मिथ्याज्ञानादिनाशक्रमेण मोक्षो भवतीत्यर्थः। उपस्कारकारास्तु सूत्रस्थतत्त्वज्ञानपदमात्मसाक्षात्कारपरं करणव्युत्पत्त्या तादृशसाक्षात्कारकरणशास्त्रपरं वा तत्राद्ये धर्म्मविशेषपदं निवृत्तिलक्षणधर्म्मपरम् अन्त्ये ईश्वरनियोगप्रसादरूपधर्म्मविशेषपरं कणादो महर्षिरीश्वरनियोगप्रसादावधिगम्य एतच्छास्त्रं प्रणीतवानिति किंवदन्ती। आत्मसाक्षात्कारश्च शास्त्राम्ननननिदिध्यासनादिपरम्परयेति हेतु-

उ० इत्यपायो ध्वंसः किन्त्वनुत्पत्तिः सा च प्रागभाव एव स च प्रतियोग्यप्रसिद्धिः सामान्यतो दुःखत्वेनैव प्रतियोगिप्रसिद्धेः प्रायश्चित्तवत् तत्रापि प्रत्यवायध्वंसद्वारा दुःखानुत्पत्तेरेवापेक्षितत्वात् लोकेऽप्यहिकण्टकादिनिवृत्तेर्दुःखानुत्पत्तिफलकत्वदर्शनात् दुःखसाधननिवृत्त्यर्थमेव प्रेक्षावतां प्रवृत्तिः। केचित्तु दुःखात्यन्ताभाव एव मुक्तिः स च यद्यपि नात्मनिष्ठस्तथापि लोष्टादिनिष्ठ एवात्मनि साध्यते सिद्धिश्च तस्य दुःखप्रागभावासहवर्त्तिदुःखध्वंस एव तस्य तत्सम्बन्धतयोपगमात् तस्मिन् सति तत्र दुःखात्यन्ताभावप्रतीतेः एवञ्च सति "दुःखेनात्यन्तं विमुक्तश्चरति" इत्यादिश्रुतिरप्युपपादिता भवतीत्याहुः। तन्न दुःखात्यन्ताभावस्यासाध्यत्वेनापुरुषार्थत्वात् दुःखध्वंसस्य च न तत्र सम्बन्धत्वं परिभाषापत्तेः "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतेर्दुःखप्रागभावस्यैव कारणविघटनमुखेनात्यन्ताभावसमानरूपत्वतात्पर्य्यकत्वात् नन्वयं न पुरुषार्थः निरु-

---

वि० पञ्चम्याः प्रयोज्यत्वार्थकत्वात् "तमेव विदित्वातिमृत्युमेति" "द्वे ब्रह्मणी वेदितव्ये" इत्यादि श्रुतौ वेदनपदं साक्षात्कारपरं तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वादित्याकलितमस्यं सूत्रस्थतत्त्वज्ञानपदस्य सवासनमिथ्याज्ञानविरोधिस्वात्मसाक्षात्कारपरत्वे साधर्म्म्यवैधर्म्म्याभ्यामित्यस्य पदार्थानामिति षष्ठ्यन्तार्थस्य चानन्वयापत्तेः नह्यात्मसाक्षात्कारे साधर्म्म्यवैधर्म्म्यप्रकारकत्वं षट्पदार्थविशेष्यकत्वं वास्ति देहादिभिन्नत्वेनात्मसाक्षात्कारस्यैव देहाद्यभेदवासनाद्युन्मूलनक्षमत्वेन तत्र तदभावात् न च योगज-

उ० पाधीच्छाविषयत्वाभावात् दुःखकाले सुखं तावन्नोत्पद्यते इति सुखार्थिनामेव दुःखाभावार्थं प्रवृत्तेरिति चेन्न वैपरीत्यस्यापि सुवचत्वात् सुखेच्छापि दुःखाभावोपाधिकीत्येव किं न स्यात् शोकाकुलानां सुखविमुखानामपि दुःखाभावमात्रमभिसन्धाय विषभक्षणोद्बन्धनादौ प्रवृत्तिदर्शनात् ननु पुरुषार्थोऽप्ययं ज्ञायमान एव मुक्तेस्तु दुःखाभावस्य ज्ञायमानतैव नास्ति अन्यथा मूर्च्छाद्यवस्थार्थमपि प्रवर्त्तेतेति चेन्न श्रुत्यनुमानाभ्यां ज्ञायमानस्यावेद्यत्वानुपपत्तेः। अस्ति हि श्रुतिः "दुःखेनात्यन्तं विमुक्तश्चरति" "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिका। अनुमानमप्यस्ति दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्यादि चरमदुःखध्वंसस्य दुःखसाक्षात्कारेण क्षणं विषयीकरणात् प्रत्यक्षवेद्यताऽपि। योगिनां योगजधर्मबलेनागामिनो दुःखध्वंसस्य प्रत्यक्षोपगमाच्च।

---

वि० धर्म्मजात्मनीतरभेदसाक्षात्कारदशायां तादृशसन्निकर्षेण साधर्म्यवैधर्म्याभ्यां द्रव्यादिषट्पदार्थज्ञानमपि जायते तत्सामग्रीसत्त्वादिति वाच्यं तादृशसाक्षात्कारस्य तादृशोदासीनसाधर्म्यादिविषयकत्वेऽपि तस्य प्रकृतानुपयोगितया मुनीनां तदभिधानस्योन्मत्तप्रलपितत्वापत्तेः यत्तूपस्कारकारैरात्मसाक्षात्कारस्य मोक्षहेतुतायां "तमेव विदित्वेति" श्रुतिः प्रमाणतयोपन्यस्ता तदप्यसङ्गतं "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इत्यनेन परमात्मन एवोपक्रान्तत्वेन तच्छब्दस्य तत्परतयाऽनुपक्रान्तजीवात्मपरत्वासम्भवादिति संक्षेपः अत्र षट्पदार्थकीर्त्तनं

उ० तथापि तुल्यायव्ययतया नायं पुरुषार्थो दुःखवत् सुखस्यापि हानेः द्वयोरपि समानसामग्रीकत्वादिति चेत् उत्सर्गतो वीतरागाणां दुःखदुर्द्दिनभीरूणां सुखखद्योतिकामात्रेऽस्वम्प्रत्ययवतां तत्र प्रवृत्तेः। ननु तथापि दुःखनिवृत्तिर्न पुरुषार्थः, अनागतदुःखनिवृत्तेरशक्यत्वात् अतीतदुःखस्यातीतत्वात् वर्त्तमानदुःखस्य पुरुषप्रयत्नमन्तरेणैव निवृत्तेरिति चेन्न हेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवत् तथाहि सवासनं मिथ्याज्ञानं संसारहेतुस्तदुच्छेदश्चात्मतत्त्वज्ञानात् तत्त्वज्ञानञ्च योगविधिसाध्यमिति तदर्थं प्रवृत्त्युपपत्तेः। ननु नित्यसुखाभिव्यक्तिरेव मुक्तिर्नतु दुःखाभाव इति चेन्न नित्यसुखे प्रमाणाभावात् भावेवानित्यं तदभिव्यक्तेर्मुक्तसंसारिणोरविशेषापातात् अभिव्यक्तेरुत्पाद्यत्वेन तन्निवृत्तौ पुनः संसारापत्तेश्च। ब्रह्मात्मनि जीवात्मलयो मुक्तिरिति चेन्न लयो यद्येकीभावस्तदाबा-

---

वि० भावाभिप्रायेण वस्तुतोऽभावोऽपि पदार्थान्तरतया मुनेरभिप्रेतः। अत एव द्वितीयाह्निके "कारणाभावात् कार्य्याभाव" इति सूत्रस्य नवमाध्याये "क्रियागुणव्यपदेशाभावात्" इत्यादि सूत्राणाञ्च नासङ्गतिः, अत एव न्यायलीलावत्यां "अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत् कारणाभावेन कार्य्याभावस्य सर्व्वसिद्धत्वादुपयोगित्वसिद्धेः" इत्यभिहितं न्यायाचार्य्यैरपि द्रव्यकिरणावल्यां "एते च पदार्थाः प्रधानतयोद्दिष्टाः अभावस्तु स्वरूपवानपि नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वात् नतु तुच्छत्वात्" इत्यन्तेनाभावस्य सप्तमपदार्थत्वमङ्गीकृतं तथाच स-

उ० धात् नहि द्वयमेकं भवति लिङ्गशरीरापगमो मयो लिङ्गञ्चैकादशेन्द्रियाणि तेषां शरीरस्य च विगमो मय इति चेन्न एतावता दुःखसामग्रीविरहस्योक्तत्वात् तथाच दुःखाभाव एव मुक्तिरिति पर्य्यवसानात्। एतेनाविद्यानिवृत्तौ केवलात्मस्थितिर्मुक्तिरात्मा च विज्ञानसुखात्मक इत्येकदण्डिमतमपास्तं आत्मनो ज्ञानत्वे सुखत्वे च प्रमाणाभावात्। नच "नित्यं विज्ञानमानन्दं ब्रह्मेति" श्रुतिर्मानं तस्या ज्ञानवत्त्वानन्दवत्त्वप्रतिपादकत्वात् भवति हि अहं जाने अहं सुखीतिप्रतीतिः नत्वहं ज्ञानम् अहंसुखमिति किञ्च ब्रह्मण इदानीमपि सत्त्वात् मुक्तसंसारिणोरविशेषापत्तिः अविद्यानिवृत्तेश्चापुरुषार्थत्वात् ब्रह्मणश्च नित्यत्वेनासाध्यत्वात् तत्साक्षात्कारस्य तदात्मकत्वेनासाध्यत्वात् एवमानन्दस्यापि तदात्मकत्वेनासाध्यत्वमेवेति तदर्थं

---

वि० ज्ञानामेव पदार्थानां साधर्म्म्यवैधर्म्म्यज्ञानं निःश्रेयसोपयोगि तदुपयोगिता चात्मनीतरभेदसाधने लिङ्गज्ञानादिविधयेति मन्तव्यम्, पदार्थविभाजकाश्च द्रव्यत्वादयः सप्तधर्म्माः तत्र द्रव्यत्वगुणत्वकर्म्मत्वानि जातयः नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वं जातिमद्भिन्नत्वे सत्येकमात्रसमवेतत्वं विशेषत्वं नित्यसम्बन्धत्वं समवायत्वं द्रव्यादिषट्कभिन्नत्वमभावत्वमिति अत्र प्रयोजनं निःश्रेयसं अभिधेयाः पदार्थाः सम्बन्धश्च शास्त्रनिःश्रेयसयोः पदार्थतत्त्वज्ञान-निःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः शास्त्र-पदार्थतत्त्वज्ञानयोः कार्य्यकारणभावः पदार्थतत्त्वज्ञानयोर्विषयविषयिभावः पदार्थ शास्त्रयोः प्रतिपाद्यप्रतिपादकभावश्च निःश्रेयसञ्च

उ° प्रवृत्त्यनुपपत्तिरेव। निरुपप्लवा चित्तसन्ततिर्मुक्तिरिति चेन्न दुःखादिरूपस्य उपप्लवस्य विगमो यदि निरुपप्लवत्वं तदा तन्मात्रस्यैव पुरुषार्थत्वेन चित्तसन्ततेरनुवृत्तौ प्रमाणाभावः तदनुवृत्तेरपि शरीरादिसाध्यत्वेन संसारानुवृत्तेरावश्यकत्वादिति सिद्धं दुःखनिवृत्तिरेवोक्तरूपा निःश्रेयसमिति। तत्त्वस्य ज्ञानमिति कर्म्मणि षष्ठी साधर्म्म्यवैधर्म्म्याभ्यामिति प्रकारे तृतीया। तत्र साधर्म्म्यमनुगतो धर्म्मः, वैधर्म्म्यञ्च व्यावृत्तो धर्म्मः यद्यपि कस्यचित् साधर्म्म्यमपि कुतश्चिद्वैधर्म्म्यं कुतश्चिद्वैधर्म्म्यमपि केषाञ्चित् साधर्म्म्यं तथापि तद्रूपेण ज्ञानं विवक्षितम्। अत्र च द्रव्यादिपदार्थानामुद्देश एव विभागः पर्य्यवसन्नः स च न्यूनाधिकसंख्याव्यवच्छेदफलकत्वेन षडेव पदार्था इति नियमः पर्य्यवस्यति तथानुपपन्नः व्यवच्छेदस्य पदार्थान्तरस्य

---

वि° न्यायवैशेषिकसांख्यमतेषु आत्यन्तिकदुःखनिवृत्तिरूपं स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसपर्य्यवसितम्। भवति हि चरमदुःखध्वंसः स्वसमानाधिकरणदुःखासमानकालीनः तदानीं मुक्तात्मनि कस्यापि दुःखस्यानुत्पत्तेः। न्यायैकदेशिमते आत्यन्तिकदुरितनिवृत्तिरेव मोक्षस्तस्यैव साक्षादात्मसाक्षात्कारसाध्यत्वात् "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इति श्रुतेः। एकदण्डिवेदान्तिमते अविद्यानिवृत्तिर्मोक्षः। अविद्या च पदार्थान्तरं त्रिदण्डिमते परमात्मनि जीवात्मनो लयो मोक्षः स च जीवोपाधिलिङ्गशरीरनिवृत्तिपर्य्यवसितः लिङ्गशरीरञ्च "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं

सू॰ प्रतिपत्तौ नियमानुपपत्तिः अप्रतीतौ व्यवच्छेदानुपपत्तिः। ननु नायमन्ययोगव्यवच्छेदः किन्त्वयोगव्यवच्छेदः पदार्थेषु षड्लक्षणायोगो व्यवच्छिद्यत इति चेन्न पदार्थपदेन प्रसिद्धपदार्थमात्रोपसङ्ग्रहे सिद्धसाधनात् अन्यस्य चाप्रतीतेरेव। किञ्च लक्षणानां मिलितानामयोगोव्यवच्छेद्यः प्रत्येकं वा आद्ये मिलितायोगः सर्व्वत्रेति व्यवच्छेदानुपपत्तिः। अन्त्येऽपि प्रत्येकायोगः परस्परं सर्व्वत्रेति व्यवच्छेदानुपपत्तिरेवेति चेन्न शक्तिसङ्ख्यासादृश्यादिषु पदार्थेषु पराभिमतेषु षड्लक्षणायोगः परैरुच्यते तद्व्यवच्छेदो नियमार्थः तथाच षडेव पदार्था इत्यस्य प्रतीयमानेषु सर्वां लक्षणानां मध्ये अन्यतमलक्षणयोगोऽस्त्येव बलयोग इत्यर्थः। तत्र विशेष्यसङ्गतस्यान्ययोगव्यवच्छेदो विशेषणसङ्गतस्यायोगव्यवच्छेदः क्रियासङ्गतस्य चात्यन्तायोगव्यवच्छेदस्तावत् प्रतीयते तत्र प्रकृतेत्रयमेवकारस्ये-

---

वि॰ तस्मात् भोगसाधनमिति” प्रतिपादितम्। भट्टास्तु नित्यसुखसाक्षात्कारो मोक्षः नित्यसुखञ्च श्रुतिसिद्धं सर्व्वजीवगतमपि संसारदशायामव्यक्तं आत्मतत्त्वसाक्षात्कारानन्तरमेव साक्षात्कृतं भवतीति प्राहुः, एषु मतेषु सम्भवन्तोऽपि दोषा ग्रन्थगौरवभयान्नोद्भाविताः किन्तु सर्व्वेषु मतेषु मुक्तताद्दशायामात्यन्तिकदुःखनिवृत्तिर्निराबाधैवेति दिक्। ननु शक्तिसादृश्यादयोऽप्यतिरिक्ताः सन्ति पदार्थाः कथमन्यथा मण्यादिसन्निधाने दहनेन दाहो न जन्यते जन्यते च तदसन्निधावतोमण्यादिदर्शने दाहानुकूलां शक्तिं नाशयति उत्तेजकं मण्याद्यपसरणञ्च

उ॰ त्येके व्यवच्छेदमाचे शक्तिरयोगान्ययोगादयस्तु व्यवच्छेदाः समभिव्याहारलभ्या इत्यपरे। धर्म्मविशेषप्रसूतादिति तत्त्वज्ञानादित्यस्य विशेषणं तत्र धर्म्मविशेषो निवृत्तिलक्षणो धर्म्मः यदि तु तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं शास्त्रमुच्यते तदा धर्म्मविशेष ईश्वरनियोगप्रसादरूपो वक्तव्यः श्रूयते ह्यीश्वरनियोगप्रसादावधिगम्य कणादो महर्षिः शास्त्रं प्रणीतवानिति तत्त्वज्ञानमात्मतत्त्वसाक्षात्कार इह विवक्षितस्तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वात् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽनाय" इत्यत्र "द्वे ब्रह्मणी वेदितव्ये" इत्यत्र च वेदनपदस्य साक्षात्कारपरत्वात् "पश्यत्यचक्षुः" इत्यत्रापि तथा स च शास्त्रान्मननिदिध्यासनादिपरम्परयेति हेतुपञ्चम्या तथैवाभिधानात्॥ ४॥

---

वि॰ पुनरुत्पादयतीत्यवश्यं कल्पनीयम्। एवं सादृश्यमपि पदार्थान्तरं तद्धि षट्सु भावेषु नान्तर्भवति सामान्येऽपि सत्त्वात् यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः नाप्यभावः भावत्वेन प्रतीयमानत्वादिति चेन्न मण्याद्यसमवहितवह्न्यादेः स्वातन्त्र्येण मण्यभावादेर्वा दाहादिकं प्रति हेतुताकल्पनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावतद्ध्वंसकल्पनानौचित्यात्। न चोत्तेजकसमवहितमणिसत्त्वेऽपि कथं दाह इति वाच्यं उत्तेजकासमवहितमणिसामान्याभावस्यैव तथात्वकल्पनात् एवं सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वं यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति संक्षेपः। ४॥

सू॰　पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥

---

उ॰　इदानीमपवर्गभागितया सर्व्वपदार्थाश्रयतया च प्रथमोद्दिष्टस्य द्रव्यपदार्थस्य विभागं विशेषोद्देशञ्च कुर्व्वन्नाह ॥

इतिकारोऽवधारणार्थः तेन नवैव द्रव्याणि नाधिकानि न न्यूनानि वेत्यर्थः। ननु विभागबलादेव न्यूनाधिकसङ्ख्याव्यवच्छेदसिद्धौ किमितिकारेणेति चेत् उद्देशमात्रपरतयाऽपि सूत्रसम्भवे विभागतात्पर्य्यस्फोरणार्थमेवेतिकाराभिधानात् सुवर्णादीनामीश्वरस्य चात्रैवान्तर्भावात् अन्धकारस्य चाधिकत्वेनाशङ्कनमागस्याभावलव्युत्पा-

---

वि॰　द्रव्याणि विभजते।

इतिशब्दोऽवधारणपरस्तेनोक्तानि नवैव द्रव्याणि नाधिकानि न वा न्यूनानीत्यर्थः। असमासकरणन्तु सर्व्वेषामितरनैरपेक्ष्येण कार्य्यविशेषोत्पादकताप्रदर्शनार्थं असमवेतकार्य्यजनने सर्व्वेषां तुल्यताज्ञापनार्थं वा न च विभागबलादेव न्यूनाधिकसङ्ख्याव्यवच्छेदसम्भवात् अवधारणार्थकेतिशब्दो व्यर्थ इति वाच्यं यतो विभागस्थले अवधारणवाचकपदासत्त्वे तदध्याहारेणैव न्यूनाधिकसङ्ख्याव्यवच्छेदो बोध्यते अत्र तदध्याहारं विनैव तादृशव्यवच्छेदबोधार्थमेव मुनिना इतिशब्दोऽभिहित इति ध्येयं द्रव्यत्वजातिस्तु कार्य्यसामान्यस्य संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया सिद्ध्यति ननु कन्दलीकारैः साङ्ख्याचार्य्यैश्च अन्धकारस्य द्रव्यत्वं स्वीकृतं युक्तञ्चैतत् कथमन्यथा नीलं तम-

उ० इत्यादेतद्ध्यवसेयम्। असमासकरणन्तु सर्व्वेषां प्राधान्य-प्रदर्शनाय लक्षणमेतेषान्तु वैधर्म्म्यावसरे सूत्रकृदेव दर्श-यिष्यति। ननु सुवर्णं न तावत् पृथिवी निर्गन्धत्वात् न जलं स्नेहसांसिद्धिकद्रवत्वशून्यत्वात् न तेजो गुरुत्ववत्त्वात् अतएव न वायु र्नवा कालादि ततो नवभ्यो भिद्यत इति चेन्न आद्यद्वितीययोरनाभासत्वं तृतीयस्य स्वरूपासिद्धत्वं ततः परं सिद्धसाधनं हेतोः स्वरूपासिद्धस्य। साधयिष्यते च सुवर्णस्य तैजसत्वमिति॥ ५॥

गुणत्वेन रूपेण गुणानां सर्व्वद्रव्याश्रितत्वं द्रव्याभिव्यञ्जकत्वं द्रव्याभिव्यञ्जकत्वञ्चेति द्रव्यानन्तरं गुणानामुद्देशं विभागञ्चाह।

---

वि० चलतीति गुरुक्रियाप्रत्ययस्तत्र लोकानां। स हि न पृथिवी नि-र्गन्धत्वात् नाप्यस्य जलादावन्तर्भावः नीलरूपवत्त्वात् तथा चा-धिकसङ्ख्याव्यवच्छेदः कथं सम्भवतीति चेन्न आवश्यकतेजोविशे-षाभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् नीलरूप-प्रतीतिस्तु गगन इव तत्र भ्रान्तिरूपा चलनप्रतीतिरपि आलो-कापसरणौपाधिकी भ्रान्तिरेव यथा नौकादिचलनौपाधिकी तीरस्थवृक्षादौ चलनप्रतीतिर्नौस्थानां। तमसो द्रव्यत्वकल्पनेऽन-न्ततदवयवप्रागभावध्वंसकल्पनापत्तेः कन्दलीकारमते तु तमसः पृथिव्यामन्तर्भाव इति न तन्मते व्यवच्छेदासङ्गतिरिति ध्येयम्। अत्र नवसु द्रव्यविभाजकेषु गगनत्वकालत्वदिक्त्वानामेकैकमात्र-वृत्तित्वान्न जातित्वं शेषाणां पुनर्जातित्वमेवेति॥ ५॥

गुणान् विभजते।

सू० रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथ-

उ० चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दान् समुच्चिनोति ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः। गुणत्वञ्चामीषां यथास्थानं लक्षणतः स्वरूपतश्च वक्ष्यति रूपरसगन्धस्पर्शानां समानकालीनरूपरसगन्धस्पर्शसामानाधिकरण्यं नास्तीति सूचनार्थं समासः। सङ्ख्यापरिमाणयोस्तु समानकालीनसङ्ख्यापरिमाणसामानाधिकरण्यसूचनायासमासो बहुवचननिर्देशश्च यद्यप्येकत्वसमानाधिकरणं नैकत्वान्तरं न वा महत्त्वदीर्घत्वसमानाधिकरणं महत्त्वदीर्घत्वान्तरं तथापि द्वित्वादीनामन्योऽन्यं सामानाधिकरण्यं महत्त्वदीर्घत्वादीनाञ्च विजातीयपरिमाणयोः सामानाधिकरण्यमस्त्येव। पृथक्त्वञ्च यद्यपि द्विपृथक्त्वादिसमानाधिकरणं तेन सङ्ख्यावद्बहुत्वेनैव निर्देष्टुमर्हति तथाप्यवधिव्यङ्ग्यत्वलक्षणं सङ्ख्यातो वैधर्म्यं सूचयितुमेकवचननिर्देशः। संयोगविभागयोर्द्वयोरप्येककर्मजन्यत्वसूचनाय द्विवचनं परत्वापरत्वयोरन्योन्याश्रयनिरूप्यतया

वि० अत्रानुक्तसमुच्चायकचकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दानामुपग्रहः, अतएव भाष्ये "चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्काराऽदृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः" इति प्रशस्तदेवाचार्य्यैरभिहितम्। अत्र गुणविभागवाक्ये रूपत्वादीनि सर्व्वाण्येव जातयः सूत्रकारस्तु वैलक्षण्यज्ञापकभाव-

सू॰ कृत्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुख-
दुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥

---

उ॰ दिक्काललिङ्गत्वाविशेषसूचनाय च द्विवचनं बुद्धीनां विद्यादिभेदेन साङ्ख्याभिमतैकमात्रबुद्धिनिराकरणसूचनाय बहुवचनं सुखदुःखयोर्द्वयोरपि भोगत्वावच्छेदेनैककार्य्यजनकत्वम्अविशेषेण चादृष्टोन्नायकत्वं सुखस्यापि दुःखत्वेन भावनञ्च स्थापयितुं द्विवचनं इच्छाद्वेषयोर्द्वयोरपि प्रवृत्तिं प्रति कारणत्वसूचनाय द्विवचनं प्रयत्नानां विहितनिषिद्धगोचराणां द्व्यविधानां पुण्यहेतुत्वं द्व्यविधानाञ्च पापहेतुत्वमभिमन्धाय बहुवचनमित्युन्नेयम्।

यद्वा रूपरसगन्धस्पर्शानां भौतिकेन्द्रियव्यवस्थाहेतुत्वज्ञापनार्थं पाकजप्रक्रियाव्यवस्थापनार्थं वा ते समस्योक्ताः सङ्ख्यायां द्वित्वबहुत्वादौ विप्रतिपत्तिरिति तन्निराकरणसूचनार्थं बहुत्वेनाभिधानं पृथक्त्वे तु सङ्ख्याबहुत्वेनैवाप्यापि बहुत्वमिति सूचनायावधिज्ञानव्यञ्जनीयत्वं सङ्ख्यातो वैधर्म्यमिति सूचनाय च पृथगभिधानं परिमाणे तु

---

वि॰ नास्तु वर्त्तमानं संस्कारत्वं न जातिः प्रमाणाभावादित्याह। अथ गुणत्वजातौ किम्मानमिति चेत् इदं द्रव्यकर्म्मभिन्नसामान्यवति या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना निरवच्छिन्नकारणताया असम्भवात् नहि रूपत्वादिकं सत्ता वा तदवच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात् अतश्चतुर्विंशत्यनुगतं वाच्यं

सू॰ उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि ॥ ७ ॥

---

उ॰ दीर्घत्वह्रस्वत्वादिविप्रतिपत्तिनिरासाय बहुवचनं संयोगविभागयोरन्योन्यविरोधज्ञापनाय द्विवचनं परत्वापरत्वयोर्दैशिककालिकभेदेन भिन्नजातीयत्वसम्भवेन चतुष्ट्वापत्तौ गुणविभागो न्यूनः स्यात् इति तत्रापि द्विवचनमित्याद्युन्नेयम्। एतेषाञ्च लक्षणमग्रे वक्ष्यते ॥ ६ ॥

कर्म्मणां द्रव्यजन्यतया गुणजन्यतया च रूपवद्द्रव्यसमवायाच्च प्रत्यक्षतेति द्रव्यगुणाभिधानानन्तरं कर्म्मोद्देशविभागावाह।

उत्क्षेपणं अवक्षेपणं आकुञ्चनं प्रसारणं गमनमिति कर्म्माणि इतिरवधारणार्थः भ्रमणादेरपि गमनान्तर्गतत्वात् अत्र च उत्क्षेपणत्वावक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्वानि कर्म्मत्वसाक्षाद्व्याप्याः पञ्च जातयः। नन्वेतदनुपपन्नं

---

वि॰ तदेव गुरुत्वमिति मुक्तावलीकारः। नव्यास्तु गुरुत्वजातिः प्रत्यक्षसिद्धा इन्द्रियसंयुक्तसमवेतसमवायतस्तत्प्रत्यक्षसम्भवात् नच तद्व्यञ्जकविरहान्न तत्प्रत्यक्षमिति वाच्यं सर्व्वत्र व्यञ्जकस्य जातिप्रत्यक्षप्रयोजकत्वे प्रमाणाभावात् अन्यथा रूपत्वादेरप्यप्रत्यक्षतापत्तेरिति प्राहुः ॥ ६ ॥

कर्म्माणि विभजते।

इतिः पूर्व्ववदवधारणपरः। कर्म्मत्वजातिः प्रत्यक्षसिद्धा एवमुत्क्षेपणत्वादिकमपीति मुक्तावलीकारः। गमनत्वञ्च जातिविशेषो

उ० गमनस्य कर्म्मपर्य्यायत्वात् सर्व्वत्र गच्छतीति बुद्धेर्दृष्टत्वादुत्क्षेपणत्वादीनां चतसृणां जातीनां परस्परात्यन्ताभाव-समानाधिकरणानां सामानाधिकरण्याननुभवात् चतस्र एव कर्म्मत्वव्याप्या जातय इति चेत् सत्यं कर्म्मपर्य्याय एव गमनं पृथगभिधानन्तु भ्रमणरेचनस्यन्दनोर्द्ध्वज्वलनगमनोन्नमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन सङ्ग्रहार्थं यद्वा गमनत्वमपि कर्म्मत्वव्याप्या पञ्चमी जातिरेव तेन भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः उत्क्षेपणावक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्म्मः गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकं तच्च भ्रमणादिषु सर्व्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति। निष्क्रमणत्वप्रवेशनत्वादिका तु न जातिः एकस्मिन्नेव कर्म्मणि गृहाद् गृहान्तरं गच्छति पुरुषे कस्यचित् द्रष्टुः प्रविशतीति प्रत्ययः कस्यचित्तु निष्क्रामतीति तत्र जातिसङ्करः स्यात् तथा भ्रमणादेरेकस्या जलप्रणाल्या निष्क्रम्यापरां प्रविशति निष्क्रामति प्रविशतीति प्रत्ययद्वयदर्शनादुपाधिसा-

---

वि० भ्रमणरेचनस्यन्दनोर्द्ध्वज्वलनगमनोन्नमनादिष्वपि वर्त्ततेऽतो नाधिक्यं तद्व्यञ्जकञ्च नियतदिग्देशसंयोगविभागकारणत्वं उत्क्षेपणादिषु गमनव्यवहारो भाक्तः स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्म्मः। निष्क्रमणत्वप्रवेशन-

उ० मान्यमेवैतदध्यवसेयम्। उत्क्षेपणादौ तु मुषलमुत्क्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगादसमवायिकारणाद्धस्ते तावदुत्क्षेपणं तत उत्क्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् मुषलेऽप्युत्क्षेपणाख्यं कर्म युगपद्वा तत ऊर्द्धमुत्क्षिप्तयोर्हस्तमुषलयोरवक्षेपणेच्छाजनितप्रयत्नवदात्मसंयोगाद्धस्तनोदनाच्च युगपदेव हस्ते मुषले चावक्षेपणं उलूखलपातानुकूलं संजायते ततो दृढतरद्रव्यसंयोगाद् यदकस्मान्मुषलस्योर्द्धगमनं भवति तत्र नेच्छा न वा प्रयत्नः कारणं किन्तु संस्कारमात्रादेव मुषलस्योत्पतनं तच्च गमनमात्रं नतूत्क्षेपणं भाक्तस्तत्रोत्क्षेपणव्यवहारः एवमनुलोमप्रतिलोमवायुद्वयसङ्घट्टवशाद्दाय्वोस्तत्प्रेरिततृणतूलकादौ चोत्क्षेपणव्यवहारो भाक्तः। एवं स्रोतोद्वयसङ्घट्टवशाज्जलोर्द्धगमनेऽपि। एवमुत्क्षेपणावक्षेपणव्यवहारः शरीरतदवयवतत्संयुक्तमुषलतोमरादिष्वेव मुख्यः भवति हि हस्तमुत्क्षिपति मुषलमुत्क्षिपति तोमरमुत्क्षिपतीति एवमवक्षिपतीत्यपि। आकुञ्चनन्तु यत्रैवावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगो-

---

वि० त्वादिका तु न जातिः एकस्मिन्नेव कर्म्मणि एकस्मादावरकादावरकान्तरं गच्छति मुषले प्रविशत्ययमिति कस्यचिद्भ्रमः प्रत्ययः कस्यचिच्च निष्क्रामतीत्यतो जातिसङ्करप्रसङ्गात्। जगदीशतर्कालङ्कारास्तु ऊर्द्धसंयोगफलकक्रियावच्छिन्नव्यापारत्वमेवोत्क्षेपण-

उ॰ त्पादकं वस्त्रावयविकौटिल्योत्पादकं कर्म्म यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्म्मेतिप्रत्ययः एवमवयवानां पूर्व्वोत्पन्नानारम्भकसंयोगविनाशकं कर्म्म प्रसारणं यतो भवति प्रसरति वस्त्रं प्रसरति चर्म्म प्रविकसति पद्ममित्यादि प्रत्ययः, एतच्चतुष्टयभिन्नं यत् कर्म्मजातं तत्सर्व्वं गमनविशेषः। तत्र भ्रमणं प्रयत्नवदात्मसंयोगाद्धस्ते कर्म्मवता हस्तेन नोदनाख्यसंयोगादवयवनाश्च चक्रादौ तिर्य्यक्संयोगानुकूलं कर्म्म एवं रेचनाद्यपि व्याख्येयं स्फुटीकरिष्यति चाग्रे तदेतेषां कर्म्मणां विहितयागस्नानदानादिषु धर्म्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वं निषिद्धदेशगमनहिंसाकलञ्जभक्षणादिषु चाधर्म्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वमध्यवसेयमिति ॥ ७ ॥

द्रव्यादीनामुद्देशानन्तरं त्रयाणां साधर्म्म्यप्रकरणमारभते। तत्र द्रव्यादीनां त्रयाणां साधर्म्म्यस्य तत्त्वज्ञानानुकूलतया प्रथमं शिष्याकाङ्क्षितत्वात् सामान्यादिपदार्थत्रयस्य उद्देशात् प्रागेव त्रयाणां साधर्म्म्यमाह।

---

वि॰ त्वं तदेवोत्क्षिपतीत्यत्र धात्वर्थतावच्छेदकं नतूत्क्षेपणत्वं जातिः प्रवेशनत्वादिना सङ्करात् लोष्टमुत्क्षिपतीत्यादौ लोष्टादेः कर्म्मत्वानुपपत्तेश्चेति प्रकाशिकायां प्राह। गमनत्वञ्च न जातिः किन्तु संयोगावच्छिन्नक्रियात्वमेवेति तु नव्याः ॥ ७ ॥

इदानीं द्रव्यगुणकर्म्मणां साधर्म्म्यमाह।

सू॰　सदनित्यं द्रव्यवत्कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेषः ॥ ८ ॥

उ॰　विशेषे सत्यपि प्रथमविशेषशब्दः साधर्म्म्यपरः। सदिति सदाकारप्रत्ययव्यपदेशविषयत्वं त्रयाणामेव सत्तायोगित्वात् अनित्यमिति ध्वंसप्रतियोगित्वं यद्यपि न परमाण्वादिसाधारणं तथापि ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। द्रव्यवदिति द्रव्यं समवायिकारणतयाऽस्यास्तीति द्रव्यवत् एतदपि परमाण्वादौ नास्तीति द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कार्य्यमिति प्रागभावप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। कारणमिति स्वान्येतरकार्य्यनियतपूर्व्ववर्त्तिजातीयवृत्तिपदार्थविभाजकोपाधिमत्त्वं तेन स्वसाक्षात्कारे विषयतयाकारणे गोत्वादौ नातिप्रसक्तिर्नवापारिमाण्डल्यादावजनकेऽव्याप्तिः सामान्यविशेषवदिति सामान्यंसद्विशेषोऽन्योन्यव्यावर्त्तकतया द्रव्यत्वगुणत्वकर्म्मत्वादि तद्वत्त्वमित्यर्थः। ननु "गां दद्यात्"

वि॰　इतीत्यनन्तरं प्रत्यय इत्यध्याहार्य्यम्, सामान्यं सद्विशेषो द्रव्यत्वादि तद्वत्। सदित्यादिप्रत्ययो यथा द्रव्ये तथा गुणकर्म्मणोरपि तत्र न कश्चित् विशेषः। तथाच सत्तावत्त्वं ध्वंसप्रतियोगित्वं द्रव्यसमवायिकारणकत्वं प्रागभावप्रतियोगित्वं कारणत्वं सत्ताव्याप्यजातिमत्त्वञ्च द्रव्यगुणकर्म्मणां साधर्म्म्यमिति भावः। यद्यप्यनित्यत्वादिकं नित्ये द्रव्ये गुणे चाव्याप्तं कारणत्वञ्च पारिमाण्डल्यादौ

सू॰ द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्॥९॥

---

उ॰ "गौः पदा न स्प्रष्टव्या" इति श्रुतेर्धर्माधर्मजनकत्वं जातेरपीति कारणत्वमतिव्याप्तीति येन अवच्छेदकतामात्रेण जातेर्विनियोगात्। उपलक्षणञ्चैतत् स्वसमवायार्थशब्दाभिधेयत्वमपि त्रयाणां साधर्म्यं द्रष्टव्यम्, यदि तु कार्य्यत्वानित्यत्वे कारणवतामेव "कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्य" इति प्रशस्तदेवाचार्य्यव्यवस्थितं साधर्म्यमुच्यते तदा पदार्थविभाजकोपाधिमत्तया न विशेष्यं सूत्रोक्तरीत्या त्रयाणां गुणजनकत्वं गुणजन्यत्वञ्चान्यत्र नित्यद्रव्येभ्य इति॥ ८॥

इदानीं द्रव्यगुणयोरेव साधर्म्यमाह।

एतदेव सूत्रान्तरेण स्पष्टयति॥ ९॥

---

वि॰ तथापि ध्वंसप्रतियोगिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं अनित्यत्वं द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यवत्त्वं प्रागभावप्रतियोगिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं कार्य्यत्वं समवाय्यसमवाय्यन्यतरकारणवृत्तिपदार्थविभाजकोपाधिमत्त्वं कारणत्वं द्रव्यादीनां साधर्म्यमित्यत्र तात्पर्य्यं प्रथमं चरमञ्च यथाश्रुतमेवेति हृदयम्। इदमुपलक्षणं समवायानुयोगित्वम् अर्थशब्दाभिधेयत्वञ्च तेषां साधर्म्यं बोध्यम्॥ ८॥

द्रव्यगुणयोः साधर्म्यमाह।

पार्थिवाः परमाणवः पार्थिवं द्व्यणुकमारभन्ते परमाणुनीलरूपादिकञ्च द्व्यणुकादिगतं नीलरूपादिकमारभते इति द्रव्यगुणयोः सजातीयारम्भकत्वं यद्यपि गगनादावन्त्यावयविनि तद्गुणे चा-

सू॰ द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्॥ १०॥

कर्म्म कर्म्मसाध्यं न विद्यते॥ ११॥

उ॰ अन्त्यावयविविभुद्रव्याणि तथान्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादीन् गुणांश्च विहाय सजातीयारम्भकत्वं साधर्म्म्यं द्रष्टव्यं सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा विवक्षितं तेनाजनकद्रव्यव्यक्तीनामप्युपपद्यते॥ १०॥

ननु कर्म्माणि कुतो न कर्म्मान्तरमारभन्त इत्यत आह।

विधिरयं ज्ञानार्थी नतु सत्ताभिधायी। सजातीयारम्भद्रव्यगुणयोरिव कर्म्मसाध्ये कर्म्मणि प्रमाणं नास्तीत्यर्थः। इदमत्राकूतम्। कर्म्म यदि कर्म्म जनयेत् स्वोत्पत्त्यनन्तरमेव जनयेत् शब्दवत्। तथाच पूर्व्वकर्म्मणैव यावत् संयोगिद्रव्येभ्यो विभागे जनिते द्वितीयं कर्म्म केन सह विभागं

वि॰ व्याप्तित्वयापि सजातीयारम्भकवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य साधर्म्म्यत्वे तात्पर्य्यम्॥ ६॥

पूर्व्वोक्तमेव स्पष्टयति।

सुगमम्॥ १०॥

नैतादृशं कर्म्मेत्याह।

कर्म्मसाध्यं कर्म्म न विद्यते तथाच प्रमाणाभावान्न कर्म्मणः कर्म्मारम्भकत्वमिति भावः। अयमभिसन्धिः क्रिया चेत् क्रियान्तरं जनयेत् तदा स्वोत्पत्तिद्वितीयक्षण एव जनयेत् शब्दवत्

सू॰ न द्रव्यं कार्य्यं कारणञ्च बधति॥ १२॥

उ॰ जनयेत् विभागस्य संयोगपूर्व्वकत्वात् संयोगान्तरस्य च तत्राधिकरणेऽनुत्पन्नत्वात् विभागाजनने तु कर्म्मलक्षणक्षतेः नच क्षणान्तरे कर्म्मान्तरं जनयिष्यतीति वाच्यं समर्थस्य क्षेपायोगात् अपेक्षणीयान्तराभावात् पूर्व्वसंयोगनाशक्षणेऽपि जनने विभागजनकत्वानुपपत्तिरेव उत्तरसंयोगोत्पत्तिकालेऽपि जनने तथैव। उत्तरसंयोगोत्पत्त्यनन्तरकालन्तु कर्म्मनाश एव तथाच सुष्ठूक्तं कर्म्म कर्म्मसाध्यं न विद्यत इति॥ ११॥

गुणकर्म्मभ्यां द्रव्यस्य वैधर्म्म्यमाह।

द्रव्यं न स्वकार्य्यं हन्ति न वा स्वकारणं हन्ति कार्य्यकारणभावापन्नयोर्द्रव्ययोर्बध्यघातकभावो नास्तीत्यर्थः। आश्रयनाशारम्भकसंयोगनाशाभ्यामेवद्रव्यनाशादितिभावः। बधतीति सौत्रो निर्द्देशः॥ १२॥

---

वि॰ सत्यां हि सामग्र्यां फलविलम्बस्यादृष्टचरत्वात् तथाच प्रथमकर्म्मणैव विभागे जनिते द्वितीयं कर्म्म कतमं विभागं जनयिष्यति विभागाजनने च तस्य कर्म्मत्वानुपपत्तिः संयोगविभागयोरनपेक्षकारणं कर्म्मेति तल्लक्षणादिति॥ ११॥

इदानीं गुणकर्म्मभ्यां द्रव्यस्य वैधर्म्म्यमाह।

द्रव्यं स्वस्य कार्य्यं कारणं वा न हन्तीत्यर्थः। बधतीति सौत्रः प्रयोगः। अयं भावः अन्यद्द्रव्यं हि आश्रयनाशादारम्भकसंयोगनाशाद्वा नश्यति नतु द्रव्यस्य कारणं कार्य्यं वा तन्नाशयतीति॥ ॥ १२॥

सू॰ उभयथा गुणाः ॥ १३ ॥

कार्य्यविरोधि कर्म्म ॥ १४ ॥

---

उ॰ गुणस्य कार्य्यकारणबध्यत्वमाह।

कार्य्यबध्याः कारणबध्यास्चेत्यर्थः, आद्यशब्दादीनां कार्य्यबध्यत्वं चरमस्य तु कारणबध्यत्वम् उपान्त्येन शब्देन अन्त्यस्य नाशात् ॥ १३ ॥

गुणानां कार्य्यकारणोभयविरोधित्वमुक्त्वा कर्म्मणः कार्य्यविरोधित्वमाह।

कार्य्यं विरोधि यस्येति बहुव्रीहिः स्वजन्योत्तरसंयोगनाश्यत्वात् कर्म्मणः द्रव्याणां कार्य्यकारणाविरोधित्वं नियतमेव गुणकर्म्मणोस्त्वनियमः आश्रयनाशासमवायिकारणनाशनिमित्तनाशविरोधिगुणानां नाशकत्वस्य वक्ष्यमाणत्वात् ॥ १४ ॥

शिष्याकाङ्क्षानुरोधेन त्रयाणां साधर्म्म्यमभिधायेदानीं त्रयाणां लक्षणमारभमाण आह।

---

वि॰ नैतादृशा गुणा इत्याह।

कश्चिद्गुणः स्वकार्य्येण नाश्यते यथादिमः शब्दो द्वितीयेन शब्देन कश्चिच्च स्वकारणेन नाश्यते यथोपान्त्यशब्देनान्त्यशब्दः ॥ ॥ १३ ॥

स्वकार्य्यमेव कर्म्मणो नाशकमित्याह।

कार्य्येणोत्तरसंयोगरूपेण हतो यो विरोधो नाशस्तद्वत् कर्म्मेत्यर्थः। अथवा कार्य्यं विरोधि नाशकं यस्येति बहुव्रीहिः ॥ १४ ॥

द्रव्यस्य लक्षणमाह।

सू॰ क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १५ ॥

---

उ॰ क्रियाश्च गुणाश्च विद्यन्तेऽस्मिन्निति क्रियागुणवत् अत्र लक्षणशब्दो लिङ्गवचनः समानासमानजातीयव्यवच्छेदकव्यतिरेकिलिङ्गविशेषवचनश्च लक्ष्यतेऽनेनेति व्युत्पत्तिबलात् तत्र क्रियया कर्म्मणा द्रव्यमिदमिति लक्ष्यते गुणवत्त्वेन च समानासमानजातीयेभ्यो व्यावृत्तं द्रव्यं लक्ष्यते तत्र समानजातीया भावत्वेन गुणादयः पञ्च असमानजातीयस्त्वभावः तेन द्रव्यं गुणादिभ्यो भिन्नं गुणवत्त्वात् यन्न गुणादिभ्यो भिद्यते तन्न गुणवत् यथा गुणादीति। गुणवत्त्वं यद्यप्याद्यक्षणेऽवयविनि नास्ति तथापि गुणात्यन्ताभावविरोधिमत्त्वं विवक्षितं गुणप्रागभावप्रध्वंसयोरपि गुणात्यन्ताभावविरोधित्वात् एवं समवायिकारणत्वमपि

---

वि॰ क्रियाश्च गुणाश्च सन्त्यस्मिन्निति क्रियागुणवत् अत्र क्रियावत्त्वं कर्म्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं नातो गगनादावव्याप्तिः यद्वात्र क्रियावत्त्वं स्वजन्यसंयोगवत्त्वसम्बन्धेन स्वजन्यविभागवत्त्वसम्बन्धेन वा बोध्यम्। उपस्कारकारास्तु चिह्नत्वरूपलक्षणत्वं क्रियायाः गुणवत्त्वसमवायिकारणत्वयोश्च समानासमानजातीयव्यवच्छेदकत्वरूपलक्षणत्वं लक्ष्यतेऽनेनेति व्युत्पत्तेर्द्विविधलक्षणबोधादित्याहुस्तच्चिन्त्यम्, इतरभेदानुमापकत्वातिरिक्तस्य चिह्नत्वस्य दुर्वचत्वात् नच द्रव्यत्वसामानाधिकरण्येनेतरभेदानुमापकत्वं द्रव्यचिह्नत्वं तदवच्छेदेनेतरभेदानुमापकत्वञ्च व्यवच्छेदकत्वं नातो-

सू॰ द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणम-नपेक्ष इति गुणलक्षणम् ॥ १६ ॥

---

उ॰ षट्पदार्थभेदकमेव द्रव्यपदार्थस्य लक्षणं न च साध्याप्रसिद्धिर्गुणादिभेदस्य घटादावेव प्रत्यक्षसिद्धत्वात् न चात्र सिद्धसाधनं घटत्वावच्छेदेनेतरभेदस्य सिद्धत्वेऽपि द्रव्यत्वावच्छेदेन साध्यत्वात् पक्षतावच्छेदकभेदे न सिद्धसाधनं यथा नित्ये वाङ्मनसे इत्यत्र इति केचित्तन्न पक्षतावच्छेदकावच्छिन्ने क्वचिदपि साध्यसिद्धौ पक्षतापत्तेस्तथाप्यावश्यकत्वात् इतिशब्दश्च इत्यादिपरस्तेन सङ्ख्यावत्त्वपरिमाणवत्त्वपृथक्त्ववत्त्वसंयोगवत्त्वविभागवत्त्वान्यपि द्रव्यलक्षणत्वेन सङ्गृह्यन्ते ॥ १५ ॥

द्रव्यानन्तरं गुणानामुद्देशात् तल्लक्षणमाह ।

द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी एतच्च द्रव्येऽपि गतमत आह अगुणवानिति तथापि कर्म्मण्यतिव्याप्तिरि-

---

वि॰ भावासिद्धेरिति वाच्यं गन्धवत्त्वादेरपि द्रव्यचिह्नत्वापत्तेर्नचेष्टापत्तिरुद्देशलक्षणपरीक्षाप्रकाशकशास्त्रेषु केनापि मुनिना निबन्धकारेण वा चिह्नरूपलक्षणस्यानभिधानादित्यलमनल्पजल्पनेन । चेति शब्दो समस्तसूचकः तेन सङ्ख्यादीनां पञ्चानां प्रत्येकस्यापि लक्षणत्वं सूचितमिति दिक् ॥ १५ ॥

गुणलक्षणमाह ।

द्रव्यरूपो य आश्रयः सोऽस्यास्तीति द्रव्यमाश्रयितुं शीलं यस्येति वा द्रव्याश्रयी यद्यपि द्रव्याश्रितत्वं द्रव्यकर्म्मादावतिव्याप्तं

उ॰ त्यत आह संयोगविभागेष्वकारणं तथापि संयोग-
विभागधर्म्माधर्म्मेश्वरज्ञानादीनामसङ्ग्रहःस्यादतउक्तमनपेक्ष-
इति अचानपेक्ष इत्यनन्तरं गुण इति पूरणीयं संयोग-
विभागेष्वनपेक्षः सन् कारणं यो न भवति स गुणइत्यर्थः।
संयोगविभागादीनां संयोगविभागौ प्रति सापेक्षत्वात्।
नित्यवृत्तिनित्यवृत्तिसत्ताव्याप्यजातिमत्त्वं गुणत्वं संयोग-
विभागौ मिलितौ प्रति समवायिकारणत्वासमवायिका-
रणत्वरहिते सामान्यवति यत् कारणत्वं तद्गुणत्वाभिव्य-
ञ्जकं संयोगविभागयोः प्रत्येकमेव संयोगविभागकारणकत्वं
न मिलितयोः धर्म्माधर्म्मेश्वरज्ञानादीनां द्वयोर्निमित्त-
कारणत्वमात्रं न समवायिकारणत्वं नाप्यसमवायिकारण-
त्वमिति तेषां सङ्ग्रहः, यद्वा संयोगविभागसमवायित्वा-
समवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्व-
व्यञ्जकं सामान्यवत्त्वे सति कर्म्मान्यत्वे च सत्यगुणवत्त्वमेव
वा गुणलक्षणम्॥ १६॥

---

वि॰ तथापि सकलद्रव्यगताश्रयता निरूपकतावच्छेदकसत्तान्यजाति-
मत्त्वस्य लक्षणत्वे तात्पर्य्यं द्रव्यत्वं कर्म्मत्वञ्च न तादृशं गगनादौ
द्रव्यकर्म्मणोराश्रयत्वाभावात् सामान्यत्वञ्च न जातिः सत्ताया-
स्तादृशत्वेऽपि न सत्तान्यत्वमिति अगुणवानित्यादि अनपेक्षइत्य-
न्तमेकं लक्षणम्, अनपेक्ष इत्यनन्तरं गुण इति लक्ष्यपदं पूर-
णीयं संयोगविभागेषु निरपेक्षः स्वोत्तरभावानपेक्षः सन् कारणं
यो न भवति कर्म्मभिन्न इति फलितार्थः सामान्यवानिति पूरणीयं
तथाच गुणवद्भिन्नः कर्म्मान्यो यः सामान्यवान् स गुण इत्यर्थः।

सू॰ एकद्रव्यमगुणं *संयोगविभागेष्वनपेक्षकारण-
मिति कर्म्मलक्षणम् ॥ १७ ॥

उ॰ गुणानन्तरमुद्दिष्टस्य कर्म्मणो लक्षणमाह।

एकमेव द्रव्यम् आश्रयो यस्य तदेकद्रव्यं न विद्यते गुणोऽस्मिन्नित्यगुणं संयोगविभागेष्वनपेक्षकारणमिति स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षमित्यर्थः। तेन समवायिकारणापेक्षायां पूर्व्वसंयोगाभावापेक्षायाञ्च नाविरुद्धत्वं स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वं वा विवक्षितं पूर्व्वसंयोगध्वंसस्यापि स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वात् अभावत्वेन तस्याग्रहणसम्बन्धाभावात् नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्म्मत्वं चलतीतिप्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा गुणान्यनिर्गुणमात्रवृत्तिजातिमत्त्वं वा

वि॰ द्रव्यकर्म्मणोर्व्युदासाय विशेषणद्वयं सामान्यादिव्युदासार्थं विशेष्यद्वयमिति ॥ १६ ॥

कर्म्मलक्षणमाह।

एकं द्रव्यमाश्रयो यस्य तदेकद्रव्यं यथावयविद्रव्यं संयोगादिगुणाश्चानेकाश्रिताः तथा किमपि कर्म्म नानेकाश्रितं तथाचानेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्म्मणो लक्षणमित्यर्थः अगुणमिति गुणवद्भिन्नमित्यर्थः तथाच गुणवद्भिन्नवृत्तिगुणावृत्तिजातिमत्त्वं पर्य्यवसितं लक्षणं संयोगविभागेषु स्वागन्तरोत्पन्नभावनैरपेक्ष्येण कारणत्वं तृतीयं लक्षणं कर्म्मण उत्तर-

* संयोगविभागयोरित्यपि क्वचित् पाठः।

सू० द्रव्यगुणकर्म्मणां द्रव्यं कारणं सामान्यम्॥१८॥

उ० स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिविभागकारणतावच्छेदकजातिमत्त्वं वा स चायं चलतीतिप्रत्ययसाक्षिकः पदार्थो नाविरलदेशोत्पादनादिनोपपाद्यः क्षणभङ्गस्याग्रे निराकरिष्यमाणत्वात्। लक्षणस्य इतरभेदसाधकताप्रकारः पूर्व्वोक्त एव॥१७॥

इदानीं कारणमुखेन त्रयाणामेव साधर्म्यप्रकरणमुपक्रमते।

समानमेव सामान्यं एकमित्यर्थः अनयोः समाना मातेतिवत्। एकस्मिन्नेव द्रव्ये समवायिकारणे द्रव्यगुणकर्म्माणि वर्त्तन्ते इत्यर्थः द्रव्यसमवायिकारणकवृत्तिजातिमत्त्वं त्रयाणां साधर्म्यम्॥१८॥

गुणासमवायिकारणकत्वं त्रयाणां साधर्म्यमाह।

---

वि० संयोगजनने समवायिद्रव्यकालादृष्टेश्वरादिभावापेक्षत्वात् पूर्व्वसंयोगनाशापेक्षत्वाच्च स्वानन्तरोत्पन्नभावेष्वधिकमन्यत्रानुसन्धेयम्। सूत्रे संयोगविभागयोरिति समस्तपाठो मुक्तावली-कारादिसम्मतः॥१७॥

कारणकथनव्याजेन त्रयाणां साधर्म्यमाह।

समानमेव सामान्यं स्वार्थिकप्रत्ययात् एकमित्यर्थः अनयोः समानमधिकरणमितिवत् द्रव्यगुणकर्म्मणां त्रयाणामेव समवायिकारणमेकं द्रव्यं तथाच द्रव्यसमवायिकारणकवृत्तिपदार्थविभाजकोपाधिमत्त्वं त्रयाणां साधर्म्यमित्यर्थः॥१८॥

साधर्म्यान्तरमाह।

सू॰ तथा गुणः॥ १९॥

---

उ॰ गुणासमवायिकारणकवृत्तिजातिमत्त्वं त्रितयसाधर्म्यं द्रव्याणां संयोगोऽसमवायिकारणं कार्य्यगुणानां रूपरस-गन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वादीनां सजातीयकारण-गुणासमवायिकारणकत्वं बुद्ध्यादीनामात्मगुणानां मनः-संयोगासमवायिकारणकत्वं पार्थिवपरमाणुगुणानामग्नि-संयोगासमवायिकारणकत्वं कर्म्मणान्तु वन्ह्यादिनोदना-भिघातगुरुत्वद्रवत्वसंस्काराद्दृष्टवदात्मसंयोगप्रयत्नवदात्म-संयोगाद्यसमवायिकारणकत्वं यथायथं स्वयमूहनीयम्। क्वचिदेकस्यापि गुणस्य त्रयाणां द्रव्यगुणकर्म्मणामारम्भ-कत्वं तद्यथा वेगवत्तूलपिण्डसंयोगस्तूलपिण्डान्तरे कर्म्म करोति द्वितूलकञ्च द्रव्यमारभते तत्परिमाणञ्च। क्वचि-देको गुणो द्रव्यगुणावारभते यथा तूलपिण्डसंयोग एव वेगानपेक्षप्रचयाख्यो द्वितूलकं द्रव्यं तत्परिमाणञ्चार-भते॥ १९॥

---

वि॰ द्रव्यगुणकर्म्मणां त्रयाणां यथा एकं द्रव्यं समवायिकारणं तथा एको गुणोऽसमवायिकारणं तथाच गुणासमवायिकार-णकवृत्तिपदार्थविभाजकोपाधिमत्त्वं त्रयाणां साधर्म्यमित्यर्थः भवति हि द्रव्यम् अवयवसंयोगासमवायिकारणकम् अवयविगता रूपरसादिगुणा अवयवगतसमानजातीयगुणासमवायिकारण-काः कर्म्माणि नोदनाद्यसमवायिकारणकानीति गुणासमवायि-कारणकवृत्तित्वं द्रव्यत्वादिपदार्थविभाजकोपाधित्रिके इति॥१९॥

सू० संयोगविभागवेगानां कर्म्म समानम् ॥ २० ॥
न द्रव्याणां कर्म्म ॥ २१ ॥

---

उ० कश्चिदेकस्य कर्म्मणोऽनेककार्य्यकारित्वमाह।

कारणमित्यनुषङ्गः। यत्र द्रव्ये कर्म्मोत्पन्नं तेन समं यावद्द्रव्यं संयुक्तमासीत् तावत्सङ्ख्यकान् विभागान् जनयित्वा तावतः संयोगानपि पुनरन्यत्र जनयति वेगं पुनरेकमेव स्वाश्रये करोति वेगपदं स्थितिस्थापकमप्युपलक्षयति ॥ २० ॥

ननु क्रियावता द्रव्येणारम्भकसंयोगे जनिते तेन च द्रव्यमारब्धं यत्तदपि कर्म्मजन्यमेव कर्म्मणस्तत्पूर्व्ववर्त्तित्वादत आह।

कर्म्म द्रव्याणां न कारणमित्यर्थः ॥ २१ ॥

कुत एव मत आह।

---

वि० द्रव्यगुणयोरिव कर्म्मणोऽप्यनेककार्य्यकारित्वमाह।

समानमित्यनन्तरं कारणमिति पूरणीयं पूर्व्वसूत्रस्थस्य कारणमित्यस्यानुषङ्गो वा शरादौ यत् कर्म्म जायते तज्जनुषः शरस्य विभागम् उत्तरदेशेन संयोगं शरे वेगञ्च जनयतीति भावः ॥ ॥ २० ॥

द्रव्येषु कर्म्मणः कारणत्वं नास्तीत्याह।

कारणमित्यस्य पूर्व्ववत् पूरणमनुषङ्गो वा। कर्म्मपदार्थो द्रव्याणां कारणं न भवतीत्यर्थः ॥ २१ ॥

नन्ववयवसंयोगजनकं कर्म्म कुतो न द्रव्यकारणमित्यत आह।

सू॰　व्यतिरेकात्॥ २२॥

द्रव्याणां द्रव्यं कार्य्यं सामान्यम्॥ २३॥

---

उ॰　व्यतिरेकादिति निवृत्तेरित्यर्थः। उत्तरसंयोगेन कर्म्मणि निवृत्ते द्रव्यमुत्पद्यते इति न कर्म्मणो द्रव्यकारणत्वं विनश्यद्वस्थस्य कर्म्म न द्रव्यकारणम्। किञ्च कर्म्म द्रव्यस्यासमवायिकारणं वा भवेन्निमित्तकारणं वा न तावदाद्यः द्रव्यस्यासमवायिकारणनाशनाश्यत्वेन अवयवकर्म्मनाशादेव द्रव्यनाशापत्तेः न द्वितीयः महापटनाशेऽवस्थितसंयोगेभ्य एव खण्डपटोत्पत्तौ निष्कर्म्मणामेवावयवानां द्रव्यारम्भदर्शनाद्व्यभिचारात्॥ २२॥

बहूनामेकस्यारम्भकत्वमुक्त्वा इदानीमेकस्मिन् कार्य्ये बहूनामारम्भकत्वमाह।

द्रव्ये च द्रव्याणि चेति द्रव्याणि तेषां द्रव्याणां। तत्र

---

वि॰　व्यतिरेकात् द्रव्योत्पत्तिसमये कर्म्मणोऽभावात् यत् कर्म्मावयवारम्भकसंयोगं जनयति संयोगस्य तन्नाशकत्वेन संयोगोत्तरं द्रव्योत्पत्तिकाले तस्य नाशात् नच कर्म्मणः कार्य्यकालेऽसत्त्वेऽपि तत्पूर्व्वक्षणवृत्तित्वात् कारणत्वं निराबाधमिति वाच्यं महापटनाशानन्तरं खण्डपटाद्युत्पत्तेः पूर्व्वक्षणेऽपि तदवयवेषु कर्म्मणोऽभावात् वस्तुतः कर्म्मजनितारम्भकसंयोगाधीनद्रव्येऽपि न कर्म्म कारणं संयोगेनान्यथासिद्धत्वादिति ध्येयम्॥ २२॥

इदानीमेकस्यानेककारणकत्वमाह।

बहूनामवयवरूपद्रव्याणामवयविरूपमेकं द्रव्यं कार्य्यमित्यर्थः

सू० गुणवैधर्म्यान्न कर्म्मणां कर्म्म ॥ २४ ॥

---

उ० द्वाभ्यां तन्तुभ्यां द्वितन्तुकः पटो बहुभिरपि तन्तुभिरेकः पट आरभ्यते। नन्वेकतन्तुकोऽपि पटो दृश्यते यत्रैकेनैव तन्तुना तानप्रतितन्त्री भवत इति चेन्न तत्रैकस्य संयोगाभावेनासमवायिकारणाभावात् पटानुत्पत्तेः। नचांशुकतन्तुसंयोगोऽसमवायिकारणम् अवयवावयविनोरयुतसिद्धत्वेन संयोगाभावात् आरभ्यारम्भकभावानभ्युपगमात् मूर्त्तानां समानदेशताविरोधात्। दृश्यते तावदेवमिति चेन्न तत्र वेमाद्यभिघातेन महावयविनस्तन्तोर्नाशात् खण्डावयविनानातन्तूत्पत्तौ तेषामन्योन्यसंयोगात् पटोत्पत्तेः वस्तुगत्या तत्र नानाभूतेषु तन्तुषु एकत्वाभिमानात्॥ २३ ॥

ननु यथा द्रव्याणां द्रव्यं कार्य्यं गुणानाञ्च गुणस्तथा किं कर्म्मणामपि कर्म्म कार्य्यमित्यत आह।

कार्य्यमिति शेषः द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यमुक्तं तत्र कर्म्म कर्म्मसाध्यं न विद्यते इति सूत्रेण

---

वि० सामान्यशब्दस्य पूर्व्वोक्तरीत्या एकबोधकत्वात्। इदमुपलक्षणं द्वयोरपि द्रव्ययोरेकं द्रव्यं कार्य्यमित्यपि द्रष्टव्यम् असमवायिकारणसंयोगाभावादेकस्यावयवस्य नावयव्यारम्भकत्वमिति॥ २३॥

एकस्मिन् कर्म्मण्यनेककर्म्मजन्यत्वं नास्तीत्याह।

कर्म्मेति कार्य्यमिति शेषः ननु गुणकर्म्मणोर्द्रव्यसमवेतत्वाविशेषात् गुणानां गुणजन्यत्ववत् कथं न कर्म्मणां कर्म्मजन्यत्वमि-

सू॰ द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च॥ ॥ २५ ॥

---

उ॰ कर्म्मणां कर्म्मजनकत्वं प्रतिषिद्धमेव तदिहानूद्यते इति भावः॥ २४ ॥

इदानीं व्यासज्यवृत्तीनां गुणानां अनेकद्रव्यारभ्यत्वं दर्शयन्नाह।

अनेकद्रव्यारभ्या इति शेषः द्वित्वादिसमभिव्याहृतं पृथक्त्वपदमपि द्विपृथक्त्वादिपरम्, एवञ्च द्वित्वादिकाः परार्द्धपर्य्यन्ताः सङ्ख्या द्विपृथक्त्वादीनि च संयोगा विभागाश्च द्वाभ्यां बहुभिश्चैव द्रव्यैरारभ्यन्ते इत्यनेकवृत्तित्वममीषां तच्च समवाय्यन्योन्याभावसामानाधिकरण्यम्॥ २५ ॥

नन्ववयविद्रव्याणां गुणानाञ्चोक्तानां यथा व्यासज्यवृत्तित्वं तथा कर्म्मणामपि किं न स्यादत आह।

---

वि॰ ननु उक्तं गुणवैधर्म्म्यादिति। यथा द्रव्यसमवेतत्वरूपं गुणसाधर्म्म्यं कर्म्मणि तथा कर्म्मत्वादिरूपं गुणवैधर्म्म्यमपीति सजातीयानारम्भकत्वमपि वैधर्म्म्यान्तरं कर्म्मणीति भावः एतच्च पूर्व्वोक्तमपि स्पष्टार्थमुक्तम्॥ २४ ॥

केषाञ्चित् गुणानामप्यनेकद्रव्यारब्धत्वमित्याह।

अत्र पृथक्त्वपदं द्विपृथक्त्वादिपरं तथाच द्वित्वादिपरार्द्धपर्य्यन्ताः सङ्ख्या द्विपृथक्त्वादीनि संयोगा विभागाश्च अनेकद्रव्यारब्धा इत्यर्थः॥ २५ ॥

कर्म्मण्यनेकारब्धत्वं नास्तीत्याह।

सू० असमवायात् सामान्यकार्य्यं कर्म्म न विद्यते॥ ॥ २६ ॥

---

उ० असमवायादित्यत्र द्रव्ययोर्द्रव्येष्विति योज्यं तथाच न द्रव्ययोरेकं कर्म्म समवैति न वा द्रव्येष्वेकं कर्म्म समवैति तेन सामान्यस्य समुदायस्य कार्य्यं कर्म्म न विद्यते अत्रापि विदिशब्दानार्थो न सत्तावचनः यदि कर्म्म व्यासज्यवृत्ति स्यात् एकस्मिन् द्रव्ये चलति द्वयोर्द्रव्ययोर्बहुषु च द्रव्येषु चलतीति-प्रत्ययः स्यात् नचैतत् तस्मान्न कर्म्म व्यासज्यवृत्तीत्यर्थः। ननु शरीरतदवयवानां कर्म्म शरीरतदवयवैर्बहुभिरारभ्यत एव कथमन्यथा शरीरे चलति करचरणादावपि चलतीति-प्रत्ययः एवमन्यत्राप्यवयविनीतिचेन्न अवयविकर्म्मसामग्र्या अवयवकर्म्मसामग्रीव्याप्तत्वात् तथोपलब्धेः नतु वैपरीत्यं नह्यवयवे चलति सर्व्वत्रावयविनि चलतीति-प्रत्ययः अन्यथा कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगोऽपि न स्यात् कारणकर्म्मणैव कार्य्यस्यापि संयोगोपपत्तेः ॥ २६ ॥

पुनर्बहूनामेकं कार्य्यमाह।

---

वि० असमवायात् द्वयोर्बहुषु च समवायेन कर्म्मणोऽभावात् सामान्यकार्य्यम् अनेकारब्धं कर्म्म न विद्यते नास्तीत्यर्थः तथाच प्रतिद्रव्यं भिन्नं भिन्नं कर्म्म अनुभवसिद्धम्॥ २६ ॥

पुनरनेकारब्धं कार्य्यमाह।

सू॰ संयोगानां द्रव्यम् ॥ २७ ॥

रूपाणां रूपम् ॥ २८ ॥

---

उ॰ बहूनां संयोगानां द्रव्यमेकं कार्य्यमित्यर्थः निःस्पर्शानां द्रव्याणाम् अन्यावयविनां विजातीयद्रव्याणाञ्च ये संयोगास्तान् विहायेति द्रष्टव्यम् ॥ २७ ॥

इदानीं बहूनां गुणानामेकं गुणकार्य्यमाह ॥

रूपमेकं कार्य्यमित्यन्वयः रूपपदमुभयमपि लाक्षणिकम् अजहत्स्वार्थाचेयं लक्षणा कारणैकार्थसमवायप्रत्यासत्त्या जन्यजनकभावाश्रयत्वञ्च अव्यक्तसाधारणोधर्मस्तेन रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वैकत्वैकपृथक्त्वानि संगृह्यन्ते एते हि कारणे वर्त्तमानाः कार्य्येषु समानजातीयमेकमेव गुणमारभन्ते द्विधाह्यसमवायिकारणानाकृतिः केचित् कारणैकार्थप्रत्यासत्त्या जनयन्ति, कारणमिह समवायिकारणं तच्च जन्यस्य रूपादिलक्षणस्य कार्य्यस्य तेन रूपादिलक्षणकार्य्यस्य यत् समवायिकारणं घटादि तेन सह कपाले वर्त्तमानं रूपं कारणैकार्थसमवायेन घट-

---

वि॰ बहूनां तन्त्वादिसंयोगानां पटादिरूपमेकं द्रव्यं कार्य्यमित्यर्थः ॥ २७ ॥

एकस्य गुणस्यानेकगुणजन्यत्वमाह ॥

रूपपदे रसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वैकत्वैकपृथक्त्वपरिमाणवेगस्थितिस्थापकगुणत्वानामप्युपलक्षके यथाच समवायि-

सू० गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥

---

उ० रूपमारभते एवं रसाद्यपि क्वचित्तु कार्य्यैकार्थप्रत्यासत्त्या-ऽसमवायिकारणत्वं यथा कारणमपि शब्दो नभसि कार्य्य-मपि शब्दान्तरमारभते नभस्येव रूपाद्यपि पार्थिवपर-माणावग्निसंयोगेन कार्य्यैकार्थसमवायप्रत्यासत्त्या जन्यते ॥ ॥ २८ ॥

एकस्य कर्म्मणोऽनेककार्य्यत्वमाह ॥

उत्क्षेपणमेकं कार्य्यममीषामित्यर्थः। अत्र गुरुत्वस्य हस्तलोष्टादिवर्त्तिनो निमित्तकारणत्वं प्रयत्नवदात्मसंयो-गस्यासमवायिकारणत्वं हस्तनिष्ठोत्क्षेपणस्य, लोष्टनिष्ठोत्क्षे-पणस्य तु हस्तनोदनमसमवायिकारणम्, अत्राप्युत्क्षेपण-पदमवक्षेपणादावपि लाक्षणिकम् ॥ २९ ॥

ननु मूर्त्तगुणानां कार्य्याणां कारणगुणपूर्व्वकत्वं स्वा-श्रयगुणपूर्व्वकत्वञ्चोक्तं द्रव्यकर्म्मणोस्तु न कर्म्म कारणमि-

---

वि० कारणगतैर्बहुभी रूपादिभिरवयविगतमेकं रूपादिकं जायते इत्यर्थः॥ २८॥

इदानीमेकस्य कर्म्मणो बहुकारणकत्वमाह ॥

एकं कार्य्यमिति शेषः। उत्क्षेपणपदमवक्षेपणादेरप्युपल-क्षणम् उत्क्षेप्यस्य गुरुत्वम् उत्क्षेप्तुः प्रयत्नः उत्क्षेप्यहस्तनोदनञ्च एते त्रय एवोत्क्षेपणहेतवः, अतः कर्म्मणोऽप्यनेककारणकत्वं निराबाधमिति भावः॥ २९॥

ननु यथा धूमादिरूपकार्य्येण वह्न्यादिकारणानामनुमानं

सू० संयोगविभागाश्च कर्म्मणाम्॥ ३०॥

---

उ० त्युक्तं तथाच कर्म्मणः किमपि न कार्य्यमित्यायातं तथाचातीन्द्रियाणां सूर्य्यादिगतीनाम् अनुमानमपि दुर्लभं लिङ्गाभावात् अतः संयोगविभागवेगानां कर्म्मेति सूचोक्तमेव स्मारयन्नाह॥

अन्या इति शेषः व्यक्त्यभिप्रायेण बहुवचनं संस्कारोऽप्युपलक्षणीयः॥ ३०॥

ननु द्रव्यकर्म्मणी न कर्म्मकार्य्ये इति पूर्व्वमुक्तम्, संयोगविभागौ तु संयोगविभागकार्य्यावेव तथाचेदानीं कर्म्मणः कारणत्वाभिधानं विरुद्धमित्यत आह।

---

वि० तथाऽतीन्द्रियाणां चन्द्रसूर्य्यादिगतीनां केन लिङ्गेनानुमानं कर्म्मणः कार्य्याभावादित्यतः पूर्व्वोक्तानि कर्म्मकार्य्याणि स्मारयति।

चकारो वेगस्थितिस्थापकयोः समुच्चायकः तथाच एत एव कर्म्मणो जायन्ते इति कर्म्मणो न कार्य्यदारिद्र्यमिति भावः॥ ॥ ३०॥

ननु संयोगो यदि कर्म्मजन्यस्तदाऽवयवसंयोगद्वाराऽवयवकर्म्मणोऽवयविद्रव्यं प्रति वह्निनोदनद्वारा वह्निकर्म्मणः परमाण्वादिक्रियां प्रति च कारणत्वं दुरपह्नवं यथा स्वजन्यसंयोगद्वारा चाक्षुषादिकं प्रति चक्षुरादेः कारणत्वं तथाच कर्म्मणो यद्द्रव्यकर्म्माकारणत्वमुक्तं तत् किं द्रव्यं प्रति क्रियां प्रति च कर्म्मणो नासमवायिकारणत्वमित्येतत्परमित्यत आह।

सू० कारणसामान्ये द्रव्यकर्म्मणां कर्म्माकारणमुक्तम्॥ ३१॥

---

उ० कारणसामान्यपदेन तत्प्रकरणमुपलक्ष्यते तेन कारणसामान्याभिधानप्रकरणे द्रव्यकर्म्मणी प्रति कर्म्मणोऽकारणत्वमुक्तं नतु सर्व्वथाप्यकारणमेव कर्म्मेति विवक्षितं येन संयोगविभागाश्च कर्म्मणामिति सूत्रं व्याहन्येतेति भावः॥ ॥ ३१॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे प्रथमाध्यायस्य प्रथमाह्निकम्॥*॥

---

वि० द्रव्यकर्म्मणाम् अकारणं कर्म्म इति यत् पूर्व्वमुक्तं तत् कारणसामान्ये कारणसामान्यपरमित्यर्थः तथाच पूर्व्वं द्रव्यकर्म्मकारणसामान्यभिन्नत्वमेव कर्म्मण्युक्तम्, नतु तदसमवायिकारणान्यत्वम् अवयवकर्म्मणो वह्निकर्म्मणश्च अवयवसंयोगेन वह्निनोदनेन चान्यथासिद्धत्वात् चक्षुरादेस्तु चाक्षुषादिकं प्रति संयोगेन नान्यथासिद्धत्वं व्यापारेण व्यापारिणोऽनन्यथासिद्धत्वादिति भावः॥ ॥ ३१॥

इति श्रीजयनारायण-तर्कपञ्चानन-कृतायां कणादसूत्रविवृतौ प्रथमाध्यायस्य प्रथमाह्निकम्॥ *॥



सू॰ कारणाभावात्कार्य्याभावः ॥ १ ॥

उ॰ नन्वनेन प्रघट्टकेन द्रव्यादीनां त्रयाणां पदार्थानां कार्य्यैकत्वघटितं कारणैकत्वघटितञ्च साधर्म्म्यमुक्तं तच्चानुपपन्नं कार्य्यकारणभावस्यैवासिद्धेरित्यत आह।

दृश्यते हि मृच्चक्रसलिलकुलालसूत्रादौ समवहितेऽपि दण्डाभावाद् घटाभावः भूसलिलादौ समवहितेऽपि बीजाभावादङ्कुराभावः स च दण्डघटयोर्बीजाङ्कुरयोर्वा कार्य्यकारणभावमन्तरेणानुपपन्नः। अन्यथा वेमाद्यभावेऽपि घटाभावः शिलाशकलाद्यभावेऽप्यङ्कुराभावः स्यात् किञ्च घटपटादीनां कादाचित्कत्वमनुभूयते तदपि हेतुफलभावमन्तरेणानुपपन्नं नहि किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्वरूपं कादाचित्कत्वं भावानां कारणापेक्षामन्तरेण सम्भवति तदा हि स्यादेव न स्यादेव वा नतु कदाचित् स्यात् नहि भावो न भवत्येव नाप्यहेतोर्भवति

वि॰ ननु पूर्व्वाह्निके कार्य्यत्वघटितं कारणत्वघटितञ्च साधर्म्म्यमुक्तं तत्कथं सङ्गच्छते कार्य्यकारणभावस्यासिद्धत्वेन प्रमाविषयासमानत्वादित्यतः कार्य्यकारणभावमेव व्यवस्थापयति।

दण्डाभावाद् घटाभाव इत्यादि-प्रतीतौ हि दण्डाभावे घटाभावप्रयोजकत्वं भासते तच्च दण्डघटयोः कार्य्यकारणभावं विना नोपपद्यते अन्यथा दण्डाभावात् पटाभाव इत्यपि प्रतीत्यापत्तेः एवं घटादिकार्य्याणां किञ्चित्कालासत्त्वे सति किञ्चित्कालसत्त्व-

उ॰ नाप्यकस्मादेव भवति न वा निरुपाख्यादेव शशविषाणादेर्भवति किन्तु दण्डवेमादेः सोपाख्यस्यावधेर्घटपटादौ कार्य्ये दर्शनादवधिस्तु कारणमेव एवं कार्य्यकारणभावाभावे प्रवृत्तिनिवृत्ती न स्यातां तथाच निरीहं जगज्जायेत नहीष्टसाधनताज्ञानमन्तरेण प्रवृत्तिरनिष्टसाधनताज्ञानमन्तरेण निवृत्तिः॥ १ ॥

ननु सदेवोत्पद्यते नासत् "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतिप्रामाण्यात् अन्यथाऽसत्त्वाविशेषे तन्तुभ्य एव

---

वि॰ स्वरूपं कादाचित्कत्वमनुभूयते तदपि घटादेः कारणापेक्षामन्तरेण न सम्भवति अन्यथा घटादिः सर्व्वदैव स्यात् किं वा सर्व्वदैव न स्यात् नतु कदाचित् स्यात् अपि च कार्य्यकारणभावाभावे प्रवृत्तिर्निवृत्तिश्च लोकानां न स्यात् तथाच निरीहं जगदापद्येत नहि प्रवृत्तिरन्तरेणेष्टसाधनताज्ञानं न वा विनाऽनिष्टसाधनताबुद्धिं निवृत्तिः। साङ्ख्यास्तु मृदादौ पुरा तिरोभूतः सन् कलसादिराविर्भवति पुनर्मुद्गरप्रहारादिना तत्रैव तिरोभूतस्तिष्ठतीत्याविर्भावतिरोभावावेवोत्पादविनाशौ नतु वास्तवौ तथा सति कथं न तन्तुतः कलसोत्पादः। न चोत्पत्तेः पूर्व्वं कार्य्याणां कारणे सत्त्वमप्रामाणिकमिति वाच्यम् "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतेरेव प्रमाणत्वादित्याहुस्तच्चिन्त्यम् आविर्भावस्याविर्भावस्वीकारेऽनवस्थाप्रसङ्गात् आविर्भावस्य पूर्व्वमसत्त्वेऽसदुत्पत्तिस्वीकारस्यावश्यकत्वेन घटादीनां पूर्व्वसत्त्वाङ्गीकारस्य निर्युक्तिकत्वादिति कारणत्वञ्चानन्यथासिद्धनियतपूर्व्ववर्त्तिजातीयत्वं सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं स्वरूपसम्बन्धविशेषोऽतिरिक्तपदार्थो वेति॥ १॥

उ॰ पटो न कपालेभ्य इति नियमो न स्यादिति चेत् परिणामवादिभिरपि स्वीकृतकारणकैरयं नियमोऽभ्युपगन्तव्य एव अन्यथा घटाभिव्यक्तिः कपालेष्वेव न तन्तुष्विति कथं स्यात् किञ्च यद्यभिव्यक्तिरपि पूर्व्वमासीदेव तदा तस्या अपि नित्यत्वे आविर्भावतिरोभावावेवोत्पादविनाशाविति रिक्तं वचः अथाविर्भावतिरोभावौ कारणापेक्षौ तदा घटपटादीनामपि कारणापेक्षैवासतामप्युत्पत्तिरित्यायातं यत्तु कारणं प्रति नियमानुपपत्तिरित्युक्तं तत्र स्वभावनियमेनैवोत्तरं स च स्वभावनियमोऽन्वयव्यतिरेकावगम्यो भवति, भवति हि दण्डमन्तरेण न घटो दण्डे सति घट इति सर्व्वसाक्षिकोऽनुभवः एवञ्चानन्यथासिद्धनियतपूर्व्ववर्त्तिजातीयत्वं सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं वा कारणत्वम्। यद्यपि "यवैर्यजेत व्रीहिभिर्वा" इत्यादौ नियतपूर्व्ववर्त्तित्वं नास्ति नहि यवकरणकयागनिष्पाद्ये फले व्रीहिकरणकयागस्य पूर्व्ववर्त्तित्वं तथापि विकल्पितं विहितकारणं कारणमेव फलैकजात्येऽपि द्वयोः कारणत्वोपपत्तेः तथाच सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं लोकवेदसाधारणी कारणता नियतपूर्व्ववर्त्तित्वन्तु अन्वयव्यतिरेकगम्या कारणता लौकिकी, नहि "स्वर्गकामो यजेत" इत्यादौ व्यतिरेकभागोऽपि विषयः प्रवृत्तेरन्वयमात्रज्ञानादेवोपपत्तेः, अतएव "विकल्पे उभयमप्राप्तार्थं" इत्यपि घटते तज्जातीयस्य फलस्य एकेनैवोपपत्तेरपरानुष्ठान-

सू॰ न तु कार्य्याभावात् कारणाभावः॥ २॥

---

उ॰ वैयर्थ्यात्। अतएव "श्रौतात् साक्षात् कर्म्मणः फलावश्यभावनियम" इत्यप्युचितम् "आगममूलत्वाचाराणार्थस्य व्यभिचारो न दोषाय" इत्याचार्य्याभिधानमप्यर्थतात्पर्य्यकमेव हृणारणिमणिस्थले तु कार्य्यवैजात्यमावश्यकं तत्रान्वयव्यतिरेकगम्यत्वात् कारणताया व्यतिरेकाद्व्यतिरेकस्यावश्यकत्वात् विकल्पस्थले तु फलवैजात्यकल्पने राजसूयवाजपेयादावपि वैकल्पिकी कारणता स्यादिति कार्य्यकारणभावनियममेवोपपादयन्नाह।

यदि कार्य्यकारणभावनियमो न भवति तदा कार्य्याभावादपि कारणाभावः स्यात् कार्य्याभावः कारणाभावं प्रत्यतन्त्रं कारणाभावस्तु कार्य्याभावं प्रति तन्त्रं तेन दुःखाभावार्थं जन्माभावे, जन्माभावार्थं प्रवृत्त्यभावे; तदर्थञ्च दोषाभावे, तदर्थं मिथ्याज्ञाननिवृत्तये, तदर्थञ्चात्मसाक्षात्काराय मुमुक्षूणां प्रवृत्तिः प्रयोजनमौपोद्घातिकस्यास्य द्विसूत्रकप्रकरणस्य॥ २॥

---

कार्य्यकारणभावनियममेवोपपादयति।

वि॰ कार्य्यकारणभावनियमाभावे कार्य्याभावः कारणाभावप्रयोजकः कारणाभावस्तु कार्य्याभावप्रयोजक इति नियमानुपपत्तेरिति भावः॥ २॥

सू॰ सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥

---

उ॰ पदार्थत्रयोद्देशलक्षणानन्तरमिदानीमुद्दिष्टस्य सामान्य-पदार्थस्य लक्षणमाह।

सामान्यं द्विविधं परमपरञ्च तत्र परं सत्ता अपरं सत्ताव्याप्यं द्रव्यत्वादि तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव। अनुवृत्तबुद्धिः सामान्यस्य व्यावृत्तबुद्धिर्विशेषस्य। इतिना द्वयमवच्छिद्य परामृश्यते तेन बुद्ध्यपेक्षमिति नपुं-सकनिर्द्देशः। वृत्तिकारस्तु विशेषान्वयमाह परन्तु "नपुं-सकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इत्यनेनैकवद्भावो नपुंसकता चेत्याह। बुद्धिरपेक्षा चिह्नं लक्षणं वा यस्य तद्बुद्ध्यपेक्षं तत्र नित्यमनेकव्यक्तिवृत्ति सामान्यं नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणं वा परमपि सामान्य-मपरमपि तथा परन्तु सामान्यं विशेषसंज्ञामपि लभते यथा द्रव्यमिदं द्रव्यमिदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्म्मेति विशेषप्रत्ययः तथाच द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम् ॥ ३ ॥

---

वि॰ सामान्यपदार्थस्य लक्षणमाह।

सामान्यं परं विशेषः अपरं सामान्यम् इति द्वयं बुद्ध्यपेक्षं बुद्धिरपेक्षा लक्षणं यस्य तत् तथाच सामान्यं द्विविधं परमप-रञ्च तत्र परसामान्यं सत्ता द्रव्यत्वादिकन्त्वपरसामान्यं तत्र सामान्यविशेषयोः परापरयोर्लक्षणं बुद्धिरेव अनुवृत्तत्वबुद्धिः

उ० ननु विधिरूपं सामान्यं नास्त्येव अनुगतमतेरतद्व्यावृत्त्यै-वोपपत्तेः भवति हि गौरयमिति-प्रतीतेरगोव्यावृत्तोऽय-मिति विषयः जातिवादिनाऽपि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात् नहि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्, गवा-दिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्त्यादिरेव। किञ्च गोत्वं कुत्र वर्त्तते न तावद्गवि गोत्ववृत्तेः पूर्व्वं तस्याभावात् नाप्यगवि विरोधात् यत्र गोपिण्ड उत्पद्यते तत्र कुत आगत्य गोत्वं वर्त्तते न तावत्तत्रैवासीत् देशस्यापि तस्य गोत्वापत्तेः नापि गोत्वमपि तदानीमेवोत्पन्नं नित्यत्वाभ्युपगमात् ना-प्यन्यत आगतं निष्क्रियत्वाभ्युपगमात् नच एकस्यैव नित्यस्य नानाव्यक्तिवृत्तित्वं कार्त्स्न्यैकदेशविकल्पानुपपत्तेः। नहि कृत्स्नमेकत्रैव वर्त्तते अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात्। नाप्येकदेशेन, जातेरेकदेशस्याभावात्। तदुक्तं "न याति नच तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्व्वं नाधारमहो-व्यसनसन्ततिः" इति। सामान्यमस्ति तच्च संस्थानमात्रव्यङ्ग्यं गोत्वघटत्वादिवत् नतु गुणकर्म्मगतमपीति सगोचकमतः।

---

वि० सामान्यस्य,व्यावृत्तत्वबुद्धिर्विशेषस्य लक्षणम्, अनुवृत्तत्वम् अधि-कदेशवृत्तित्वं व्यावृत्तत्वमल्पदेशवृत्तित्वं तथाच सत्तायाः सर्व्व-सामान्यापेक्षयाऽधिकदेशवृत्तित्वात् परत्वमेव द्रव्यत्वादिजातेस्तु सत्तापेक्षया न्यूनदेशवृत्तित्वादपरत्वं पृथिवीत्वाद्यपेक्षयाऽधिक-देशवृत्तित्वात् परत्वमपीति परत्वरूपं सामान्यत्वम् अपरत्व-रूपं विशेषत्वञ्च न नियतं किन्तु बुद्ध्यपेक्षमिति। जातिबाधका

उ० अत्रोच्यते सामान्यं नित्यं व्यापकञ्च व्यापकत्वमपि स्वरूपतः सर्व्वदेशसम्बद्धत्वं न देशानां गोव्यवहारापत्तिः समवायेन तद्व्यवहारस्याभ्युपगमात् काले रूपादिमत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत् नच कालो नास्त्येव पञ्चस्कन्धसंज्ञाभेदमात्रमित्यभ्युपगमादिति वाच्यं कालस्य साधयिष्यमाणत्वात्। तथाच यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वं तेन सम्बध्यते जातः सम्बन्धश्चेत्येकः काल इत्यभ्युपगमात् एतेन कीदृशस्याश्रये वर्त्तते इत्यत्र यत्र प्रतीयते इत्युत्तरम्, कुत्र प्रतीयते इत्यत्र यत्र वर्त्तते इत्युत्तरम्, गोत्ववृत्तेः पूर्व्वं स पिण्डः कीदृगासीदित्यत्र नासीदित्येवोत्तरम्, एवञ्च "न याति नच तत्रासीत्" इत्यादिकं परिदेवनमात्रम्, अतद्व्यावृत्तिरेव गोत्वमित्यत्र गौरयमिति विधिमुखः प्रत्यय एव बाधकः। यच्चानुभवोऽपि व्याख्यायते तदुक्तं "विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थक" इति नहि गौरयमिति प्रत्ययेऽगोव्यावृत्तिरपि भासते कार्त्स्न्यैकदेशविकल्पस्तदाभवेत् यद्येकस्य सामान्यस्य कार्त्स्न्यं भवेदेकदेशो वा तत्स्वता

---

वि० उक्ता न्यायाचार्य्यैः, "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रह" इति। तत्रैकव्यक्तिकत्वादाकाशत्वं न जातिः अन्यूनानतिरिक्तव्यक्तिकत्वात् घटत्वं कलसत्वञ्च न जातिद्वयं परस्पराव्यन्ताभावसमानाधिकरणयोरेकव्यक्तिसमावेशेन सङ्करेण भूतत्वं मूर्त्तत्वञ्च न जातिः अनवस्थाभयात् सामान्यत्वं न जातिः विशेषस्य व्यावृत्तस्वभावस्य रूपहानिर्विशेष-

उ० अनेकाश्रेयता सा चैकस्मिन्नोपपन्ना गौरयमित्याद्यनुभव एवासद्विषयो न वस्तुव्यवस्थापनक्षम इत्यत्रोत्तरं वक्ष्यते। प्राभाकरास्तु संस्थानमात्रव्यङ्ग्यं सामान्यमाचक्षते तद्व्यद्यनुगतप्रतीतिसाक्षिकं तदा किमपराद्धं गुणकर्म्मगतैः सामान्यैः, भवति हि रूपरसादावनुगतधीः सा च जातिव्यवस्थापिकैव बाधकाभावात् रूपत्वादिजातिषु न तावद्व्यक्तिभेदो बाधकः आकाशत्वादिवत्, रूपरसादिव्यक्तीनामनेकत्वात् नापि बुद्धित्वज्ञानत्वादिवत् घटत्वकलसत्वादिवद्वा तुल्यत्वं बाधकं तथान्यूनानतिरिक्तव्यक्तिकत्वं गुणत्वापेक्षया न्यूनव्यक्तिकत्वात् नीलत्वाद्यपेक्षयाचाधिकव्यक्तिकत्वात् अत एव न सङ्करः भूतत्वमूर्त्तत्ववत्, परस्परात्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्याभावात् नाप्यनवस्था रूपत्वादिगतसामान्यान्तरानभ्युपगमात् नापि रूपहानिर्विशेषत्ववत् यदि विशेषाः द्रव्याश्रितत्वे सति जातिमन्तः स्युः गुणाः कर्म्माणि वा स्युः विभुवृत्तित्वे सति यदि जातिमन्तः स्युर्गुणाः स्युरिति

---

वि० त्वजातिबाधिका, यदि विशेषत्वं जातिः स्यात् तदा जातिमतः स्वतो व्यावृत्तत्वासम्भवेन स्वतोव्यावृत्तत्वरूपस्य असाधारणधर्म्मस्य व्याघातः स्यादतो विशेषत्वं न जातिः, अथवा रूपहानिः स्वरूपहानिः तथाच विशेषा यदि मूर्त्तवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः कर्म्माणि वा स्युः विभुवृत्तित्वे सति जातिमन्तः स्युस्तदा गुणाः स्युरिति विशेषस्य स्वरूपहानिर्विशेषत्वजातिबा-

सू॰ भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव॥ ४॥

---

उ॰ यथा विशेषपदार्थस्वरूपहानिस्तथा प्रकृतेऽभावात् नापि समवायत्ववदसम्बन्धः समवाये समवायाभ्युपगमेऽनवस्था-भयात्तथास्तु, प्रकृते तु समवायस्यैव सम्बन्धस्याभ्युपगमात्। यद्यपि समवायत्वजातिबाधकोव्यक्त्यभेद एव तथापि यन्मते उत्पादविनाशशीलाः बहवः समवायास्तन्मते द्रष्टव्यम्, अभावत्वादिजात्यभ्युपगमे वा बाधकमेतत्, विवादपदम-नुगतबुद्धिः अनुगतनिमित्तसाध्या अबाधितानुगतमतित्वात् दामकुसुमबुद्धिवत् इति जातौ मानमिति वृत्तिकारा-स्त्वाचिक्यम्॥ ३॥

सामान्यं विशेष इति द्वैविध्यं यदुक्तं तदुपपादयन्नाह।

भावःसत्ता अनुवृत्तेरेव हेतुः नतु व्यावृत्तेरपि हेतुः तथाच विशेषसंज्ञां न लभते॥ ४॥

---

वि॰ धिका समवायसम्बन्धाभावात् समवायत्वं न जातिः समवाये समवायान्तरस्वीकारेऽनवस्थाप्रसङ्गात् उत्पादविनाशशालिनो ब-हव समवाया इतिमतेनैतत् अन्यथैकव्यक्तिकत्वादपि समवायत्वं न जातिः स्यात् एवमभावत्वस्य जातित्वे समवायसम्बन्धाभाव एव बाधक इत्यादिकमूहनीयम्। प्राभाकरास्तु संख्यानयत्यैव जातिः साच गुणकर्म्मणोर्नास्तीत्याहुः॥ ३॥

सत्तायाः परत्वमेव नापरत्वमित्याह।

भावः सत्ता अनुवृत्तेरधिकदेशवृत्तित्वबुद्धेर्हेतुत्वात् एवका-रेणाल्पदेशवृत्तित्वबुद्धिव्यवच्छेदः तादृशबुद्धिस्तु सत्ता द्रव्यत्वाद्य-

सू० द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च ॥ ५ ॥

उ० केषां सामान्यानां विशेषसंज्ञेत्यपेक्षायामाह।

चकारः पृथिवीत्वादीनि द्रव्यगतजातीः रूपत्वादीनि गुणगतजातीः उत्क्षेपणत्वादीनि कर्मगतजातीः समुच्चिनोति, द्रव्यत्वमित्यादावसमासः परस्परं व्याप्यव्यापकभावाभावसूचनार्थः सामान्यानि विशेषाश्चेत्यत्रासमासः सामान्यत्वे सत्येव विशेषत्वं यथा ज्ञायेत तदर्थम्, अन्यथा सामान्यविशेषा इति षष्ठीसमासभ्रमः स्यात् तथाच सामान्यत्वे सति विशेषत्वं न प्रतीयते। ननु द्रव्याकारानुगतमतिसाक्षिकं न द्रव्यत्वम्, पृथिव्यादौ कथञ्चित् तत्सत्त्वेऽपि वाय्वाकाशादौ तदसम्भवात् नच गुणत्वावच्छिन्नकार्य्यसमवायिकारणतावच्छेदकतया तत्सिद्धिः नित्यानित्यवृत्तितया गुणत्वस्य कार्य्यतानवच्छेदकत्वात् गुणत्वार्थमपि पर्य्यनुयोगस्य तादवस्थ्यात्, नैवं संयोगत्वावच्छिन्नकार्य्यसम-

वि० येनाथाऽधिकदेशवृत्तिरित्याकारिका तस्याः प्रत्यक्षात्मिकाया हेतुत्वं सत्तायां विषयमुद्रया तथाच सत्तायां काचिदपि जातिमपेक्ष्याल्पदेशवृत्तित्वबुद्धेरभावान्न विशेषत्वं किन्तु परत्वमात्रमेवेति ॥ ४ ॥

ननु के विशेषा इत्याकाङ्क्षायामाह।

चकारेण पृथिवीत्वादीनां द्रव्यगतानां रूपत्वादीनां गुणगतानाम् उत्क्षेपणत्वादीनां कर्मगतानाञ्च जातीनां समुच्चय-

उ॰ वायिकारणतावच्छेदकतया द्रव्यत्वसिद्धेः नाहि न पृथिवीत्वाद्यवच्छेद्या न्यूनवृत्तित्वात् नापि सत्तावच्छेद्या ऽधिकवृत्तित्वात् अवश्यं ह्यवच्छेदकेन भवितव्यम्, अन्यथाकस्मिकतापत्तेः तत्र परमाणुषु द्व्यणुकासमवायिकारणवत्तया द्व्यणुकेषु त्र्यणुकासमवायिकारणवत्तया विभुचतुष्टयस्य सर्व्वमूर्त्तसंयोगितयैव सिद्धेः मनसि इन्द्रियमनःसंयोगाधारतया वायौ त्वगादिनोद्गमाश्रयतया प्रत्यक्षद्रव्येषु प्रत्यक्षतयैव संयोगाभ्युपगमस्यावश्यकत्वात् अगन्तु संयोगो नास्त्येव येन संयोगत्वस्यापि कार्य्याकार्य्यवृत्तितया कार्य्यतावच्छेदकता न स्यात् एवं विभागसमवायिकारणतावच्छेदकतयाऽपि द्रव्यत्वसिद्धेः सुप्रतिपदत्वात्। गुणत्वन्तु संयोगविभागसमवायिकारणत्वासमवायिकारणत्वशून्ये सामान्यवति यत्कारणत्वं तदवच्छेदकतयैव सिद्धमित्युक्तत्वात् कर्म्मत्वमपि प्रत्यक्षद्रव्येषु चलतीति-प्रत्ययसाक्षिकम्, अन्यत्र तु संयोगविभागानुमेयं संयोगविभागोभयासमवायिकारणतावच्छेदकतयाऽपि कर्म्मत्वसिद्धेरावश्यकत्वात् अतएवादित्यस्य देशान्तरप्राप्त्या गत्यनुमानं तत्र च देशान्तरस्याकाशादेरतीन्द्रियत्वेऽपि तत्किरणसंयोगविभागयोस्तन्मण्डलेन प्रत्यक्षत्वात् तत एव गत्यनुमानं, देशान्तरप्राप्तिमान् आदित्यः अविनाशित्वे द्रव्यत्वे च सति प्राङ्मुखो-

वि॰ तथाच द्रव्यत्वादीनां परत्वरूपं सामान्यत्वम् अपरत्वरूपं विशेषत्वञ्चेत्यर्थः॥ ५ ॥

सू० अन्यत्रान्त्येभ्यो विशेषेभ्यः॥ ६॥

---

उ० पलब्धस्य प्रत्यक्षमुखेन तेनैवोपलभ्यतया प्रत्यभिज्ञाय मान-
त्वादिति देशान्तरप्राप्त्या अनुमितया आदित्यगत्यनुमान-
मित्युद्योतकराचार्य्याः॥ ५॥

ननु य एव विशेषपदार्थ उद्दिष्टः स एव किं सामा-
न्यविशेषत्वेनाभिधीयते इति शिष्याकाङ्क्षामपनयन्नाह।

अन्त्या विशेषा नित्यद्रव्यवृत्तयो येऽभिहिताः तान्
वर्ज्जयित्वा सामान्यविशेषाभिधानमित्यर्थः। अन्तेऽवसाने
भवन्तीत्यन्त्या यतो न व्यावर्त्तकान्तरमस्तीत्याचार्य्याः उत्पा-
दविनाशयोरन्तेऽवसाने भवन्तीत्यन्त्या नित्यद्रव्याणि तेषु
भवन्तीत्यन्त्या विशेषा इति वृत्तिकृतः। ते हि विशेषा एव
व्यावृत्तिबुद्धिहेतवो नतु सामान्यरूपा अपीति॥ ६॥

सत्तासामान्यमित्यत्र बहूनां विप्रतिपत्तिरतस्तत्र प्र-
माणमाह।

---

वि० ननु सामान्यस्य विशेषत्वाभ्युपगमे भावानां षट्त्वसंख्या
व्याहन्येतेति तटस्थाशङ्कां निरस्यति।

अन्त्या नित्यद्रव्यवृत्तयो ये विशेषा अभिहितास्तान् वर्ज्जयित्वा
सामान्यविशेषाभिधानमित्यर्थः। अन्तेऽवसाने तिष्ठन्ति यदपे-
क्षया विशेषो नास्ति एकमात्रवृत्तय इति फलितार्थः, तथाच
पूर्व्वसूत्रे विशेषपदं नैकमात्रवृत्तिविशेषपदार्थपरं किन्तु व्याप्य-
सामान्यपरमिति न षट्त्वसंख्याव्याघात इति भावः॥ ६॥

सत्तासामान्ये प्रमाणमाह।

सू॰ सदिति यतो द्रव्यगुणकर्म्मसु सा सत्ता॥ ७॥
द्रव्यगुणकर्म्मभ्योऽर्थान्तरं सत्ता॥ ८॥

उ॰ इतिकारेण प्रत्ययव्यवहारयोः प्रकारमुपदिशति। तथाच द्रव्यादिषु त्रिषु सत्सदिति-प्रकारको यतः प्रत्ययः सदिदं सदिदमित्याकारकः शब्दप्रयोगोवा यदधीनः सा सत्ता॥ ७॥

ननु द्रव्यगुणकर्म्मभ्यः पृथग्भावेन सत्ता नानुभूयते-ऽतो द्रव्याद्यन्यतममेव सत्ता यतो हि यद् भिन्नं भवति तत्ततो भेदेनानुभूयते यथा घटः पटात् नच सत्ता तेभ्यो भेदेनानुभूयते इति तदात्मिकैवेत्यत आह॥

द्रव्यादयोऽननुगताः सत्ताचानुगता। तथाच अनु-गतत्वाऽननुगतत्वलक्षणविरुद्धधर्म्माध्यासेन तेभ्यो भेदस्य सिद्धत्वात् यत्तु तेभ्योऽन्यत्र नोपलभ्यते तदयुतसिद्धिबलात् घटपटयोस्तु युतसिद्धिः नच व्यक्तिस्वरूपमेव सत्ता, व्यक्ती-

वि॰ इतिशब्देन प्रत्ययव्यवहारयोः संग्रहः। यतो यस्याः सत्ताया हेतोर्द्रव्यगुणकर्म्मसु अयं सन्नित्याकारकः प्रत्ययः व्यवहारश्च भवति सा सत्ता इत्यर्थः। तथाच सत्तायामनुगतः प्रत्ययो व्यव-हारश्च मानमितिभावः॥ ७॥

ननु स्वरूपसम्बन्धरूपैव सत्ता सा च द्रव्यादिस्वरूपानतिरिक्त-त्वाशङ्कां निरस्यति।

अर्थान्तरं भिन्ना तथाच द्रव्यादिषु त्रिषु सदित्यनुगतप्रत्ययस्य

सू० गुणकर्म्मसु च भावान्न कर्म्म न गुणः॥ ९॥

उ० नाममनुगमात् स्वरूपत्वं यद्यनुगतं तदा सैव सत्ता अननुगतैरपि स्वरूपैरनुगतव्यवहारश्चेत्तदा गोत्वादिभिरपि गतम्। अतएव यत्र सत्ता समवैति तादृशैराधारैरेव तद्व्यवहारोपपत्तौ किं सत्तयेत्यपास्तम्। अतएवार्थक्रियाकारित्वं प्रामाणिकत्वं वा सत्त्वमित्ययुक्तं तदननुसन्धानेऽपि सन् इति प्रत्ययात्॥ ८॥

भेदकान्तरमाह।

न गुणो न कर्म्मेति वक्तव्ये व्यत्ययेनाभिधानं न द्रव्यमित्यपि सूचयति नहि कर्म्म कर्म्मसु वर्त्तते न वा गुणो गुणेषु न वा द्रव्यं गुणे कर्म्मणि वा, सत्ता तु गुणे कर्म्मणि च वर्त्तते तेन द्रव्यगुणकर्म्मवैधर्म्यात्तेभ्यो भिन्नैव सत्ता॥ ९॥

भेदकान्तरमाह।

वि० सर्व्वसिद्धत्वेनाऽनुगता सत्ता स्वीकार्य्या सत्ताया अननुगतद्रव्यादिस्वरूपत्वे तादृशानुगतप्रत्ययापलापप्रसङ्गादिति भावः॥ ८॥

इतोऽपि सत्ता न द्रव्यादिस्वरूपेत्याह।

न कर्म्म न गुण इति व्यत्ययेनाभिधानात् न द्रव्यमित्यपि मुनेरभिप्रेतं तथाच सत्ताया गुणकर्म्मवृत्तित्वात् द्रव्यादीनाञ्च तदभावात् सत्ता द्रव्यादिभ्यो भिद्यते इत्यर्थः॥ ९॥

भेदकान्तरमाह।

सू॰ सामान्यविशेषाभावेन च ॥ १० ॥

अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥

---

उ॰ यदि सत्ता द्रव्यं गुणः कर्म्म वा स्यात् तदा सामान्यविशेषवती स्यात् नच सत्तायां सामान्यविशेषा द्रव्यत्वादय उपलभ्यन्ते नहि भवति सत्ता द्रव्यं गुणः कर्म्म वेति केषाञ्चिदनुभवः ॥ १० ॥

एवं सत्ताया द्रव्यगुणकर्म्मभ्योऽर्थान्तरत्वमभिधाय द्रव्यत्वस्य तेभ्योऽर्थान्तरत्वमाह।

अनेकं द्रव्यं समवायितया यस्यास्ति तदनेकद्रव्यवत् अनेकपदमिह सर्व्वपरं तेन पृथिवीत्वादिभ्यो भेदः, नित्यत्वन्तु सामान्यलक्षणप्राप्तमेव तेनावयविभ्यो भेदः, अनेकद्रव्यवत्त्वञ्च अनेकद्रव्यमात्रसमवेतत्वं तेन सत्ताया भेदः। तेन नित्यमनेकद्रव्यमात्रसमवेतं द्रव्यत्वम्, अतः संयोगो नेष्यत इत्युक्तं द्रव्यत्वञ्च साधितमेव। द्रव्यत्वमुक्तमिति द्रव्यत्वमपि सत्तावदेव व्याख्यातमित्यर्थः ॥ ११ ॥

---

वि॰ सामान्यविशेषाः पूर्व्वोक्ताः द्रव्यत्वादयः तथाच द्रव्यत्वाद्यभावात् सत्ता न द्रव्याद्यात्मिकेत्यर्थः ॥ १० ॥

द्रव्यत्वमपि न द्रव्याद्यात्मकमित्याह।

अनेकद्रव्यवत्त्वं समवेतत्वसम्बन्धेन, नित्यत्वन्तु सामान्यत्वादेव प्राप्तं तथाच द्रव्यत्वमनेकद्रव्यसमवेतत्वेन नित्यत्वेन च द्रव्यादिभिन्नतया सत्तावदेव व्याख्यातमित्यर्थः ॥ ११ ॥

सू० सामान्यविशेषाभावेन च ॥ १२॥
तथा गुणेषु भावाद्गुणत्वमुक्तम् ॥ १३॥
सामान्यविशेषाभावेन च ॥ १४॥

---

उ० ननु द्रव्यत्वमपि जातिः स्वाश्रयादभिन्नमेव स्यात् को दोष इत्यत आह।

यदि द्रव्यत्वं जातिर्द्रव्याद्यात्मिकैव स्यात् तदा तस्यां पृथिवीत्वजलत्वतेजस्त्वादयः सामान्यविशेषाः स्युरित्यर्थः। नहि भवति द्रव्यत्वं पृथिवी जलं तेजो वेति केषाञ्चित् प्रत्यय इत्यर्थः॥ १२॥

गुणत्वमाह।

गुणेष्वेव भावात् समवायात् गुणत्वं द्रव्यगुणकर्म्मभ्यो भिन्नं सत्तावदेवोक्तमित्यर्थः॥ १३॥

भेदकान्तरमाह।

यदि द्रव्यगुणकर्म्मभ्यो गुणत्वमतिरिक्तं न भवेत्तदा

---

वि० द्रव्यादिगतधर्म्माभावादपि द्रव्यत्वं न द्रव्याद्यात्मकमित्याह।

द्रव्यत्वगुणत्वकर्म्मत्वपृथिवीत्वजलत्वतेजस्त्वाद्यभावात् द्रव्यत्वं न द्रव्याद्यात्मकमित्यर्थः॥ १२॥

गुणत्वमपि न द्रव्याद्यात्मकमित्याह।

भावात् समवायेन सत्त्वात् तथाच गुणसमवेतत्वाद् गुणत्वं द्रव्यादिभिन्नं तथा सत्तावदेव व्याख्यातमित्यर्थः॥ १३॥

इतोऽपि गुणत्वं न द्रव्याद्यात्मकमित्याह।

द्रव्यत्वाद्यभावाद् गुणत्वं न द्रव्याद्यात्मकमित्यर्थः॥ १४॥

सू० कर्म्मसु भावात् कर्म्मत्वमुक्तम् ॥ १५ ॥
सामान्यविशेषाभावेन च ॥ १६ ॥

---

उ० द्रव्यत्वगुणत्वकर्म्मत्वतदवान्तरजातिमत्तया उपलभ्येतेत्यर्थः ॥
॥ १४ ॥

द्रव्यगुणकर्म्मभ्यो भेदकं कर्म्मत्वमाह।

कर्म्मस्वेव भावात् समवायात् कर्म्मत्वमपि जात्यन्तरं द्रव्यगुणकर्म्मभ्यो भिन्नमुक्तं सत्तावदित्यर्थः॥ १५ ॥

भेदकान्तरमाह।

कर्म्मत्वं यदि द्रव्याद्यात्मकं भवेत्तदा द्रव्यत्वादिसामान्यविशेषस्तत्र समवेयादित्यर्थः। सेयमेकाकारा चतुःसूत्री सत्ताद्रव्यत्वगुणत्वकर्म्मत्वानां चतसृणां जातीनां द्रव्यगुणकर्म्मभेदप्रतिपादनाय एकप्रकरणेनोक्तेत्यवधेयम्॥
॥ १६ ॥

ननु सत्ता द्रव्यगुणकर्म्मसु वर्त्तमाना द्रव्यत्वाद्यवच्छेदभेदेन भिन्नैव कथं न स्यादत आह।

---

वि० कर्म्मत्वमप्यतिरिक्तमित्याह।

कर्म्मसु भावात्सत्त्वात् कर्म्मत्वं सत्तावदतिरिक्तमुक्तमित्यर्थः॥
॥ १५ ॥

द्रव्यादिगतधर्म्माभावादपि कर्म्मत्वं न द्रव्याद्यात्मकमित्याह।

द्रव्यत्वाद्यभावात् कर्म्मत्वमपि न द्रव्याद्यात्मकमित्यर्थः॥ १६॥

ननु द्रव्यादिषु वर्त्तमाना सत्ता द्रव्यत्वाद्यवच्छेदकभेदेन भिन्ना कथं न स्यादित्यत आह।

सू० सदितिलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः॥ १७॥

---

उ० सदित्याकारकं ज्ञानं शब्दप्रयोगो वा सत्ताया लिङ्गं तच्च द्रव्यगुणकर्मसु समानमविशिष्टं तेन भावः सत्ता एकैव तेषु वर्त्तते अन्यथा द्रव्यत्वादिभिस्तुल्यव्यक्तिकतया सत्ता वा न स्यात् तानि वा न स्युः विशेषलिङ्गाभावाच्चेति विशेषो भेदस्तत्र यल्लिङ्गमनुमानं तदभावाच्च न भेद इत्यर्थः। भवति हि स एवायं दीप इत्यनुगमस्तत्र यथा विशेषलिङ्गं दीर्घह्रस्वत्वादिपरिमाणभेदस्तथात्र विशेषलिङ्गं नास्तीति भावः॥ १७॥

इति श्रीभगवत्कणादसूत्रोपस्कारे शाङ्करे प्रथमाध्यायस्य द्वितीयमाह्निकम्॥ * ॥

---

वि० सदित्याकारकप्रत्ययव्यवहारयोः सत्तालिङ्गयोर्विशेषाभावात् भेदकलिङ्गान्तराभावाच्च भावः सत्ता एक एव नतु नाना भिन्नत्वे तुल्यव्यक्तिकत्वात् सत्ताया द्रव्यत्वादेर्वाऽर्थान्तरत्वं न स्यादिति भावः, स एवायं दीप इत्यनुगतयोः प्रत्ययव्यवहारयोः सत्त्वेऽपि तत्र परिमाणादिभेद एव भेदकः नचात्र तथा कश्चिदस्तीति भावः॥ १७॥

इति श्रीजयनारायण-तर्कपञ्चानन-प्रणीतायां कणादसूत्रविवृतौ प्रथमाध्यायस्य द्वितीयमाह्निकम्॥ * ॥

समाप्तश्चायं प्रथमाध्यायः॥ ० ॥

सू० रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥

उ० द्वितीयाध्यायस्य प्रथमाह्निकस्य नवानां द्रव्याणां लक्षणमर्थः, तत्र पृथिव्यप्तेजसां लक्षणप्रकरणम् ईश्वरसिद्धिप्रकरणम् आकाशानुमानप्रकरणम्, तत्र प्रथमोद्दिष्टायाः पृथिव्या लक्षणमाह।

रूपं नीलपीताद्यनेकप्रकारं पृथिव्या एव। तथाच नीलरूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् एवं रसः कटुकषायाद्यनेकप्रकारकः पृथिव्यामेव तथाच कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम् एवं कषायादिपदप्रक्षेपेण लक्षणान्यूहनीयानि। गन्धो द्विविधः सुरभिरसुरभिश्च तथाच गन्धसमाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणं तथा गन्धसमानाधिकरण-गन्धासमानाधिकरणगुणासमानाधिकरण-जात्यधिकरणद्रव्यत्वं द्रष्टव्यम्। नच पाषाणादौ गन्धरसयोरननुभवात् तत्राव्यापकमिदमुभयमपीति वाच्यं तत्रापाततो गन्धरसयोरननुभवेऽपि तदीयभस्मसु तदुपलम्भात् य एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका अपीति नाव्याप्तिः कथं

वि० जनयन्तं पालयन्तं नाशयन्तं जगन्मुडः।
अगजाङ्कजमानन्दाद् गजाननमहं भजे ॥

द्वितीयाध्यायस्य प्रथमाह्निके द्रव्यलक्षणान्यभिधास्यति, तत्रादौ पृथिव्या लक्षणमाह।

नीलादिरूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वकषायादि-

उ० तर्हि सुरभिः समीरणः शिशिरो वा वायुरिति-प्रतीतिरिति चेन्न पार्थिवोपाधिकत्वात् तयोर्गन्धरसयोः, स्पर्शोऽप्यनुष्णाशीतः पाकजः पृथिव्यामेव तथाच पाकजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम्, पाकजत्वञ्च विशेषान्तरव्यङ्ग्यं पृथिवीस्पर्श एव, विशेषान्तरञ्च शिरीषलवङ्गीकुसुमादौ स्पर्शविशेषे स्फुटतरम्, नत्वेवं जलादिस्पर्शे। यद्यप्यवयविनि पाकादग्निसंयोगात् स्पर्शादयो न जायन्ते तथापि तत्परम्पराप्रभवतया तत्रापि वैजात्यविशेषोऽनुसरणीयः। ननु लक्षणमिदं व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा तत्र पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यन्नेतरभिन्नं तन्न गन्धवत् यथा जलादि इतरभेदाभावव्यापकाभावप्रतियोगिगन्धवती चेयं तस्मादितरभिन्ना तत्रेतरभेदस्य साध्यस्य प्रसिद्धौ ततो हेतोर्व्यतिरेके सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम् अव्यतिरेके चान्वयित्वम् अप्रसिद्धौ च अप्रसिद्धविशेषणः पक्षः तथाच तत्र न सन्देहो न वा सिषाधयिषा न वा तद्विशिष्टज्ञानरूपानुमितिः किञ्च व्यतिरेकयोर्व्याप्तिस्थाप न व्याप्तस्य पक्षधर्मत्वं पक्षधर्मस्य न व्याप्तत्वमिति वैषम्यम्, अत एवोपनयवैयर्थ्यमपि आख्यायते नत्वष्टव्यतव्याप्तिकमपि तदुक्तम्,

---

वि० रससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वगन्धवत्त्वपाकजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वादीनि पृथिव्या लक्षणान्यू-

ख॰ "साध्याप्रसिद्धिर्वैधर्म्यं व्यर्थतोपनयस्य च।

अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम्" ॥ इति।

एवं व्यवहारसाध्यकेऽपि, तत्र यद्यपि व्यवहारः पृथिवीपदवाच्यत्वं तच्च पृथिवीत्वजातावप्यस्ति तत्र च पृथिवीत्वं हेतुर्नास्तीत्यसाधारण्यं तथापि पृथिवीत्वप्रवृत्तिनिमित्तकपृथिवीपदवाच्यत्वं साध्यमिति नासाधारण्यं यद्वा पृथिवीत्वं काचित्कपदप्रवृत्तिनिमित्तं जातित्वात् घटत्ववदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति साध्यम्। तथाचात्रापि साध्याप्रसिद्धिरेवेति चेत् नैवम्, इतरेषां जलादीनाम् भेदस्य घट एव प्रसिद्धेः। वाय्वादेरतीन्द्रियस्यापि भेदस्य अन्योन्याभावस्य घटादौ प्रत्यक्षत एव सिद्धत्वात् अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यतामात्रस्य तन्त्रत्वात् स्तम्भः पिशाचो न भवतीत्यादौ तथा दर्शनात्, नन्वेवं घट एव तर्हि दृष्टान्तोऽस्तु किं व्यतिरेकिणा

"ऋजुमार्गेण सिध्यन्तं कोहि वक्रेण साधयेत्"

इति वाच्यम् अव्यतिरेकिसिद्धं चेदनाभासं, तदाऽयमपि मार्गो वक्रत्वेऽपि प्रत्यप्रतिहत एव साध्याप्रसिद्धेर्निरासे तन्मूलकदोषाणां निरस्तत्वात्। व्यतिरेकसहचारेण अन्वयव्याप्तेरेव ग्रहात् व्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानाद्वा न

वि॰ व्याप्तिरिति। अत्र प्रकृतमिश्राणां मन्ववत्त्वं परित्यज्य वक्ष्यमाणाधि-

उ० वैधर्म्यम्। नचोपनयवैयर्थ्यम्, गृहीतव्याप्तेरेव हेतोः पक्षे उपसंहारात् तदुक्तम्,

"नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते।

त एव विपरीते तु विज्ञेये तदभावयोः" ॥ इति।

व्यवहारस्तु गन्धवती पृथिवीत्युपदेशादेव यथा कम्बुग्रीवादिमान् घटपदवाच्य इति। तथा कुत्रचिदेव घृतादौ मृदादौ च गन्धवत्त्वेनोपलक्षणेन पृथिवीत्वे पृथिवीपदप्रवृत्तिनिमित्तत्वं येनोपदेशाद् गृहीतम्, गन्धवत् सर्व्वं पृथिवीत्वेन प्रवृत्तिनिमित्तेन पृथिवीपदवाच्यं गन्धवत्त्वात यन्नैवं तन्नैवमिति व्यतिरेकी तस्याप्यवतरत्येव। ननु भेदसाधकव्यतिरेकिणि भेदो वैधर्म्यं स्वरूपभेदो वा अन्योन्याभावो वा न तावदाद्यौ प्रत्यक्षत एव तदवगमात् न तृतीयः अभावभेदस्यापि साध्यत्वेन तदन्योन्याभावस्य तत्राभावात् तेन सह स्वरूपभेदे साध्ये साध्याननुगमादितिचेन्न अभावप्रतियोगिकान्योन्याभावस्यापि साध्यत्वात् स यद्यतिरिक्तस्तदाऽस्त्येव न चेत् स्वरूपमादाय तत्पर्य्यवसानात् वस्तुतोभिन्नएव तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्, नचानवस्था यावत्येवानुभवस्तावत्येवाऽविश्रामात् अन्यत्र त्वननुभवेनैव विश्रामात् यत्तु त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः मिलिताः पृथिव्यां

---

वि० चरमद्रव्यत्वव्याप्यजातिमत्त्वपर्य्यन्तानुधावनस्य प्रयोजनं त एव जानन्ति ॥ १ ॥

सू० रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः॥ २ ॥

उ० साध्यन्ते इति तत्तुच्छं प्रत्येकं प्रसिद्धेरनन्तत्वात् मिलित-प्रसिद्धेरभावात् किन्तु निर्गन्धत्वावच्छिन्नप्रतियोगिताका-न्योन्याभावः साध्येत प्रतियोगितावच्छेदकभेदेनाभावभेद-स्यावश्यकत्वात् स च घटादावेव प्रत्यक्षसिद्ध इत्युक्तत्वात्। आकाशादौ का गतिरिति चेत् आकाशमितरभिन्नं शब्दाश्रयत्वात् यन्नैवं तन्नैवमित्यादौ पक्षैकदेशे यद्यपि न साध्यं प्रसिद्धं तथापि यत् यद्वैधर्म्यवत् तत् तत्प्रतियोगि-कान्योन्याभाववदिति सामान्यप्रवृत्तव्याप्तिबलेन शब्दा-श्रयत्वात्यन्ताभाववत्प्रतियोगिकान्योन्याभावस्य पूर्व्वमेव सिद्धौ केवलं पक्षनिष्ठतया इदानीं बोध्यते वह्निरिव पर्व्वतनिष्ठतया इत्यन्योऽसत्सिद्धान्तः तद्वैधर्म्यस्य तद-न्योन्याभावव्याप्यत्वात्। शब्दाश्रयत्वात्यन्ताभाववत्त्वमेव वि-पक्षे न गृहीतमिति चेत् तर्हि शब्दाश्रयत्वस्य न लक्षणत्वं न वा लिङ्गत्वं विपक्षगामित्वशङ्काग्रस्तत्वादिति॥ १ ॥

पृथिव्यनन्तरमुद्दिष्टानामपां लक्षणमाह।

शुक्लमधुरशीताएव रूपरसस्पर्शाः द्रवत्वञ्च सांसिद्धिकं स्नेहस्तु स्वरूपतः। ननु शुक्लमेव रूपमपामित्ययुक्तं का-

वि० क्रमानुरोधात् पृथिव्यनन्तरं जललक्षणमाह॥

जले रूपं शुक्लं रसो मधुरः स्पर्शः शीतः द्रवत्वं सांसिद्धिकं तथाच जलसूत्रे पञ्चानां गुणानामुपादानात् पञ्चैव जललक्षणानि मुनेरभिप्रेतानि। तथाच शीतसमानाधिकरणभास्वरशुक्ला-

उ० कालिन्दीजलादौ नैल्योपलम्भात्। मधुर एव रस इत्यप्ययुक्तं जम्बीरकरवीररसादौ आम्लतिक्तादेरुपलम्भात् शीत एव स्पर्श इत्यप्यनुपपन्नं मध्यन्दिने औष्ण्यस्यैवोपलम्भात् सांसिद्धिकञ्च द्रवत्वमव्यापकं हिमकरकादावभावात् स्नेहस्तु स्वरूपासिद्धोऽतिव्यापकश्च जलेऽननुभवात् घृतादौ पार्थिवेऽनुभवाच्च नच जलत्वं जातिरेव जललक्षणं व्यवस्थापकाभावेन तदनुपपत्तेः नच स्नेहसमवायिकारणतावच्छेदकत्वेन तत्सिद्धिः स्नेहत्वस्य कार्य्याकार्य्यवृत्तितया कार्य्यतानवच्छेदकत्वात् तस्माल्लक्षणाभावाद् जलं न भिद्यत इति चेन्नैवम् अभास्वरशुक्लमात्ररूपस्यैव तल्लक्षणत्वात् कालिन्दीजलादौ नैल्यस्याश्रयोपाधिकत्वात् वियद्विकीर्णकालिन्दीजले धावल्योपलम्भात् तेनाभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् अपां लक्षणम्। रसोऽपि मधुर एव जम्बीरकरवीररसाम्लतिक्तादेः पार्थिवोपाधिकत्वात्। जले माधुर्य्यं नानुभूयत एवेति चेन्न

---

वि० समानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तिक्तावृत्तिमधुरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं शीतस्पर्शवत्त्वं सांसिद्धिकद्रवत्ववत्त्वं स्नेहवत्त्वमित्येतानि लक्षणानि जलस्येति भावः। हिमकरकादौ यदि न सांसिद्धिकद्रवत्वं तदा सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षणीयम्। नवशोद-कालिन्दीजलादौ या नीलोपलब्धिः सा आश्रयौपाधिकी भ्रान्तिरेव वियति विक्षेपे तस्यैव धवलिमोपलब्धेः यद्यपि जले कोऽपि रसो नानुभूयते तथापि हरीतक्यादिभक्षणानन्तरं

उ॰ कषायद्रव्यभक्षणानन्तरं तदभिव्यक्तेः। नच हरीतक्या एव तन्माधुर्य्यं जलाभिव्यङ्ग्यं तत्र कषायरसस्यैवोपलम्भात् हरीतक्यामामलक्यामिव कषाय एव रसः तस्यैवानुभवात् नच गुणविरोधेन तत्र रसाऽनारम्भः अवयवानामपि तत्र कषायरसवत्त्वात् षड्रसत्वप्रवादस्तु तत्तद्रसकार्य्यकारित्व-निबन्धनः चित्ररसस्तु प्रमाणाभावादेव निरस्तः चित्ररूपे तु पटोपलम्भ एव प्रमाणं सुरभ्यसुरभ्यवयवारब्धस्तु गुण-विरोधनिरस्त एव चित्रगन्धे प्रमाणाभावात् तस्माद्धरी-तकीभक्षणानन्तरं यन्माधुर्य्यमुपलभ्यते तत् जलस्यैव उप्ल-ब्धता तु द्रव्यविशेषसन्निधानाधीना श्रीखण्डसन्नियोगा-ज्जले शैत्योत्कटतेव कर्कटीभक्षणानन्तरन्तु तिक्तता याऽनु-भूयते सा कर्कट्या एव तदवयवे जलपानमन्तरेणापि ति-क्ततोपलम्भात् रसनाग्रवर्त्तिपित्तद्रव्यतिक्ततायां वा तत्रा-नुभवात् तथाच मधुरेतररसासमानाधिकरणरससमाना-धिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमपां लक्षणम्। एवं

---

वि॰ जलमाधुर्य्यमनुभूयत एव तस्य तद्व्यञ्जकत्वात्, नच जलसंयोगात् हरीतक्यादावेव माधुर्य्योत्पत्तिरिति वाच्यं पाकस्थहरीतक्यादा-वपि जलसंयोगेन मधुरिमोत्पत्त्यापत्तेः कषायनाशरसान्तरो-त्पादतत्प्रागभावादिकल्पनायां गौरवाच्च कर्कटीभक्षणानन्तरं जलस्य या तिक्ततोपलब्धिः सा कर्कट्या एव जलमन्तरेणापि तद्ग्रहात् जम्बीररसादावम्लोपलब्धिः कारवेल्लरसादौ तिक्त-तोपलब्धिश्च एतेन व्याख्याता। कर्पूरकरादिसंयोगाज्जले यदुष्णा-स्पर्शः प्रतीयते सोऽपि कर्पूरकरादेरेव, यद्यपि हिमकरकादौ

उ॰ शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमपां लक्षणं मध्यन्दिने तु यदौष्ण्यं तत्तेजस एव तदन्वयव्यतिरेकानुविधानात् एवं सांसिद्धिकद्रवत्वं स्वरूपत एव लक्षणं सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वा जलत्वम्। स्नेहस्तु गुणविशेषो नतु दुग्धत्वदधित्ववत् सामान्यविशेषः स्निग्धस्निग्धतरस्निग्धतमेति तारतम्यप्रतीतेः नच जातौ तारतम्यं सम्भवति। ननु भवतु स्नेहो गुणः स तु जले वर्त्तत इत्यत्र किं प्रमाणमिति चेन्न सक्तुसिकतादौ जलेन संग्रहे तदनुमानात् संग्रहो हि स्नेहद्रवत्वकारितः संयोगविशेषः स हि न द्रवत्वमात्राधीनः काचकाञ्चनद्रवत्वेन संग्रहानुपपत्तेः नापि स्नेहमात्रकारितः स्त्यानैर्घृतादिभिः संग्रहानुपपत्तेः तस्मादन्वयव्यतिरेकाभ्यां स्नेहद्रवत्वकारितः स च जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रढयति इत्यत्र प्रत्यक्षोपष्टम्भिकैव युक्तिः स्नेहस्य प्रत्यक्षत्वात्

---

वि॰ द्रवत्वं नानुभूयते इति कथं तस्य जलेऽन्तर्भावः सम्भवति तथापि उष्मणा विलीने तत्र जलत्वं प्रत्यक्षसिद्धमेव दिव्यतेजःसंयोगात्तु तत्र द्रवत्वप्रतिरोधः काठिन्यप्रतीतिस्तु तत्र भ्रान्तिरेवेति मुक्तावलीकारः। केचित्तु दिव्यतेजःसंयोगात् जलपरमाणुभ्यां द्व्यणुकं तैश्च त्रसरेण्वादिकं क्रमेण हिमादौ जायते तादृशद्व्यणुकादिकञ्च द्रवत्वरहितं कठिनमेवेति हिमादौ काठिन्यप्रतीतिर्न भ्रान्तिरित्याहुः। स्नेहस्तु जल एव घृतादावपि तदुपष्टम्भकजलस्यैव स्नेहः तत्प्रकर्षाच्च घृतादेर्दहनानुकूलत्वं सक्तुसिकतादौ पिण्डीभावरूपः संग्रहनामकः संयोगविशेषो

सू० तेजो रूपस्पर्शवत् ॥ ३ ॥

---

उ० घृतादौ तु स्नेह उपष्टम्भकजलनिष्ठः संयुक्तसमवायेन तद्गततया भानात् एवं तैलरसादिष्वपि। उपष्टम्भकत्वाति-शयितस्नेहमेव जलम्, स्नेहाधिक्यादेव तस्य जलस्य नाऽनल-विरोधित्वम्। यदि पृथिवीविशेषगुणः स्नेहः स्यात् सर्व्व-पार्थिववृत्तिः स्यात् गन्धवत्। जलत्वञ्च द्रव्यत्वसाक्षाद्व्याप्य-जातिः स्नेहवन्मात्रवृत्तिसंयोगासमवायिकारणतावच्छेदि-काया जातेः परमाणुसाधारण्येन सिद्धत्वात्॥ १ ॥

उद्देशक्रमानुरोधेन तेजोलक्षणमाह।

रूपं भास्वरं स्पर्शश्चोष्णो यद्वत्तत्तेज इत्यर्थः। ननु भास्वरत्वं परप्रकाशकत्वं तादृशञ्च रूपं नोष्मणि न वा चामीकरस्य भर्ज्जनकपालस्थे वारिस्थे वा तेजसि। शुक्लञ्च रूपमुक्तेषु न क्वापि, उष्णश्च स्पर्शो न चान्द्रे न वा चामीकरे तत्कथमेत-

---

वि० द्रवत्वसहितस्नेहकारित एव द्रवत्वमात्रकारित्वे काचकाञ्चन-द्रवत्वादितोऽपि तदुत्पत्त्यापत्तेः नापि स्नेहमात्रकारितः घनीभूतघृतादिभिरपि तदुत्पत्तिप्रसङ्गादित्यलमधिकेन ॥ २ ॥

क्रमप्राप्तं तेजोलक्षणमाह ॥

भास्वरशुक्लरूपवत्त्वम् उष्णस्पर्शवत्त्वञ्च तेजोलक्षणमित्यर्थः। न च सुवर्णोष्मभर्ज्जनकपालादिस्थतेजःप्रभृतिषु परप्रकाशकत्वरूप-भास्वरत्वविशिष्टशुक्लरूपाभावादव्याप्तिरिति वाच्यं तेष्वपि तेज-स्त्वेन तदनुमानात् सुवर्णस्य तेजस्त्वञ्च सुवर्णं तैजसम् अत्यन्ता-

उ० दिति चेन्न उष्मादौ तेजस्त्वेन भास्वररूपानुमानात्। तेज-स्त्वमेव तत्र स्वरूपासिद्धमिति चेन्न उष्णस्पर्शवत्त्वेन तदनु-मानात्, चामीकरे कथमिति चेत् तत्र भास्वररूपाभावेऽपि अत्यन्तानलसंयोगेनानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वेन व्यतिरेकिणा तेजस्त्वानुमानादिति वक्ष्यमाणत्वात् भर्ज्जन-कपालादिनिष्ठे चोष्णस्पर्शवत्त्वेन तेजस्त्वानुमानात्। चतु-र्विधं हि तेजः किञ्चिदुद्भूतरूपस्पर्शं यथा सौरादि, किञ्चि-दुद्भूतरूपमनुद्भूतस्पर्शं यथा चान्द्रम्, किञ्चिदनुद्भूतरूपस्पर्शं यथा नायनम्, किञ्चिदनुद्भूतरूपमुद्भूतस्पर्शं यथा नैदाघं वारिभर्ज्जनकपालादिगतञ्च तेजः। नायनमग्रे साधयि-ष्यते ॥ २ ॥

---

वि० नलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवं यथा पृथि-वीति-व्यतिरेक्यनुमानात् सिद्धम्, उष्मादौ तु उष्णस्पर्शवत्त्वेन उष्ण-स्पर्शोऽपि चान्द्रकरचामीकरादौ जलीयपार्थिवस्पर्शेनाभिभवान्न गृह्यते इति न तत्र द्वितीयलक्षणाव्याप्तिः तेजस्त्वेन तत्र तदनु-मानात्। चतुर्विधं हि तेजः किञ्चिदुद्भूतरूपस्पर्शं यथा सौ-रादि, किञ्चिदनुद्भूतरूपस्पर्शं यथा चक्षुरादि, किञ्चिदुद्भूतरूप-मनुद्भूतस्पर्शं यथा चान्द्रप्रभादि, किञ्चिदनुद्भूतरूपमुद्भूतस्पर्शं यथा भर्ज्जनकपालादिस्थवह्न्यादि। तेजस्त्वञ्च अन्योन्यस्पर्शसमवायिका-रणतावच्छेदकतया सिद्धो जातिविशेषः नित्यस्य स्वरूपयोग्यत्वे-त्वादिनियमाभ्युपगमे तु जन्योष्णस्पर्शसमवायिकारणतावच्छेदक-तया सिद्धं जन्यतेजस्त्वं तदवच्छिन्नसमवायिकारणतावच्छेदक-तया तेजस्त्वजातिसिद्धिरिति मुक्तावलीकारः। २।

सू० स्पर्शवान् वायुः ॥ ४ ॥

त आकाशे न विद्यन्ते ॥ ५ ॥

---

उ० क्रमप्राप्तं वायुलक्षणमाह।

रूपासमानाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वं रसासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वं गन्धासमानाधिकरणानुष्णाशीतस्पर्शसमानाधिकरणजातिमत्त्वं स्पर्शेतरविशेषगुणासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वं वा वायुलक्षणम्॥ ४ ॥

नन्वाकाशकालदिगात्मनामपि रूपादिमत्त्वं कथं न लक्षणमत आह।

अत्र विदिरुपलब्धिवचनः नोपलभ्यन्ते यतोऽतो न ते

---

वि० वायुं लक्षयति।

अत्र स्पर्शोऽपाकजोऽनुष्णाशीतो ग्राह्यः तेन वायवीयो विजातीयस्पर्शो लभ्यते तथा च तादृशविजातीयस्पर्शवत्त्वमेव वायुलक्षणं वैजात्यन्तु वायुस्पर्शे प्रत्यक्षसिद्धमिति ॥ ४ ॥

नन्वाकाशादावपि शीतादिरूपोपलब्धेस्तस्य कथमतीन्द्रियत्वमत आह। यद्वा रूपादिचतुष्कं निःस्पर्शद्रव्ये नास्तीति वस्तुगतिमनुबध्नाह।

ते रूपरसगन्धस्पर्शाः आकाशे न सन्तीत्यर्थः। दधिधवलमाकाशमिति प्रतीतिस्तु सूरकरधवलिमौपाधिकी भ्रान्तिरेव शीतं

उ॰ रूपादयो नियोगतः समुच्चयतो विकल्पतो वा वर्त्तन्ते नभःप्रभृतिषु द्रव्येष्वित्यर्थः। ननु दधिधवलमाकाशमितिकथं प्रतीतिरिति चेन्न मिहिरमहसां विशदरूपाणामुपलम्भा-त्तथाभिमानात् कथं तर्हि नीलं नभ इति प्रतीतिरिति चेन्न सुमेरोर्दक्षिणदिशमाक्रम्य स्थितस्येन्द्रनीलमयशिखरस्य प्रभामालोकयतां तथाभिमानात् यत्तु सुदूरं गच्छच्चक्षुः परावर्त्तमानं स्वचक्षुःकनीनिकामाकलयत्तथाभिमानं जन-यतीति मतं तदयुक्तं पिङ्गलसारनयनानामपि तथा-भिमानात्। इहेदानीं रूपादिकमिति-प्रत्ययात् दिक्-कालयोरपि रूपादिचतुष्कमिति चेन्न समवायेन पृथि-व्यादीनां तल्लक्षणस्योक्तत्वात् नतु सम्बन्धान्तरेणापि इहे-दानीं रूपाद्यन्ताभाव इत्यपि प्रतीतेः सर्व्वाधारतैव दिक्कालयोः॥ ५॥

नन्वपां द्रवत्वं लक्षणमुक्तं तदयुक्तं पृथिव्यामपि द्रवत्वो-पलम्भादित्यत आह।

---

वि॰ नभ इति प्रतीतिरपि सुमेरोर्दक्षिणदिगवस्थितस्येन्द्रनीलमय-शिखरस्य नीलिमविषयिणी भ्रान्तिरेव, केचित्तु सुदूरगतस्य परावर्त्तमानस्य चक्षुषः स्वगोलकस्थकनीनिकापतनात् तद्गत-नीलरूपविषयिणी तादृशप्रतीतिरित्याऊस्तन्न पिङ्गलसारनय-नानामपि तथोपलम्भादिति संक्षेपः॥ ५॥

ननु पृथिव्यादावपि द्रवत्वसत्त्वात् जलसूत्रे जलमात्रस्य द्रव-त्वकथनमसङ्गतमत आह॥

सू॰ सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥

त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ७ ॥

---

उ॰ सर्पिरादीनां यद्द्रवत्वमस्ति तदग्निसंयोगान्निमित्तात् नतु सांसिद्धिकं तादृशञ्चापां लक्षणं द्रवत्वमात्रन्तु पृथिव्या अद्भिः सामान्यं नतु सांसिद्धिकं द्रवत्वमपीति नातिव्याप्तिरित्यर्थः ॥ ६ ॥

ननु तथापि त्रपुसीसलोहादौ तेजसि गतत्वेन तदवस्थैवातिव्याप्तिरित्यत आह।

उपलक्षणञ्चैतत् कांस्यताम्रारकूटपारदादीनामप्युपसंग्रहः। लक्षणञ्चासाधारणञ्च अत्यन्ताग्निसंयोगानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वमेव तथाच सुवर्णादीनामपि

---

वि॰ सर्पिर्घृतम, मधूच्छिष्टं सिक्थकम्, घृतादीनां यद्द्रवत्वम् अग्निसंयोगान्निमित्ताद्भवति तदद्भिः जलैः सामान्यं समानं स्वार्थिकतद्धितप्रत्ययात् अत्र जलवाचकशब्दस्य जलद्रवत्वे लक्षणा तथाच घृतादीनां यन्नैमित्तिकं द्रवत्वं तज्जलगतसांसिद्धिकद्रवत्वतुल्यं द्रवत्वत्वजातेरुभयत्र सत्त्वात् सांसिद्धिकद्रवत्वन्तु घृतादिषु नास्ति जलसूत्रोक्तद्रवपदं सांसिद्धिकद्रवत्वविशिष्टपरमिति नातिव्याप्तिरिति भावः ॥ ६ ॥

एवं रङ्गसीसकादौ द्रवत्वमपि नैमित्तिकमेवेत्याह।

उ० द्रवत्वं नैमित्तिकमेव निमित्तस्याग्निसंयोगस्यान्वयव्यतिरेकसिद्धत्वात्, परन्तु पूर्व्वसूत्रेऽग्निपदमौष्ण्यप्रकर्षवत्तेजःपरम्, इह तु वह्निपरमिति विशेषः। ननु सुवर्णादीनामपि पार्थिवत्वमेव द्रव्यान्तरत्वं वा पीतिमगुरुत्वादेः पार्थिवत्वव्यवस्थापकत्वाद्द्रवत्वानुच्छेदस्य पृथिवीवैधर्म्म्यस्याप्यनुभवात् द्रव्यान्तरत्वव्यवस्थापकत्वादिति चेन्न सुवर्णं तैजसम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा पृथिवीति व्यतिरेकिणा तैजसत्वसिद्धेः। न च जलपरमाणौ विरुद्धता द्रवत्वस्यानित्यत्वेन विशेषणीयत्वात् न च प्रदीपादेः सपक्षाद्धेतोर्व्यावृत्तेरसाधारण्यं सुवर्णं न पार्थिवमिति साध्यार्थत्वात् न चात्र गुरुत्वाधारस्य पक्षत्वे बाधः तदतिरिक्तस्य पक्षत्वे चाश्रयासिद्धिः, द्रवत्वाधिकरणत्वेन पक्षत्वात्, न चात्यन्तिकत्वं दुर्व्वचं, प्रहरपर्य्यन्तमग्निसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वादिति विवक्षितत्वात् न च तरतमादिप्रत्ययादाश्रयनाशाच्च द्रवत्वनाशोऽप्यवश्यं वाच्य इति वाच्यं समानाधिकरणद्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रतियोगिवृत्तिद्रवत्वसामान्यवद्द्रवत्ववत्त्वादित्यस्य हेत्वर्थत्वात् यद्वा पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः प्रहरपर्य्यन्तमनलसंयोगेऽपि पीतरूपभिन्नरूपाऽनाश्र-

---

वि० सुवर्णानामिति बहुवचनेन कांस्य-ताम्र-पित्तल-पारदादीनामप्युपग्रहः। व्याख्यानचास्य सूत्रस्य पूर्व्ववदेव बोध्यम्॥ ७॥

सू० विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥

उ० यत्वात् अनलसंयुक्तजलमध्यस्थितपीतपटवत् । ननु चान्धकारे सुवर्णरूपस्यानुपलब्धिस्तदानीं तद्रूपस्याभिभवाभावात् बलवत्सजातीयग्रहणकृतस्याऽग्रहणस्याऽभिभवपदार्थत्वात् इति चेत् तत्र फलबलेन बलवत्सजातीयसम्बन्धमात्रस्याभिभवपदार्थत्वात् तदुक्तम्,

"भूसंसर्गवशाद्वान्यरूपं नैव प्रकाशते" ।

इति दिक् ॥ ७ ॥

एवं स्पर्शवद्द्रव्यचतुष्कलक्षणप्रकरणं समाप्य वायोर्लक्षणमाश्रयासिद्धमिति तत्परिजिहीर्षया वा आदावनुमानं प्रमाणमुपन्यस्याऽनुमानस्यैव प्रथमं दृष्टानुसारेण प्रामाण्यमुपपाद्य वायुसाधनप्रकरणमारभते ।

यथा गोत्वं प्रति विषाणादीनि लिङ्गानि गृहीतव्याप्तिकानि तथाऽतीन्द्रियवाय्वादिद्रव्यपञ्चकलिङ्गान्यपि सामान्यतो दृष्टानि प्रमाणभावमासादयन्तीति भावः । अत्र

वि० ननु स्पर्शवान् वायुरित्यनेन वायोर्लक्षणमुक्तं तच्च वाय्वासिद्धाऽसिद्धं नहि वायौ प्रत्यक्षं प्रमाणं सम्भवति तस्योद्भूतरूपाभावादित्यतस्तत्रानुमानं प्रदर्शयितुमादावनुमानप्रामाण्यं द्रढयति ।

यथा गोत्वे विषाणित्वादीनि लिङ्गानि सामान्यतो दृष्टानि लोकसिद्धानि प्रमाणानि तथा अतीन्द्रिये वायौ स्पर्शादीनि

उ॰ यद्यपि विषाणित्वमात्रं न गोत्वे लिङ्गं महिषादौ व्यभिचारात्। न च सास्नादिमत्त्वं विशेषणं विशेष्यस्य व्यर्थत्वापत्तेः तथापि गोविषाणे महिषमेषादिविषाणापेक्षया वैलक्षण्यमाकलयतां धूम इव ते ते विशेषा लिङ्गभावमासादयन्त्येव विषाणेष्वपि ऋजुत्ववक्रत्वकठिनत्वसुकुमारत्वह्रस्वत्वदीर्घत्वादयः। ते च विशेषाः निपुणतरवेद्याः सन्त्येव तथा च व्यवहितविप्रकृष्टगोपिण्डे अयं गौर्विषाणविशेषवत्त्वात् पूर्व्वानुभूतगोपिण्डवदित्यनुमानमप्रत्यूहमेव। एवं ककुद्मत्तापि लिङ्गं गोत्वे, प्रान्तेवालधिमत्त्वमपि स्वतन्त्रमेव लिङ्गं गोत्वे, प्रान्ते वाला आधीयन्तेऽस्मिन्निति प्रान्तेवालधिः पुच्छविशेषः अलुक्समासात् गोपुच्छ एवान्तेवालधिशब्देनोच्यते नहि यथा गोपुच्छेषु प्रान्तेवालधित्वं तथाऽश्वमेषादिपुच्छेषु, तेषां सामस्त्येन वालमयत्वात् महिषादिपुच्छे तादृशी प्रलम्बता नास्तीति वैलक्षण्यात् अन्ते-

---

वि॰ लिङ्गान्यपि प्रमाणानीति सूत्रद्वयनिगूढार्थः। तत्र प्रथमसूत्रे विषाणीति प्रशंसायामस्त्यर्थप्रत्ययः तेन च महिषादिव्यावृत्तो विषाणविशेषो लभ्यते स च गोत्वे लिङ्गम् एवं ककुद्मत्तापि। प्रान्तेवालधिरिति प्रान्ते वाला आधीयन्तेऽस्मिन्निति व्युत्पत्त्या पुच्छरूपाङ्गविशेष उच्यते प्रकृष्टोऽन्तेवालधिर्यस्य स प्रान्तेवालधिर्गोपिण्डः, मेषादिपुच्छे तु सामस्त्येन वालमयत्वात्प्रान्तेवालधित्वं महिषादिपुच्छे प्रलम्बत्वादिरूपप्रकर्षाभावात् पुच्छविशेषो गोत्वे लिङ्गम्, सास्ना गलकम्बलं तद्वत्ता गोत्वे लिङ्गम्, विषाणीत्यादिष्वव-

सू॰ स्पर्शश्च वायोः ॥ ९ ॥

---

उ॰ सास्नाधिमत्त्वमपि गोत्वे लिङ्गं मतुब्लोपात् गोपिण्ड उच्यते तथा चायं गौः प्रत्यक्षेसास्नाधिमत्त्वात् पूर्व्वानुभूतगोपिण्डवत्, सास्नावत्ता तु प्रसिद्धैव गोत्वे लिङ्गम्॥ ८ ॥

एवं सकललोकयात्रानिर्व्वाहिणोऽनुमानस्य दृष्टानुसारेण प्रामाण्यमभिधाय वायुसाधनप्रकरणमारिप्समान आह।

लिङ्गमिति शेषः चकारात् शब्दधृतिकम्पाः समुच्चीयन्ते। अनुपलभ्यमानस्पर्शः पृथिव्या एवाऽनुद्भूतरूपायाः स्यादिति चेन्न उद्भूतस्य पृथिवीस्पर्शस्योद्भूतरूपनान्तरीयकत्वात्। तथा च योऽयं स्पर्शोऽनुभूयते स क्वचिदाश्रितः स्पर्शत्वात् पृथिव्यादिस्पर्शवदिति सामान्यतोदृष्टेन स्पर्शाश्रयसिद्धौ स्पर्शाश्रयो न पृथिव्यादिचयात्मकः नीरूपत्वात् नाकाशादिपञ्चात्मकः स्पर्शवत्त्वादितीतरबाधसहकृतेनाष्टद्रव्यातिरिक्तद्रव्यसिद्धिः, एवं शब्दविशेषोऽपि वायौ लिङ्गम्,

---

वि॰ व्यारविषयत्वावच्छेदकम् इति शब्देन परामृश्यते तथायं प्रयोगः अयं गौर्विषाणविशेषवत्त्वात् ककुद्दत्वात् पुच्छविशेषवत्त्वात् सास्नावत्त्वाद्वा पूर्व्वानुभूतगोपिण्डवदिति ॥ ८ ॥

एवं लोकयात्रानिर्व्वाहकस्यानुमानस्य प्रामाण्यमुक्त्वाऽनुमानेन वायुं साधयति।

लिङ्गमित्यनुषज्यते चकारः शब्दहतिकम्पान् समुच्चिनोति

उ॰ तथाहि असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिशब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्याभिघातनिमित्तकः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिघातजभेरीशब्दसन्तानवत् रूपवद्द्रव्याभिघातव्यतिरेकस्तु योग्यानुपलब्धिगम्यः तच्च स्पर्शवद्वेगवद्द्रव्यमदृष्टद्रव्यातिरिक्तमेव परिशेषात्। एवं धृतिविशेषोऽपि वायोर्लिङ्गं तथाहि तृणतूलस्तनयित्नुविमानानां नभसि धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजा चेतनानधिष्ठितद्रव्यधृतित्वात् प्रवाहे तृणकाष्ठनौकादिधृतिवत् अभिध्यानहतविषादिधृतौ च अस्मदाद्यधिष्ठानमेव एवं पत्रिकाण्डादिधृतावपि, नचेश्वराधिष्ठितत्वेन हेतुविशेषणासिद्धिः चेतनपदेन तदितरस्य विवक्षितत्वात्। एवं कम्पोऽपि वायुसत्त्वे लिङ्गं तथाहि इदं रूपवद्द्रव्याभिघातमन्तरेण तृणादौ कर्म्म स्पर्शवद्वेगवद्द्रव्याभिघातजं गुरुत्वप्रयत्नवदात्मसंयोगाजन्यकर्म्मत्वात् नदीपूराहतवेतसवनकर्म्मवदिति गुरुत्वपदेनादृष्टवदात्मसंयोगद्रवत्वसंस्काराणामुपग्रहः तेन तदजन्यकर्म्मत्वं हेतुः। ननु प्रत्यक्ष एव वायुः किमत्र लिङ्गगवेषणयेति चेन्न वायुर्न प्रत्यक्षः नीरूपवहिर्द्रव्यत्वात् गगनवदित्यनुमानादतीन्द्रियत्वस्यैव सिद्धेः। ननु वायुः प्रत्यक्षः स्पर्शाश्रयत्वाद् घटवदिति प्रत्यक्षत्वानुमानमिति चेन्न उद्भूतरूपवत्त्वस्योपाधित्वात्, नच

---

वि॰ तथाच विजातीयस्पर्शेन पर्णादिशब्देन नभसि तृणतूलादीनां धृत्या शाखादीनां कम्पेन च वायुरनुमीयते इतिभावः, अनुमान-

उ॰ रूपादावात्मनि च साध्याव्यापकमेतत् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वात्, अथ चाक्षुषप्रत्यक्षत्वे तत्तन्त्वं तत्रैव तदन्वयव्यतिरेकानुविधानात् स्पार्शनप्रत्यक्षत्वे तु योग्यस्पर्शवत्तामात्रस्य तन्त्रतेति वाच्यं रूपान्वयव्यतिरेकयोरुभयत्रापि तन्त्रत्वात् अन्यथोभयसिद्धस्पर्शेनैव प्रत्यक्षता रूपस्य ग्रहमन्तरेण दृष्टा। किञ्च यदि वायुः प्रत्यक्षः स्यात् सङ्ख्यादिसामान्यगुणोपलम्भोऽपि तत्त्वं स्यात् न चास्त्येव फूत्कारादौ सङ्ख्यायाः परिमाणस्य च ह्रस्ववितस्त्यादेः उभयपार्श्ववर्त्तिनोर्वाय्वोः पृथक्त्वस्य च परत्वापरत्वयोश्च प्रत्यक्षता वायुजातीयस्य व्यक्तिपरतया तु न तत्रापि नियमः पृष्ठलग्नवस्त्रादौ तदनुपलम्भादिति चेन्न व्यक्तिपरतयैव नियमात् पृष्ठलग्नवस्त्रादौ चार्द्रावस्थाने सङ्ख्यादीनां ग्रहणात् अनार्द्रावस्थानदोषात्तु तदग्रहः उद्भूतरूपस्पर्शौ मिलितावेव वहिर्द्रव्यप्रत्यक्षत्वे तन्त्रे प्रभाया नयनगतपीतद्रव्यस्य चन्द्रमहसश्च स्पर्शानुद्भवादप्रत्यक्षत्वं निदाघोष्मणोर्विभक्तावयवाप्यद्रव्याणाञ्च रूपानुद्भवादप्रत्यक्षत्वमितिन्यायवार्त्तिकतात्पर्य्यटीकाकृतः, स्पर्शानुद्भवेऽपि प्रभादीनां प्रत्यक्षतैव अतएव चान्द्रालोके नभसि पक्षिकाण्डादिसंयोगविभागयोः प्रत्यक्षतैवेति सम्प्रदायविदः, नचोद्भूतस्पर्शवत्त्वं सामान्यतोवहिर्द्रव्यप्रत्यक्षताप्रयोजकमितिवाच्यम्, इन्द्रनीलप्रभाया अप्रत्य-

---

वि॰ प्रकारस्त्वन्यथानुसन्धेयः विस्तरभयात् परित्यक्तोऽस्माभिः ॥ ९ ॥

सू० न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ १० ॥

---

उ० क्षतापत्तेः, न चोद्भूतविशेषगुणवत्त्वमेव तन्त्रम् आकाशस्यापि प्रत्यक्षतापत्तेः, न च अन्यमहत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वं तथा रसनागवर्त्ति-पित्तद्रव्यस्य तैजसोद्भवेऽप्यप्रत्यक्षत्वात् तस्मादुद्भूतरूपवत्त्वमेवात्मेतरद्रव्यप्रत्यक्षतातन्त्रं तच्च वायौ नास्तीत्यप्रत्यक्षो वायुः ॥ ९ ॥

ननु प्रत्यक्षतो दृष्टमिह लिङ्गं नास्ति नहि वह्निधूमयोरिवेह प्रत्यक्षेण व्याप्तिग्रहः। किञ्च पृथिव्याद्यन्यतमस्यैव स्पर्शोऽयं भविष्यतीत्यत आह।

अयं स्पर्शो यः पक्षः क्रियते स दृष्टानां पृथिव्यप्तेजसां न भवति रूपासहचरत्वात् तथाचायं स्पर्शः क्वचिदाश्रित इत्यनुमेयमित्यदृष्टलिङ्गः सामान्यतोदृष्टलिङ्गोऽपि वायुः पक्षधर्मताबलादायातइत्यर्थः, यद्यपि दृष्टमेव स्पर्शादिचतुष्कं लिङ्गमिति तथापि वायुना सहागृहीतव्या-

---

वि० ननु विजातीयस्पर्शेन तदधिकरणं वायुर्न सिध्यति पृथिव्याद्यन्यतमेन सिद्धसाधनादित्यत आह।

येन स्पर्शेन वायुरधिकरणतयाऽनुमीयते स स्पर्शो न दृष्टानां पृथिव्यप्तेजसाम्, इतिहेतोः वायुरदृष्टलिङ्गः नास्ति दृष्टमधिकरणतया यस्य तादृशं लिङ्गं यस्य सः दृष्टावृत्तिस्पर्शलिङ्गकोवायुरिति फलितार्थः तथाच पृथिव्यादिना न सिद्धसाधनं नवार्थान्तरं पृथिव्यादिस्पर्शस्य रूपसहचरितत्वनियमादितिभावः।

सू० अद्रव्यवत्त्वेन द्रव्यम्॥ ११ ॥

उ० निकत्वाददृष्टलिङ्गत्वमुक्तं न ह्ययं धर्म्मी वायुरिति प्रतिज्ञाय वायुः साधयितुं शक्यते तथाच सामान्यतोदृष्टादेवेतरबाधसहकृताद्वायुसिद्धिरितिभावः॥ १० ॥

उपलभ्यमानस्पर्शाश्रयमवयविनं साधयित्वा परमाणुलक्षणं वायुं साधयितुमाह॥

द्रव्यमाश्रयभूतमस्यास्तीति द्रव्यवत् न द्रव्यवत् अद्रव्यवत् द्रव्यानाश्रितमित्यर्थः तथाचाकाशवत् परमाणुलक्षणो वायुर्द्रव्यम् अन्येषां पदार्थानां द्रव्याश्रितत्वात् आश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्य इत्यभिधानात् परमाणुभ्यां द्व्यणुकारम्भात् द्व्यणुकादिप्रक्रमेणावयविनो महत आरम्भस्योपपादनीयत्वादिति॥ ११ ॥

वि० अथवा यतो वायुरदृष्टलिङ्गः अदृष्टं रूपसहचरितत्वेनाऽनुपलभ्यमानं लिङ्गं यस्य सः इतिहेतोर्वायावनुमापकविजातीयस्पर्शो न दृष्टानां पृथिव्यादीनामिति समुदितसूत्रार्थः॥ १०॥

एवमवयविनि वायौ सिद्धे तन्निर्व्वाहकतया तत्परमाणुरप्यवश्यं स्वीकार्य्यस्तच्च द्रव्यत्वमप्यावश्यकमित्याह।

द्रव्यम् अधिकरणतया विद्यते यस्य तद्द्रव्यवत् द्रव्यवृत्तीत्यर्थः न द्रव्यवदद्रव्यवत् तस्यभावोऽद्रव्यवत्त्वं विशेषणे तृतीया तथाच द्रव्यवृत्तिभिन्नत्वेन विशेषितं वायुरूपं द्रव्यं स्थूलवायुनिर्व्वाहकतयाऽवश्यं स्वीकार्य्यमित्यर्थः॥ ११॥

सू॰ क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥

उ॰ वायुपरमाणोर्द्रव्यत्वसाधकं हेतुद्वयं समुच्चिन्वन्नाह।

वायुपरमाणुर्द्रव्यमिति शेषः यद्यपि द्रव्यत्वे सिद्धे क्रियावत्त्वं गुणवत्त्वञ्च सिध्यति तत्सिद्धौ च द्रव्यत्वसिद्धिरित्यन्योन्याश्रयः तथाप्युपलभ्यमानस्पर्शाश्रयस्यावयविनो मूलभूतस्य परमाणोरसमवायिकारणसंयोगान्यथानुपपत्त्या क्रियावत्त्वम्, अवयविस्पर्शरूपादेः कारणगुणपूर्व्वकत्वनियमाद् गुणवत्त्वञ्च सिद्धं ताभ्याञ्च द्रव्यत्वमित्यदोषः। तत्र क्रियावत्त्वं सपक्षैकदेशवृत्ति गुणवत्त्वञ्च सपक्षव्यापकम्। चकारात् समवायिकारणत्वं द्रव्यत्वसाधकं समुच्चिनोति। ननु परमाणावेव न प्रमाणं कस्य द्रव्यत्वं साध्यत इतिचेन्न स्थूलकार्य्यस्य क्रियाविभागादिन्यायेन भज्यमानस्याल्पतरतमादिभावात् यतोनाल्पीयः स एव परमाणुः अवयवावयविप्रसङ्गस्यानवधित्वे अनन्तावयवत्वाविशेषे सुमेरुसर्षपादीनां परिमाणाविशेषापत्तिः कारणसंख्याविशेषमन्तरेण परिमाणप्रचययोरपि परिमाणभेदं प्रत्यतन्त्रत्वात्, नच विना-

---

वि॰ वायुपरमाणोर्द्रव्यत्वसाधकं हेतुद्वयमाह।

वायवीयपरमाणु र्द्रव्यमिति शेषः। द्व्यणुकारम्भकसंयोगादिरूपगुणवत्त्वं तदनुकूलक्रियावत्त्वञ्च परमाणावनुमतञ्चैकार्य्यमिति न सन्दिग्धासिद्धो हेतुः, परमाणुसिद्धिप्रकारस्तु त्रसरेणुः सावयवचाक्षुषद्रव्यत्वाद् घटवत् त्रसरेणोरवयवाः सावयवा-

सू॰ अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥

---

उ॰ सावधिरेवाऽयम् अवयवावयविप्रसङ्गः अन्त्यस्य निरवयवत्वेन विनाशानुपपत्तेः सावयवत्वे च निरवधित्वापत्तेस्तत्र च दोषस्योक्तत्वात्। ननु त्रुटिरेवावधि र्दृश्यमानत्वाददृश्यमानकल्पनायां मानाभावादिति चेन्न तस्य चाक्षुषद्रव्यतया महत्त्वानेकद्रव्यत्वयोरावश्यकत्वात् तस्मात् त्रसरेण्ववयवावयव एव परमाणुर्यथा पृथिव्यादौ तथा वायावपीति सिद्धो वायुपरमाणुः ॥ १२ ॥

ननु क्रियावत्त्वाद् गुणवत्त्वाच्च घटादिवत् परमाणोरनित्यत्वमनुमेयमत आह ॥

परमाणुलक्षणवायोरितिशेषः द्रव्यं हि समवायिकारणासमवायिकारणान्यतरनाशान्नश्यति परमाणोस्तु निरवयवतया नैतदुभयमस्ति तथाच विनाशकाभावान्न विन-

---

वि॰ महदवयवत्वात् कपालवदित्यादिः, एवञ्च पृथिव्यादौ यथा परमाणुस्तथा वायुस्थलेऽपि निराबाध एव अवयवावयविपरम्परायास्तुल्यत्वादिति । १२ ।

ननु परमाणुरनित्यः क्रियावत्त्वात् गुणवत्त्वाद्वा घटवत् इत्यनुमानेन परमाणावनित्यत्वं सेत्स्यतीत्यत आह ।

वायुपरमाणोरितिशेषः, नास्ति द्रव्यं समवायिकारणतया यस्य तदद्रव्यं द्रव्यसमवायिकारणकभिन्नं तत्त्वेनेत्यर्थः समवायिकारणजन्यत्वस्य द्रव्यसमवायिकारणकत्वव्याप्यतया परमाणोर्व्यापकाभाववत्त्वेन व्याप्याभाववत्त्वान्नानित्यत्वं तथाहि समवायिकारणा-

सू० वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥ १४ ॥

उ० प्रति क्रियावत्त्वे गुणवत्त्वे च हेतौ सावयवत्वमुपाधिः स च पक्षधर्म्मद्रव्यत्वावच्छिन्नसाध्यव्यापकः केवलसाध्यव्यापकस्तु प्रागभावप्रतियोगित्वमुपाधिः ॥ १३ ॥

द्व्यणुकादिप्रक्रमेणारम्भसिद्धौ सिद्धमपि वायुनानात्वं प्रकारान्तरेणापि साधयितुमाह ॥

वायुसंमूर्च्छनमिति वाय्वोर्वायूनां वा संमूर्च्छनं संयोगविशेषः। स च समानवेगयोर्विरुद्धदिक्क्रिययोः सन्निपातः। स च तृणतूलकादेरूर्द्धगमनेनानुमीयते वाय्वोरूर्द्धगमनस्य सन्निपातस्य चातीन्द्रियत्वात् तृणादीनान्तु प्रत्यक्षाणामूर्द्धगमनलक्षणायाः क्रियायाः प्रत्यक्षायाः स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरजन्यत्वमनुमीयते तथाहि

वि० भावेऽसमवायिकारणस्याप्यभावात् परमाणोर्न विनाशसम्भवः द्रव्यनाशं प्रति तदन्यतरनाशस्य हेतुत्वात् परमाणोर्श्वत्वन्तु पूर्व्वमेव साधितम्। केचित्तु अद्रव्यद्रव्यत्वेनेति सूत्रस्य पाठ इत्याहुः॥१३॥

नन्वाकाशादिवत् वायोरपि न नानात्वं किन्त्वेकत्वमेव, दक्षिणवातोत्तरवातादिव्यवहारस्तु उपाधिभेदादेवोपपादनीय इति तटस्थाशङ्कां निरस्यति।

विरुद्धदिग्गामिनोर्वेगवतोर्वाय्वोः परस्परप्रतीघातरूपं यत् संमूर्च्छनं तृणतूलादीनामूर्द्धगमनानुकूलं तत्सम्पादकतयाऽनुमीयमानं तदेव वायुनानात्वे लिङ्गम्, अन्यथा वायोरेकत्वे संमूर्च्छनानुपपत्त्या तृणादेरूर्द्धगमनानुपपत्तेः तथाच वाय्वोः संमूर्च्छनेन

सू० वायुसन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ १५ ॥

उ० तिर्य्यग्गमनस्वभावस्य वायोरूर्द्ध्वगमनं परस्परप्रतीघातमन्तरेणानुपपद्यमानं परस्परप्रतीघातं साधयति नदीपयःपूरयोस्तथादर्शनात् तदूर्द्ध्वगमनञ्च तृणाद्यूर्द्ध्वगमनानुमेयं नहि तृणादीनामूर्द्ध्वगमनं स्पर्शवद्वेगवद्द्रव्याभिघातनोदनान्यतरद्विनेति ॥ १४ ॥

नन्वदृष्टलिङ्गोवायुरित्युक्तं तथाच कथमेतदित्यत आह।

दृष्टं हि लिङ्गं यत्र प्रत्यक्षेण व्याप्तिग्रहस्तदुच्यते यथा धूमोऽग्नेः, वायुसन्निकर्षे च वायुना सहाविनाभावे प्रत्यक्षं नास्ति नहि भवति यो यः स्पर्शकम्पादिमान् स वायुरिति कस्यचित् प्रत्यक्षं वायोरेवाप्रत्यक्षत्वादतएव तादृशं प्रत्यक्षगृहीतव्याप्तिकं लिङ्गं नास्तीत्यर्थः ॥ १५ ॥

---

वि० तयोरूर्द्ध्वगमनं भवति तेन च तृणादीनामूर्द्ध्वगमनम्, संमूर्च्छनेनोर्द्ध्वगमनन्तु विरुद्धदिग्गामिनोर्वेगवतोर्नद्यादिप्रवाहस्थितजलयोर्दृष्टमिति ॥ १४ ॥

नन्वदृष्टलिङ्गोवायुरिति यत् पूर्व्वमुक्तं तत् कथं सङ्गच्छते दृष्टस्य स्पर्शादेरेव वायुलिङ्गत्वादतआह।

दृष्टं लिङ्गं हि यत्र व्याप्तेः प्रत्यक्षं भवति यथा वह्नेर्धूमः, प्रकृते तु वायुसन्निकर्षेऽपि वायुव्याप्तिप्रत्यक्षं न सम्भवति वायोरतीन्द्रियत्वात् तथाच प्रत्यक्षगृहीतव्याप्तिकं लिङ्गं वायो नास्तीयदृष्टलिङ्गो वायुरिति सङ्गतमेवेत्यर्थः ॥ १५ ॥

सू० सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥

---

उ० तर्हि वायोरनुमानमेव कथमित्यत उक्तमेव द्रढयितुमाह ।

अनुमानं हि त्रिविधं पूर्व्ववत् शेषवत् सामान्यतोदृष्टञ्च । तथाचायमनुभूयमानस्पर्शः क्वचिदाश्रितः स्पर्शत्वात् गुणत्वाद्वेति सामान्यतोदृष्टादेवेतरबाधसहकृतात् अदृष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं सिध्यतीत्यर्थः । गतं तर्हि केवलव्यतिरेकिणेतिचेन्न इतरबाधानन्तरं यत्र सामान्यतोदृष्टं प्रवर्त्तते तत्राऽदृष्टद्रव्यानाश्रितत्वं पक्षविशेषणं सिद्धमादाय अदृष्टद्रव्याऽनाश्रितोऽयं स्पर्शः क्वचिदाश्रित इति प्रतिज्ञार्थोऽदृष्टद्रव्यातिरिक्तद्रव्याश्रितत्वमनादाय न पर्य्यवस्यतीति-प्रतीत्यर्थापर्य्यवसन्नतयाऽन्वयिन एव तत्सिद्धिः । यत्र तु पूर्व्वमेव बाधावतारात् सामान्यतोदृष्टं तत्र प्रतीत्यर्थपर्य्यवसानात् केवलव्यतिरेकीत्यभ्युपगमात् । प्रका-

---

वि० ननु वायुव्यक्तेरप्रत्यक्षत्वे तदनुमानं कथं सम्भवतीत्यतः पूर्व्वोक्तमेव स्मारयति ।

अविशेषो विशेषरहितः विशेषाविशेषित इति यावत् विशेषश्च द्रव्यत्वव्याप्यजातिविशेषो वायुत्वं तथाचानुभूयमानः स्पर्शः क्वचिदाश्रितः स्पर्शत्वादित्यनुमानेन इतरबाधसहकृतेन स्पर्शे अदृष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्धौ अदृष्टद्रव्यातिरिक्तद्रव्यत्वेन वायुरपि साध्यतावच्छेदककोटौ सिध्यतीतिभावः समान्यतोदृष्टादिति कार्य्यकारणभिन्नलिङ्गात् अन्वयव्यतिरेकिलिङ्गादित्यर्थः ।

सू॰　तस्मादागमिकम् ॥ १७ ॥

---

उ॰ रार्थं केवलव्यतिरेकीति तु तुच्छमेव। उभयस्थले प्रकारस्यान्वयिन एवोपस्थितेः व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति-नियमस्याप्रामाणिकः सामग्रीविशेषसाचिव्यात् प्रकारान्तरभानस्यापि सम्भवात् ॥ १६ ॥

ननु चाविशेष इति वायुरयमित्याकाराऽनुमितिर्न भवति किन्त्वदृष्टद्रव्यातिरिक्तद्रव्याश्रितत्वेनैव प्रकारेणेति विवक्षितं यदि, तदा तस्य द्रव्यस्य वायुसंज्ञायां किं मानमत आह।

यस्माद्विशेषाकारेण नाऽनुमितिः तस्माद्वायुरिति नाम आगमिकम्, आगमो वेदः ततः सिद्धमित्यर्थः "वायुर्वै चेपिष्ठा देवता" "वायव्यं श्वेतं छागलमालभेत" "वायुश्च सर्व्ववर्णोऽयं सर्व्वगन्धवहः शुचिः" इत्यादि-विधिशेषीभूतार्थवादादेव वायुसंज्ञाधिगतिः। यथा

---

वि॰ न्यायसूत्रे पूर्व्ववत् शेषवत् सामान्यतो दृष्टमिति त्रिविधमनुमानमुक्तं तत्र पूर्व्ववत् कारणलिङ्गकं केवलान्वयि वा शेषवत् कार्य्यलिङ्गकं केवलव्यतिरेकि वा सामान्यतोदृष्टं कार्य्यकारणभिन्नलिङ्गकम् अन्वयव्यतिरेकि वा इत्यर्थः ॥ १६ ॥

ननु वायुत्वेन यदि नानुमानं तदा तस्य वायुसंज्ञायां किं मानमत आह।

यस्माद्वायुत्वस्वरूपजातिप्रकारेण वायोर्नानुमितिः तस्माद्वायुरिति नाम आगमिकं वेदप्रसिद्धं आगमास्तु "वायुर्वै चेपिष्ठा

उ० "यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्"।
इत्याद्यर्थवादात् स्वर्गसंज्ञायाः।

"वसन्ते सर्व्वशस्यानां जायते पत्रशातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः"॥

इत्यर्थवादात् यवसंज्ञायाः, "अम्बुजो वेतसः" इत्यर्थवादात् वेतससंज्ञायाः। "वराहं गावोऽनुधावन्ति" इत्यर्थवादात् वराहसंज्ञायाः, अन्यथा "स्वर्गकामो यजेत" इत्यादौ विशिष्टसुखानुपस्थितौ यागादिषु स्वर्गार्थिनां प्रवृत्तिर्न स्यात् न स्याच्च "यवमयश्चरुर्भवति" "वैतसे कटे प्राजापत्यं चिनोति" "वाराही चोपानत्" इत्यादौ म्लेच्छप्रसिद्धिमनुरुद्ध्य प्रवृत्त्यनध्यवसायः, म्लेच्छा हि यववराहवेतसशब्दान् कङ्गुवायसजम्बुषु प्रयुञ्जते तथाचार्थवादमन्तरेण सन्देहः स्यादित्यागमादेव तत्तदर्थप्रतीतिरिति भावः नाममात्रमागमिकं द्रव्यसिद्धिस्तु सामान्यतोदृष्टादेव॥ १७॥

---

वि० देवता" "वायव्यं श्वेतं छागलमालभेत" "वायुश्च सर्व्ववर्णोऽयं सर्व्वगन्धवहः शुचिः" इत्याद्याः, तेभ्यो वायुसंज्ञाऽधिगता, यथा "यन्न दुःखेन" इत्यादिना स्वर्गसंज्ञावगतिः, यथा वा "वसन्ते सर्व्वशस्यानाम्" इत्याद्यर्थवादात् यवसंज्ञावगतिः, यथा वा "अम्बुजो वेतस" इत्यर्थवादात् वेतससंज्ञावगमः, यथा वा "वाराही चोपानत्" "वराहं गावोऽनुधावन्ति" इत्याद्यागमाद्वराहसंज्ञावगमः, म्लेच्छा हि यववराहवेतसशब्दान् क्रमेण कङ्गु-काक-जम्बुषु प्रयुञ्जते तथाचार्थवादमन्तरेण सन्देहः स्यात् इत्यागमादेव तत्तदर्थप्रतीतिरित्याशयः। १७।

सू॰ संज्ञा-कर्म्म त्वस्मद्विशिष्टानां लिङ्गम्॥ १८॥
प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्म्मणः॥ १९॥

---

उ॰ एवं वायुप्रकरणं समाप्य तत् किमुन्मादिजल्पित-डित्थ-डवित्थसंज्ञावत् वायुसंज्ञापीत्यागमस्य सर्व्वज्ञप्रणीतत्व-मुपपादयन् श्रौपोद्घातिकमीश्वरप्रकरणमारिप्समान आह।

तुशब्दः स्पर्शादिलिङ्गव्यवच्छेदार्थः संज्ञा नाम कर्म्म कार्य्यं क्षित्यादि, तदुभयमस्मद्विशिष्टानाम् ईश्वर-महर्षीणां सत्त्वेऽपि लिङ्गम्॥ १८॥

कथमेतदित्यत आह।

अत्रापि संज्ञाच कर्म्म चेति समाहारद्वन्द्वादेकवद्भावः संज्ञाकर्त्तुर्ज्जगत्कर्त्तुश्चाभेदसूचनार्थः। तथाहि यस्य

---

वि॰ नन्वागमस्य कथं प्रामाण्यमित्यत आह।

तुशब्दः प्रकरणविच्छेदार्थः इदानीमीश्वरप्रकरणमारब्धमिति भावः। संज्ञा नाम वायुवराहयववेतसादि, कर्म्म कार्य्यं क्षित्य-ङ्कुरादि, एतदुभयमस्मद्विशिष्टानाम् अस्मत्तो विशिष्टानां तत्त-त्कार्य्यसमर्थानां सार्व्वज्ञैश्वर्य्यसम्पन्नानाम् ईश्वरमहर्षीणां लिङ्ग-मनुमापकं तुकारो लिङ्गान्तरव्यवच्छेदार्थो वा तथाचेश्वरमहर्षि-सिद्धौ तत्प्रणीतत्वेन वेदस्मृत्यादेः प्रामाण्यमवश्यमङ्गीकार्य्यमिति यद्यपीदं पूर्व्वमुक्तं तथापि दार्ढ्यार्थमीश्वराद्यनुमानकथनार्थञ्च पुनर्व्वचनम्॥ १८॥

ननु सर्व्वज्ञत्वं संज्ञाकर्म्मकर्त्तुः कुतः सिद्धमित्यत आह।

संज्ञाकर्म्मण इत्यत्र पूर्व्ववत् समाहारद्वन्द्वः प्रत्यक्षप्रवृत्तत्वात् प्रत्यक्षसाध्यत्वात् तत्र संज्ञायाः संज्ञिप्रत्यक्षसाध्यत्वम्, कार्य्यस्य

उ० स्वर्गापूर्व्वादयः प्रत्यक्षाः स एव तत्र स्वर्गापूर्व्वादिसंज्ञाः कर्त्तुमीष्टे प्रत्यक्षे चैत्रमैत्रादिपिण्डे पित्रादेश्चैत्रमैत्रादिसंज्ञानिवेशनवत् एवञ्च घटपटादिसंज्ञानिवेशनमपि ईश्वरसङ्केताधीनमेव यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र साधुः यथा या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा सा सर्व्वाऽपि सर्पविषं हन्तीत्येतादृशी संज्ञा अस्मदादिविशिष्टानां लिङ्गमनुमापकं याऽपि मैत्रादिसंज्ञा पित्रा पुत्रे क्रियते साऽपि "द्वादशेऽहनि पिता नाम कुर्य्यात्" इत्यादि-विधिना नूनमीश्वरप्रयुक्तैव तथाच सिद्धं संज्ञाया ईश्वरलिङ्गत्वम्। एवं कर्म्माऽपि कार्य्यमपीश्वरे लिङ्गं तथाहि क्षित्यादिकं सकर्तृकं कार्य्यत्वात् घटवदिति अत्र यद्यपि शरीराजन्यं जन्यं वा जन्यप्रयत्नाजन्यं जन्यं वा सकर्तृकत्वासकर्तृकत्वेन विवादाध्यासितं वा सन्दिह्यमानकर्तृकत्वं वा क्षित्यादित्वेन न विवक्षितम् अदृष्टद्वारा क्षित्यादेरपि जन्यप्रयत्नजन्यत्वात् विवादसन्देहयोश्चातिप्रसक्तत्वेन पक्षतानवच्छेदकत्वात् किञ्च सकर्तृकत्वमपि यदि कृतिमज्जन्यत्वं तदाऽ-

---

वि० तूपादानप्रत्यक्षसाध्यत्वं पित्रादिना हि पुत्रादिशरीरं दृष्ट्वैव तत्र चैत्रमैत्रादिसंज्ञा निवेश्यन्ते एवं कुलालादयोऽपि कपालादिकं दृष्ट्वैव घटादिकं कुर्व्वन्ति अतो निखिलसाधुसंज्ञाकर्त्तुस्तादृशसंज्ञिप्रत्यक्षस्य क्षित्यादिकार्य्यकर्त्तुस्तदुपादानप्रत्यक्षस्य चावश्यकत्वात् सर्व्वज्ञत्वमर्थवशसम्पन्नमेव अतएव न्यायसूत्रवृत्तौ तद्व्यणुकादिकं पक्षीकृत्य सकर्तृकत्वस्यानुमाने अधिकरणसिद्धान्तन्यायेनेशस्य सर्व्वज्ञत्वसिद्धिरित्युक्तम् अथ क्षित्यङ्कुरादिपक्षकसकर्तृक-

उ॰ अस्मदादिना सिद्धसाधनम् अस्मदादिकृतेरप्यदृष्टद्वारा क्षित्यादिजनकत्वात् उपादानगोचरकृतिमज्जन्यत्वेऽपि तथा, अस्मदादिकृतेरपि किञ्चिदुपादानगोचरत्वात्, कार्य्यत्वमपि यदि प्रागभावप्रतियोगित्वं तदा ध्वंसे व्यभिचार इति तथापि क्षितिः सकर्तृका कार्य्यत्वात् अत्र च सकर्तृकत्वमदृष्टाद्वारककृतिमज्जन्यत्वं कार्य्यत्वञ्च प्रागभावावच्छिन्नसत्ताप्रतियोगित्वं नचाङ्कुरादौ सन्दिग्धानैकान्तिकत्वं साध्याभावनिश्चये हेतुसद्भावसन्देहे सन्दिग्धानैकान्तिकत्वस्य दोषत्वात् अन्यथा सकलानुमानोच्छेदप्रसङ्गात्, न च पक्षातिरिक्ते दोषोऽयमिति वाच्यं राजाज्ञापत्तेः नहि दोषस्यायं महिमा यत् पक्षं नाक्रामति तस्मादङ्कुरस्फुरणदशायां निश्चितव्याप्तिकेन हेतुना तत्र साध्यसिद्धेरप्रत्यूहत्वात् क्व सन्दिग्धानैकान्तिकता तदस्फुरणदशायान्तु सुतरामिति संक्षेपः॥ १८ ॥

---

वि॰ त्वानुमाने पक्षतावच्छेदकं किम्, न तावत् क्षितित्वं परमाण्वात्मकक्षितावंशतो बाधस्वरूपासिद्ध्योः प्रसङ्गात् तत्सामानाधिकरण्येन पक्षत्वमितिचेन्न घटादौ सिद्धसाधनात् जन्यत्वस्य विशेषणत्वे पक्षतावच्छेदकघटकस्य हेतुत्वेन उपनयासम्भवात् उद्देश्यतावच्छेदकविधेययोरैक्यादितिचेन्न स्वरूपसम्बन्धरूपं पदार्थान्तररूपं वा कार्य्यत्वं पक्षतावच्छेदकं प्रागभावप्रतियोगित्वरूपं कार्य्यत्वस्य हेतुः सकर्तृकत्वस्य स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं ध्वंसे बाधादिवारणाय कार्य्यत्वदले सामानाधिकरण्यसम्बन्धेन सत्तावैशिष्ट्यं विवेशनीयमिति संक्षेपः॥ १९ ॥

सू० निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥२०॥
तदलिङ्गमेकद्रव्यत्वात् कर्म्मणः ॥ २१ ॥

---

उ० एवं सूत्राभ्यामीश्वरप्रकरणं समाप्याकाशप्रकरणमारिप्समान आह।

इतिशब्दः प्रकारार्थः उत्क्षेपणादीन्यपि कर्म्माणि संगृह्णाति स्पर्शवद्द्रव्यसञ्चारो निष्क्रमणं प्रवेशनञ्च तद्कार्य्यस्याकाशस्य लिङ्गमिति साङ्ख्याः ॥ २० ॥

तदेतद्दूषयितुमाह।

निष्क्रमणप्रवेशनादिकर्म्म न तावत् समवायिकारणतया आकाशमनुमापयति कर्म्मण एकद्रव्यत्वात् एकमात्रमूर्त्तसमवायिकारणकत्वात् न कर्म्मापि व्यासज्यवृत्तीत्युक्तं न वाऽमूर्त्तवृत्तीति ॥ २१ ॥

---

वि० आकाशं निरूपयितुमाह।

अत्र प्रकारार्थकेतिशब्देनोत्क्षेपणादेरपि ग्रहणं स्पर्शवतां सञ्चारो निष्क्रमणं प्रवेशनञ्च शून्यात्मकाकाशं विनाऽनुपपद्यमानमाकाशनामकं द्रव्यान्तरमनुमापयतीति सांख्यमतम् ॥ २० ॥

तदेतन्मतं निरस्यति।

तत् निष्क्रमणादिकम् अलिङ्गं आकाशस्य लिङ्गं न भवति कर्म्मणः क्रियाया एकं मूर्त्तं द्रव्यमाश्रयो यस्य तत्त्वात् तथाच मूर्त्तमात्रसमवेतं कर्म्म न समवायितयाकाशानुमानसमर्थं समवेतकार्य्यं हि समवायिकारणमाक्षिपति न चाकाशकर्म्मणोः समवायिसमवेतभाव इत्यर्थः ॥ २१ ॥

सू॰ कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ २२ ॥

---

उ॰ ननु चासमवायिकारणतयैवाकाशमनुमापयिष्यति नि-ष्क्रमणप्रवेशनादीत्यत आह।

अनुक्लृप्तिर्लक्षणम् अनुकल्प्यते ज्ञाप्यतेऽनेनेति व्युत्पत्त्या, कारणान्तरस्य असमवायिकारणस्य याऽनुक्लृप्तिर्लक्षणं तद्-वैधर्म्यादित्यर्थः। द्रव्यन्तावदसमवायिकारणं न भवत्येव असमवायिकारणता च कारणैकार्थप्रत्यासत्त्या कार्य्यैकार्थ-प्रत्यासत्त्या च, प्रथमा तन्तुरूपाणां पटरूपं प्रति, इय-ञ्चासमवायिकारणता महतीति संज्ञां लभते गुरुप्रति-पत्तिकत्वात्, द्वितीया च यथा आत्ममनःसंयोगस्य ज्ञा-नादिकं प्रति, इयञ्चासमवायिकारणता लघ्वीति संज्ञां लभते लघुप्रतिपत्तिकत्वात्, आकाशस्य तु निष्क्रमणप्रवे-शनादौ कर्म्मणि न समवायिकारणता नाप्यसमवायिका-रणता तथाच न च कर्म्माकाशसत्त्वे लिङ्गमिति ॥ २२ ॥

---

वि॰ असमवायिकारणविधयाऽपि न गगनस्य गमकं कर्म्मेत्याह।

अनुक्लृप्तिरिति क्तिर्विहितो भाव इति न्यायात् अनुक्लृप्तं वादि-प्रतिवाद्युभयसम्मतं यत् कारणान्तरम् असमवायिकारणं गुणः कर्म्म च तद्वैधर्म्म्यात् द्रव्यत्वरूपतद्वैधर्म्यस्याकाशे सत्त्वात् नास-मवायिकारणतयाकाशमनुमापयितुं निष्क्रमणादिकं शक्नोती-त्यर्थः ॥ २२ ॥

ο

सू॰ संयोगादभावः कर्म्मणः ॥ २३ ॥
कारणगुणपूर्व्वकः कार्य्यगुणो दृष्टः ॥ २४ ॥

---

उ॰ ननु निमित्तकारणमस्तु कर्म्मणाकाशम्, दृश्यते ह्या-
काशे पत्रिकाण्डादीनां सञ्चरणमत आह।

मूर्त्तसंयोगेन कर्म्मकारणस्य वेगगुरुत्वादेः प्रतिबन्धात् कर्म्मणोऽभावोऽनुत्पादो न त्वाकाशाभावात् तस्य व्यापकत्वात्, तस्मादाकाशान्वयोऽन्यथासिद्ध एव नाकाशनिमित्ततां साधयतीत्यर्थः ॥ २३ ॥

एवं साङ्ख्यमते दूषिते शब्दमाकाशे लिङ्गमुपपादयिष्यन् परिशेषानुमानाय पीठमारचयन्नाह।

पृथिव्यादिलक्षणे कार्य्ये ये विशेषगुणा रूपादयस्ते कारणगुणपूर्व्वका दृष्टाः शब्दोऽपि विशेषगुणः जातिमत्त्वे सति वाह्यैकेन्द्रियमात्रग्राह्यत्त्वात् रूपादिवत् तथाच

---

वि॰ निमित्तकारणतयाऽपि नाकाशानुमापकं कर्म्मेत्याह।

यतः संयोगात् संयोगानन्तरं कर्म्मणोऽभावः अनुत्पादः अतआकाशं न कर्म्मणि निमित्तकारणमित्यर्थः। अयं भावः फलपत्रादीनां भूम्यादिसंयोगानन्तरं कर्म्मानुत्पत्तिदर्शनात् संयोगविशेषाभावादिकमेव कर्म्मणि निमित्तकारणं न त्वाकाशं तद्व्यतिरेकेण कर्म्मव्यतिरेकस्यासिद्धेस्तस्य व्यापकत्वादितिभावः। २३।

शब्द एवाकाशानुमापक इत्यभिधातुं भूमिकामारचयति।

कार्य्यस्य यो विशेषगुणः स कारणगुणपूर्व्वक एव दृष्टः यथा घटरूपादिः कपालरूपादिपूर्व्वकः, तथाच शब्दरूपो

सू० कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ २५ ॥

---

उ० तादृशं कार्य्यं नोपलभ्यते यत्र कारणगुणपूर्व्वकः शब्दः स्यादित्यर्थः ॥ २४ ॥

ननु वीणावेणुमृदङ्गशङ्खपटहादौ कार्य्ये शब्द उपलभ्यते तथाच तत्कारणगुणपूर्व्वकः स्यादत आह।

भवेदेवं यथा तन्तुकपालादिषु रूपरसाद्यनुभूयते तत्सजातीयश्च रूपरसाद्यन्तरं पटघटादावुपलभ्यते तथा वीणावेणुमृदङ्गाद्यवयवेषु यः शब्द उपलब्धस्तत्सजातीयश्चेत् वीणावेणुमृदङ्गाद्यवयविन्युपलभ्यते नचैवम्, प्रत्युत निःशब्दैरेवावयवैर्वीणाद्यारम्भदर्शनात् नो रूपैस्तु तन्तुकपा-

---

वि० यो विशेषगुणः श्रोत्रेन्द्रियेणोपलभ्यते तस्य कारणगुणपूर्व्वकत्वा-भावात् न कार्य्यगुणत्वं किन्तु नित्यद्रव्यस्यैव गुणःशब्द इतिश-ब्दाधारतया नित्यद्रव्यसिद्धिरित्यर्थः ॥ २४ ॥

ननु भेरीमृदङ्गादावेव कार्य्ये शब्द उपलभ्यते तथाच तस्य कारणगुणपूर्व्वकत्वमप्यन्यथाऽगत्याऽकार्य्यमिति सर्व्वमेतदाकुलमि-त्यत आह।

शब्दो न भेर्य्यादीनां कार्य्याणां स्पर्शवतां गुणः कुतः कार्य्यान्तरस्य स्वावयवकार्य्यसजातीयस्य शब्दरूपकार्य्यान्तरस्य अप्रादुर्भावात् अननुभवात् अर्थात् भेर्य्यादौ, अयं भावः यथा भेर्य्यादौ रूपादयो विशेषगुणाः स्वावयवरूपादिसजातीया अनुभूयन्ते तथा स्वावय-वशब्दसजातीयः शब्दो भेर्य्यादौ नोपलभ्यते निःशब्दैरपि भेर्य्या-द्यवयवै र्भेर्य्याद्यारम्भात् तथाच शब्दस्याकारणगुणपूर्व्वकत्वमव

सू० परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥

उ० त्वादिभिः पटघटाद्यारम्भस्यादर्शनात् किञ्च यदि शब्दः स्पर्शवतां विशेषगुणः स्यात् तदा तत्र तार-तारतर-मन्द-मन्दतरादिभावो नानुभूयेत नह्येकावयव्याश्रिता रूपादयो वैचित्र्येणानुभूयन्ते तस्मान्न स्पर्शवद्विशेषगुणः शब्दः ॥ ॥ २५ ॥

नन्वात्मगुणो मनोगुणो वा शब्दो भविष्यतीत्यत आह।

शब्दो यद्यात्मगुणः स्यात् तदाऽहं सुखी यते जाने इच्छामीत्यादिवत् अहं पूर्ये अहं वाद्ये अहं शब्दवानित्यादि धीः स्यात् नत्वेवमस्ति, किन्तु शङ्खः पूर्य्यते, वीणा वाद्यते इति प्रतियन्ति लौकिकाः। किञ्च शब्दो नात्मगुणः वाह्येन्द्रियग्राह्यत्वात् रूपादिवत्, अपि च शब्दो

वि० द्यमङ्गीकार्य्यम् एवञ्च शब्दो न स्पर्शवद्विशेषगुणः कपालजत्वे सति अकारणगुणपूर्व्वकप्रत्यक्षत्वादित्यनुमानेन शब्दस्य स्पर्शवद्विशेषगुणत्वाभावः सिध्यति पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं कपालादिरूपादिजन्ये घटादिरूपादौ व्यभिचारवारणायाऽकारणगुणपूर्व्वकेति जलादिपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति अवयविपाकानङ्गीकारेतु सत्यन्तं न देयम्॥ २५॥

इदानीं शब्दस्यात्मगुणत्वं मनोगुणत्वञ्च निराकरोति।

परत्र आत्मभिन्ने समवायात् शब्दो नात्मगुणः शब्दो यद्यात्मगुणः स्यात् तदाऽहं सुखीत्यादिवदहं शब्दवानिति लौकिकमानसप्रत्यक्षं

सू० परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥

---

उ० यद्यात्मयोग्यविशेषगुणः स्याद्बधिरेणाप्युपलभ्येत दुःखादिवत् तस्मात् सुष्ठूक्तं परत्र समवायादिति, अमनोगुणत्वे हेतुमाह प्रत्यक्षत्वादिति नात्ममनसोर्गुण इति समासे कर्त्तव्ये यदसमासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयोरपि गुणत्वं शब्दस्य प्रतिषिद्धमिति सूचितम् ॥ २६ ॥

यदर्थमयं परिशेषस्तदाह।

शब्द इति शेषः। अत्रापि शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यतोदृष्टादष्टद्रव्यातिरिक्तद्रव्यसिद्धिः। गुणश्चायं वाह्यैकेन्द्रियग्राह्यजातीयत्वात् रूपादिवत् अनित्यत्वे सति विभुसमवेतत्वात् ज्ञानादिवत् अनि-

---

वि० स्यात् ननु शब्दस्य श्रावणप्रत्यक्षम्, अस्ति ह्यनुभवः सर्व्वेषां, शब्दं शृणोमीति, मनःपदं दिक्कालयोरप्युपलक्षकं तथाच शब्दो न दिक्कालमनसां गुणः प्रत्यक्षत्वात् रूपादिवदिति व्यतिरेके कालपरिमाणादिवदित्यनुमानप्रकारः ॥ २६ ॥

इदानीमुपसंहरति।

शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यानुमानेन विशेषबाधसहकृतेनाऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं शब्दस्य सिध्यतीति भावः, गुणत्वञ्च तस्य प्रत्यक्षसिद्धं नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण कारणगुणपूर्व्वक एव वायौ शब्दः स्वीकार्य्य इति वाच्यं शब्दो न वायुविशेषगुणः अयावद्द्रव्यभाविलात् सुखा-

सू० द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥ २८॥
तत्त्वम्भावेन॥ २९॥

उ० तत्तञ्च साधयिष्यते। परिशेषसिद्धस्य द्रव्यस्यावयवकल्पनायां प्रमाणाभावान्नित्यत्वं सर्व्वत्र शब्दोपलब्धेर्विभुत्वम्॥ २७॥

शब्दलिङ्गस्य द्रव्यस्य द्रव्यत्वनित्यत्वे अतिदेशेन साधयन्नाह।

अद्रव्यवत्त्वाद्यथा वायोर्नित्यत्वं तथाकाशस्यापि, गुणवत्त्वाद् यथा वायोर्द्रव्यत्वं तथाकाशस्यापीत्यर्थः॥ २८॥

तत् किं बहून्याकाशानि एकमेव वेत्यत आह।

व्याख्यातमिति विपरिणतेनान्वयः। भावः सत्ता सा यथैका तथाकाशमप्येकमेवेत्यर्थः॥ २९॥

वि० दिवत् व्यतिरेके वायवीयस्पर्शवदित्यनुमानेन वायुविशेषगुणभिन्नत्वसिद्धेः यावद्द्रव्यभावित्वञ्च स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत् तदन्यत्वमिति संक्षेपः॥ २७॥

शब्दाश्रयस्य नित्यत्वं द्रव्यत्वञ्चातिदेशेन साधयति।

यथा वायुपरमाणोरद्रव्यवत्त्वेन नित्यत्वं गुणवत्त्वेन च द्रव्यत्वं तथाकाशस्यापीत्यर्थः॥ २८॥

गगनस्य नानात्वं निराकरोति।

तत्त्वं तद्व्यक्तित्वम् एकव्यक्तित्वमिति यावत्, भावेन सत्तया व्याख्यातमिति विपरिणतेनान्वयः सत्ताया यथैकत्वं तथाकाशस्यापीत्यर्थः॥ २९॥

सू॰ शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ ३० ॥

---

उ॰ नन्वनुगतप्रत्यय-महिम्ना सत्ताया एकत्वं सिद्धम् आकाशे कथमेकत्वं तद्दृष्टान्तेन सेत्स्यतीत्यत आह।

तत्त्वमाकाशस्य सिद्धमित्यर्थः वैभवे सति सर्व्वेषां शब्दानां तदेकाश्रयतयैवोपपत्तावाश्रयान्तरकल्पनायां कल्पनागौरवप्रसङ्गः अन्यदपि यदाकाशं कल्पनीयं तत्रापि शब्द एव लिङ्गं तच्चाविशिष्टं न च विशेषसाधकं भेदसाधकं लिङ्गान्तरमस्ति, आत्मनां यद्यपि ज्ञानादिकमविशिष्टमेव लिङ्गं तथापि व्यवस्थातो लिङ्गान्तरादात्मनानात्वसिद्धिरिति वक्ष्यते ॥ ३० ॥

नन्वाकाशस्य एकत्वं तावदस्तु, वैभवात् परममहत्त्वमप्यस्तु, शब्दासमवायिकारणत्वात् संयोगविभागावपि स्याताम् एकपृथक्त्वं कथमत आह।

---

वि॰ ननु सदित्यनुगतप्रतीतिबलादस्तु सत्ताया एकत्वम् आकाशस्य तु तत् कथमित्यत आह।

आकाशस्य तत्त्वमिति पूर्व्वेणान्वयः यथा कुत्रचिदात्मनि कदाचित् सुखरूपमेव कार्य्यं जायते तदैवान्यस्मिन्नात्मनि दुःखरूपमेव कार्य्यं जायते इत्यात्मकार्य्ययोः सुखदुःखयो वैलक्षण्यादात्मनानात्वं तथाकाशे शब्दरूपलिङ्गस्य न कश्चिद्विशेषो येनाकाशनानात्वं सिद्ध्यति न वाकाशनानात्वसाधकं लिङ्गान्तरमस्ति तथाच प्रमाणाभावात् लाघवाच्चाकाशस्य न नानात्वं किन्त्वेकव्यक्तित्वमित्यर्थः ॥ ३० ॥

एकपृथक्त्वमप्याकाशस्यैकत्वनिबन्धनमेवेत्याह।

सू० तदनुविधानादेकपृथक्त्वञ्चेति ॥ ३१ ॥

---

उ० नियमेनैकपृथक्त्वमेकत्वमनुविधत्ते इत्येकपृथक्त्वसिद्धिः, इति आह्निकपरिसमाप्तौ मानसप्रत्यक्षाविषयविशेषगुणवद्द्रव्यलक्षणमाह्निकार्थः। तेन पृथिव्यप्तेजोवाय्वाकाशानां प्रसङ्गत ईश्वरात्मनश्च लक्षणमस्मिन्नाह्निके तेन चतुर्द्दशगुणवती पृथिवी ते च गुणा रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराः। तावन्त एव गन्धमपास्य स्नेहेन सहाऽपाम्। एत एव रसगन्धस्नेहगुरुत्वान्यपास्य तेजसः। गन्धरसरूपगुरुत्वस्नेहद्रवत्वान्यपास्य वायोः। शब्देन सह सङ्ख्यादिपञ्चगुणवत्वमाकाशस्य। सङ्ख्यादिपञ्चकमात्रं दिक्कालयोः। परत्वापरत्ववेगसहितं सङ्ख्यादिपञ्चकं मनसः। सङ्ख्यादिपञ्चकं ज्ञानेच्छाप्रयत्नाश्चेश्वरस्य ॥ ३१ ॥

इति श्रीशङ्करे वैशेषिकसूत्रोपस्कारे द्वितीयाध्यायस्याद्यमाह्निकम् ॥ * ॥

---

वि० आकाशस्यैत्वादि यत्र यत्र एकत्वं तत्रैवैकपृथक्त्वमिति व्याप्तेराकाशस्यैकत्वेनैव एकपृथक्त्वसिद्धिरिति, सूत्रे इतीत्याह्निकसमाप्तिज्ञापनार्थम्। भावनावदवृत्तिविशेषगुणवद्द्रव्यलक्षणमेतदाह्निकार्थः तादृशञ्च द्रव्यं भूतपञ्चकम् ईश्वरश्चेति। ३१।

इति श्री जयनारायण-तर्कपञ्चानन-कृतायां कणादसूत्रविवृतौ द्वितीयाध्यायस्याद्यमाह्निकम्। *।

सू॰ पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥

---

उ॰ इदानीं भूतानां लक्षणानि गन्धादीनि परीक्षिष्यु र्गन्धादीनां स्वाभाविकत्वमौपाधिकत्वञ्च व्यवस्थापयन्नाह।

रूपरसगन्धस्पर्शा यत्र कारणगुणप्रक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः सन्तो लक्षणतामुपयन्ति नान्यथा नहि समीरणे उपलभ्यमानं सौरभं शिलातले उपलभ्यमानं शैत्यं जले उपलभ्यमानमौष्ण्यं वा लक्षणं भवति तदेतदाह पुष्पवस्त्रयोरिति नहि कनककेतकीकुसुमसन्निकृष्टे वाससि कनककेतकीसौरभमुपलभ्यमानं वाससः। नहि वाससः कारणगुणप्रक्रमेण तदुत्पन्नम्, किन्तर्हि कनककेतकीसन्निधानादौपाधिकं नहि वस्त्रे गन्धाभावे केतकीगन्धाभावो लिङ्गम्। किं लिङ्गमत उक्तं गुणान्तराप्रादुर्भाव इति

---

वि॰ ननु पृथिव्यादीनां गन्धवत्त्वादिकं लक्षणं पूर्व्वमुक्तं तत् कथं सङ्गच्छते सुरभिभागसंयुक्तवाय्वादेरपि गन्धोपलब्धेस्तत्रातिव्याप्तेरतो वाय्वादौ गन्धादिप्रतीतेरौपाधिकत्वं व्यवस्थापयति।

गुणान्तरात् तदवयवगुणात् अप्रादुर्भावोऽनुत्पत्तिः गन्धाभावस्य कुसुमीयविजातीयगन्धाभावस्य लिङ्गं हेतुः तथाच वस्त्रे उपलभ्यमानो विजातीयोविवादाध्यासितो गन्धो न वस्त्रसमवेतः वस्त्रावयवगन्धाजन्यगन्धत्वादसन्निकृष्टकुसुमादिगन्धवदित्यनुमानाद्वस्त्रे तादृशगन्धाभावसिद्धिरेवं वाय्वादावपि एवञ्च

सू० व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥

---

उ० गुणान्तरात् कारणगुणात् अप्रादुर्भावोऽनुत्पत्तिः यदि हि वस्त्रे यो गन्ध उपलभ्यते स तस्य स्वाभाविकः स्यात्तदा तदवयवेषु तन्तुषु केतकीसन्निकर्षात् पूर्वं तत्र वस्त्रे चोपलभ्येत न चैवमित्यर्थः तथाच विवादाध्यासितो गन्धो न वस्त्रसमवेतः तदवयवगुणाजन्यविशेषगुणत्वात् शीतोष्णस्पर्शादिवत् ॥ १ ॥

स्वाभाविकं गन्धं पृथिव्या लक्षणमाह ।

पृथिव्यां व्यवस्थितोऽयोगान्ययोगाभ्यां परिच्छिन्नः समानासमानजातीयव्यावर्त्तकतया गन्धोलक्षणमित्यर्थः भवति हि पृथिवी गन्धवत्येव, पृथिव्येव गन्धवतीति, तदेवं समानजातीयेभ्यो जलाद्यष्टभ्योऽसमानजातीयेभ्यो गुणादिपञ्चभ्यो व्यावर्त्तकः स्वाभाविकः पृथिव्यां गन्ध इति व्यवस्थितम् ॥ २ ॥

---

वि० सुरभिर्वायुरित्यादिप्रतीतिः समवायेन सौरभादिप्रकारिका कुसुमाद्यौपाधिकी भ्रान्तिरेवेति न पृथिव्यादिलक्षणस्य वाय्वादावतिव्याप्तिरितिभावः ॥ १ ॥

नन्वेवं सुरभि कुसुममित्यादिप्रतीतेरप्यौपाधिकत्वं स्यादित्यत आह ।

व्यवस्थितः बाधकाभावादवधारितः तथाच बाधाभावान्न सुरभि कुसुममित्यादिप्रतीतेरौपाधिकत्वमितिभावः ॥ २ ॥

सू० एतेनोष्णता व्याख्याता ॥ ३ ॥
तेजस उष्णता ॥ ४ ॥
अप्सु शीतता ॥ ५ ॥

---

उ० गन्धस्य स्वाभाविकत्वव्यवस्थापनप्रकारमुष्णतायां तेजो-
लक्षणेऽप्यतिदिशन्नाह।

अवादिलक्षणे शैत्यादावप्ययमतिदेशो द्रष्टव्यः ॥ ३ ॥

तेजोलक्षणं परीक्षते।

स्वाभाविक्युष्णता तेजोलक्षणमित्यर्थः रूपमपि शुक्ल-
भास्वरमुपलक्ष्यते ॥ ४ ॥

अपां लक्षणं परीक्षते।

स्वाभाविकी शीतता अपां लक्षणमित्यर्थः। तथाच
शिलातलश्रीखण्डादौ नातिव्याप्तिरितिभावः। शीततया
रूपरसावप्युक्तलक्षणौ स्नेहं सांसिद्धिकद्रव्यत्वञ्चोपलक्ष-
यति। ननु उद्देशलक्षणक्रमभङ्गः कुत इतिचेन्न तेजः-

---

वि० पृथिवीलक्षणस्येव उष्णस्पर्शवत्त्वरूपतेजोलक्षणस्यापि न ज-
लादावतिव्याप्तिरित्याह।

एतेन गन्धस्यलीयप्रकारेण उष्णतेति शैत्यादेरप्युपलक्षणम् ॥ ३ ॥

संक्षेपतस्तेजोलक्षणं जललक्षणञ्च सूत्रद्वयेन परीक्षते।

तेजस एव उष्णता नान्येषामिति तेजोलक्षणस्य नातिव्याप्ति-
रितिभावः ॥ ४ ॥

अप्सु शीतता नान्यत्रेति न जललक्षणस्य शिलातलादावति-
व्याप्तिस्तत्र शैत्यप्रतीतेरौपाधिकत्वादिति भावः। वायुलक्षणं
विजातीयस्पर्शवत्त्वमप्युक्तदिशैव परीक्षणीयमिति सूचयितुमुद्दे-

सू० अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काल-
लिङ्गानि॥ ६॥

उ० स्पर्शस्य पृथिवीजलस्पर्शयोरभिभावकत्वसूचनाय, तयोर्मध्ये तेजःपरीक्षाया उक्तत्वात् वायुपरीक्षासूचनार्थं वा क्रमलङ्घनं तथाचापाकजानुष्णाशीतस्पर्शो वायोः स्वाभाविकः सन् लक्षणमित्युन्नेयमिति तात्पर्य्यम्॥ ५॥

तदेवं कारणगुणपूर्व्वकाः स्पर्शवतां विशेषगुणाः गन्धादयः पृथिव्यादीनां लक्षणानीत्युक्तम् इदानीं क्रमप्राप्तं काललक्षणप्रकरणमारभमान आह।

इतिकारो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते तथाचापरमितिप्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः। अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यं तेनायमर्थः बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यते तच्च परत्वमसमवायिकारणसापेक्षम्, न च

वि० व्युत्क्रमः परित्यक्तः। यत्तूपस्कारकारैस्तेजःस्पर्शस्य पृथिवीजलस्पर्शाभिभावकत्वसूचनाय क्रमलङ्घनमित्युक्तं तन्न मनोरमं सुवर्णे चन्द्रकिरणादौ च पृथिवीजलस्पर्शयोस्तेजःस्पर्शाभिभावकत्वस्य सर्व्वसिद्धत्वात्॥ ५॥

काललक्षणमभिधातुमाह।

इतीत्यनन्तरं ज्ञानानीति पूरणीयं तथाच स्थविरमपेक्ष्य युवाऽपरः, युगपदुत्पद्यन्ते, चिरं जीवति व्यासः, क्षिप्रं गच्छति वायुरिति ज्ञानानि कालसाधकानि स्थविरोत्पत्त्यधिकरणक्षणपरि-

रूपाद्यसमवायिकारणं व्यभिचारात् यथायथं गन्धादीनां वायौ परत्वानुत्पादकत्वात् स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारात् न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात् तपनपरिस्पन्दानाञ्च व्यधिकरणत्वात् तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात् आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्य्यभिघातात् सर्व्वभेरीषु शब्दोत्पत्तिप्रसङ्गः तथाच कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगः परत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायकः आत्मनश्च द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षत्वात् अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात्। कालस्य तु तत्स्वभावतयैव कल्पनादयमदोषः। कालेनापि रागसंक्रमः कथं नेतिचेत्

---

वि॰ स्पन्दानन्तरजातत्वज्ञानात् यूनि अपरत्वं जायते ततस्तज्ज्ञानं जायते तत्रापरत्वकार्य्ये किमसमवायिकारणं न तावद्रूपरसगन्धानामन्यतमं तद्भवितुमर्हति वायौ तदनुत्पत्तिप्रसङ्गात् नापि स्पर्शः पाकजस्पर्शोत्पत्तिदशायामपरत्वानुत्पत्तिप्रसङ्गात् स्पर्शवैजात्येनापरत्वादिवैजात्यप्रसङ्गाच्च। नाप्यपकृष्टपरिमाणं परिमाणस्य विजातीयगुणानारम्भकत्वात् नापि तपनपरिस्पन्दो व्यधिकरणत्वात् किन्तु पिण्डमार्त्तण्डोभयसंयुक्तकिञ्चिद्विभुद्रव्यसंयोग एवापरत्वादिकार्य्ये ऽसमवायिकारणम्, तादृशस्वभावत्वं न गगनादेः, कस्मिंश्चिन्मृदङ्गादावभिघातात् यावन्मृदङ्गेषु शब्दोत्-

सू० द्रव्यत्वनित्यत्वे वायुना व्याख्याते॥ ७॥

उ० नियतक्रियोपनायकत्वेनैव तत्सिद्धेः एवं स्थविरमवधिं कृत्वा यूनि अपरत्वोत्पत्तिर्निरूपणीया। युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत् कुर्व्वन्ति इत्यादि-प्रत्ययानाञ्च एकस्मिन् काले एकस्यां सूर्य्यगतौ एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः, न चाप्राप्ता एव सूर्य्यगतयो विशेषणतामनुभजन्ति न च स्वरूपप्रत्यासन्ना एव ताः, तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणप्रापकं यद् द्रव्यं स कालः॥६॥

ननु सिध्यतु कालः, स तु नित्यो द्रव्यं वेति न प्रमाणमत आह।

यथा वायुपरमाणो र्गुणवत्त्वाद्द्रव्यत्वम् अद्रव्यद्रव्यत्वाच नित्यत्वं तथा कालस्यापीत्यर्थः॥ ७॥

---

वि० पत्तिप्रसङ्गः किन्तु तादृशस्वभावतया सिद्धं कालनामकं द्रव्यमेवेत्यपरत्वबुद्धिः कालसाधिका। इदमुपलक्षणं परमिति बुद्धिरपि तथेति मन्तव्यं युगपदिति एकस्यां सूरक्रियायां घटादावेकत्वैकपृथक्त्वादय उत्पद्यन्ते इत्यत्र सूरक्रियाया घटैकत्वाद्याधारत्वं प्रतीयते तच्च न साक्षात्-सम्बन्धेन बाधितत्वात् किन्तु स्वाश्रयसंयुक्तकालसंयोगितपनाश्रितत्वसम्बन्धेनेति तत्सम्बन्धघटकतया कालसिद्धिः उत्पत्तिरूपधात्वर्थस्याधारत्वभानेऽपि स्वाश्रयस्याने स्वाश्रयाश्रयेति वक्तव्यम् एवं चिरं क्षिप्रमित्यादावप्युन्नेयम्॥६॥

कालस्य नित्यत्वं द्रव्यत्वञ्च साधयितुमाह।

वायुपरमाणोरिव कालस्यापि गुणाश्रयत्वाद्द्रव्यत्वं निरवयवत्वान्नित्यत्वमित्यर्थः॥ ७॥

सू० तत्त्वम्भावेन ॥ ८ ॥

---

उ० तथापि सन्तु बहवः काला इत्यत आह।

व्याख्यातमिति विपरिणतेनान्वयः। चिरादिप्रत्ययानां काललिङ्गानां सर्व्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात् सत्तावदेकत्वं कालस्येत्यर्थः। नन्वेवं क्षणलवमुहूर्त्तयामदिवसाहोरात्रपक्षमासर्त्वयनसम्वत्सरादिभेदेन भूयांसः कालास्तत् कथमेक इतिचेन्न भेदमानस्य उपाधिनिबन्धनत्वात् यथा एक एव स्फटिकमणिर्ज्जवातापिञ्छाद्युपाध्युपरागेण भिन्न इव भासते तथैक एव कालः सूर्य्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्य्यावच्छेदभेदेन च भिन्न इव भासते इत्यभ्युपगमात् तथाच कालोपाध्यव्यापकः कालोपाधिः, स्वाधेयकादाचित्काभावप्रतियोग्यनाधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम्। क्षणद्वयञ्च लव इत्याद्यागमप्रसिद्धम्। ननु तथाप्यतीतानागतवर्त्तमानभेदेन कालत्रयमस्तु श्रूयते हि “त्रैकाल्यमुपावर्त्तते” “त्रैकाल्यासिद्धिः” इत्यादीतिचेन्न वस्तुतत्प्रागभावतत्प्रध्वंसावच्छेदेन

---

वि० कालस्य नानात्वं निराकरोति।

भावेन सत्तया तत्त्वं तद्वत्त्वम् एकत्वमितियावत् व्याख्यातमिति वचनविपरिणामादन्वयः कालस्येति शेषः तथाच अनुगतबुद्ध्यादितो लाघवाच्च यथा सत्ताया एकत्वं तथा कालस्यापीति समुदि-

सू० नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ९ ॥

---

उ० त्रैकाल्यव्यवहारात् येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः यत्प्रध्वंसेन यः कालोऽवच्छिद्यते स तस्यातीतकालः तथाचावच्छेदकत्रिलाधीनः कालत्रितयव्यवहारः ॥ ८ ॥

इदानीं सर्व्वोत्पत्तिमतां कालः कारणमित्याह ।

इतिशब्दो हेतौ इतिहेतोः कारणे सर्व्वोत्पत्तिमत्कारणे काल इत्याख्या । हेतुमाह नित्येष्वभावात् अनित्येषु भावादिति नित्येषु आकाशादिषु युगपज्जातः चिरं जातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जात इत्यादिप्रत्ययस्याभावात् अनित्येषु घटपटादिषु

---

वि० तार्थः। क्षणलवमुहूर्त्तयामादिव्यवहारस्य तत्तदुपाधिभेदेनैकेन कालेनैव सम्भवात् कालस्य न नानात्वमितिभावः ॥ ८ ॥

इदानीं कालस्य जन्यमात्रजनकत्वमाह ।

नित्येषु परमाण्वादिषु अभावात् तदानीं जातः इदानीं जात इत्यादि प्रत्ययानामभावात् अनित्येषु द्व्यणुकादिषु तादृशप्रत्ययानां सत्त्वात् कारणे अर्थादनित्यमात्रस्य कारणे कालाख्या कालसंज्ञा, तथाच कार्य्यमात्रं प्रति कालः कारणम् इदानीं घटो जात इत्यादि प्रत्ययानाम् एतत् काल प्रयोज्योत्पत्तिमत्त्वस्य घटादाववगाहनात् नहि कारणत्वं विना कार्य्योत्पत्तिप्रयोजकत्वं सम्भवतीतिभावः इदमापाततः इदानीं घटोजात इत्यादि प्रत्ययेषु

उ॰ यौगपद्यादिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं कालः इत्यर्थः न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्व्वोत्पत्तिमन्निमित्तकारणत्वम् अपि तु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिसंज्ञाबलादेतदध्यवसेयम् ॥ ९ ॥

---

वि॰ एतत् कालवृत्त्युत्पत्तिमत्त्वमेव घटादौ भासते नतु एतत् कालप्रयोज्योत्पत्तिमत्त्वं येन घटाद्युत्पत्तिप्रयोजकतया कालस्य घटादिकारणत्वं स्यात् न च कालिकसम्बन्धेन कार्य्यत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन कालस्य हेतुत्वानङ्गीकारे कार्य्याणां कालिकसम्बन्धेन कालवृत्तित्वं न सम्भवति, अस्मन्मते तु कारणतावच्छेदकसम्बन्धेन कारणाधिकरणनिरूपितकार्य्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तितायां कार्य्यगतायां तादृशकार्य्यकारणभाव एव नियामक इतिवाच्यम्, तथा सति कार्य्यगतानां साक्षात्परम्पराद्यनानासम्बन्धावच्छिन्ननानादेशवृत्तित्वानां विलयप्रसङ्गात् नहि कार्य्यं येन येन सम्बन्धेन तिष्ठति तेन तेनैव कार्य्यकारणभावोऽङ्गीकरणीयः तथा सति तद्घटाद्यनन्तरजातचैत्रादिघटितस्वाश्रयचैत्राद्याश्रयत्वादिसम्बन्धेन तद्घटादेर्भूतलादिवृत्तित्वभङ्गप्रसङ्गात् तद्घटोत्पत्तिदशायां चैत्रस्यानुत्पन्नत्वेन तादृशपरम्परासम्बन्धेन कार्य्यकारणभावस्य कल्पयितुमशक्यत्वात् एवं संयोगसम्बन्धेन घटादेर्भूतलादिवृत्तित्वमपि विलीयेत उत्पत्तिदशायां द्रव्यस्य गुणाभावेन संयोगेन कुत्राप्यसत्त्वात् संयोगसम्बन्धे कार्य्यतावच्छेदकसम्बन्धत्वस्य स्वीकर्त्तुमशक्यत्वाच्चेति संक्षेपः। वस्तुतस्तु कालस्य कार्य्यमात्रकारणतायां "कालादुत्पद्यते सर्व्वम्" इत्याद्यागमा एव मानमिति विभावनीयम् ॥ ९ ॥

सू॰ इत इदमिति यतस्तद्दिश्यं लिङ्गम्॥ १०॥

उ॰ काललिङ्गप्रकरणं समाप्य इदानीं दिग्लिङ्गप्रकरणमारभमाण आह।

दिशः इदं दिश्यं दिगनुमापकम् इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरमिति नियतदिग्देशयोः समानकालयोः पिण्डयोर्यतो द्रव्याद्भवति सा दिगित्यर्थः। नहि तादृशं द्रव्यमन्तरेण भूयसां संयुक्तसंयोगानामल्पीयसां वा पिण्डयोरुपनायकमन्यदस्ति न च तदुपनयमन्तरेण तत्तद्विशिष्टबुद्धिः न च तामन्तरेण परत्वापरत्वयोरुत्पत्तिः न च तदुत्पत्तिं विना तद्विशिष्टप्रत्ययव्यवहारौ। न च काल एव संयोगोपनायकोऽस्तु किं द्रव्यान्तरेणेति वाच्यं कालस्य नियतक्रियोपनायकत्वेनैव सिद्धेः, अनियतपरधर्मोपनायकत्वकल्पनायान्तु काश्मीरकुङ्कुमपङ्करागं कार्णाटकामिनीकुचकलसं प्रत्युपनयेत् आकाशात्मनोरपि तथा परधर्मोपसंक्रामकत्वे स एव प्रसङ्गः, दिशस्तु नियतपरधर्मो-

---

वि॰ इदानीं क्रमप्राप्तदिग्लिङ्गप्रकरणमारभते।

इतइदमिति परमपरं वेतिशेषः तथाचास्मादिदं दूरम् अस्मादिदमन्तिकमिति दैशिकपरत्वापरत्वबुद्धिर्यतस्तद्दिश्यं दिग्लिङ्गं तथा च कालवत् दैशिकपरत्वापरत्वासमवायिकारण-

उ० पसंक्रामकतयैव सिद्धत्वात्रातिप्रसङ्गः एवञ्च क्रियोपनायकात्कालात् संयोगोपनायिका दिक् पृथगेव। किञ्चास्मात् पूर्व्वमिदम् अस्माद्दक्षिणमिदम् अस्मात्पश्चिममिदम् अस्मादुत्तरमिदम् अस्माद्दक्षिणपूर्व्वमिदम् अस्माद्दक्षिणपश्चिममिदम् अस्मात्पश्चिमोत्तरमिदम् अस्मादुत्तरपूर्व्वमिदम् अस्मादधस्तादिदम् अस्मादुपरिष्टादिदम् इत्येते प्रत्यया इतदूदमितीत्यनेन संगृहीताः एतेषां प्रत्ययानां निमित्तान्तरासम्भवात्, किञ्च नियतोपाध्युन्नायकः कालः अनियतोपाध्युन्नायिका दिक्, भवति हि यदपेक्षया यो वर्त्तमानः स तदपेक्षया वर्त्तमान एव, दिगुपाधौ तु नैवं नियमः यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात् एवमुदीच्यादिष्वपि वाच्यम्, यदपेक्षया सूर्य्योदयाचलसन्निहिता या दिक् सा तदपेक्षया प्राची यदपेक्षया सूर्य्यास्ताचलसन्निहिता या दिक् सा तदपेक्षया प्रतीची, सन्निधानन्तु संयुक्तसंयोगाल्पीयस्त्वं ते च सूर्य्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः। एवं प्राच्य-

---

वि० संयोगाश्रयतया दिक् सिद्धति, सा च एकापि उपाधिभेदात् प्राच्यादिव्यवहारं सम्पादयति उपाधिश्च तदीयोदयगिरिसन्निहिता या दिक् सा तदीयप्राची, तदीयोदयगिरिव्यवहिता तु तदीयप्रतीची, तदीयसुमेरुसन्निहिता या दिक् सा तदीयोदीची, एवं सुमेरुव्यवहिता अवाची, उदयगिरिसन्निहिता सुमेरुव्यवहिता आग्नेयी, सुमेरुव्यवहितोदयगिरिव्यवहिता च नैर्ऋती,

सू० द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥
तत्त्वम्भावेन ॥ १२ ॥

---

उ० भिमुखपुरुषवामप्रदेशावच्छिन्ना दिगुदीची, तादृशपुरुषदक्षिणभागावच्छिन्ना दिक् दक्षिणा, वामत्वदक्षिणत्वे तु शरीरावयववृत्तिजातिविशेषौ। गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो दिक् अधः। अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिगूर्द्धा एवञ्चेन्द्राग्नियमनिर्ऋतवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरं प्राच्यादिव्यपदेशात् ॥ १० ॥

दिशो द्रव्यत्वं नित्यत्वञ्च वायुपरमाणुवदित्याह।

गुणवत्त्वाद्द्रव्यत्वम् अनाश्रितत्वाच्च नित्यत्वमित्यर्थः ॥ ११ ॥

एकत्वमतिदिशन्नाह।

दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च सत्तावदेकत्वं तदनुविधानादेकपृथक्त्वम् ॥ १२ ॥

---

वि० सुमेरुसन्निहिता उदयगिरिव्यवहिता च वायवी, सुमेरुसन्निहिता उदयगिरिसन्निहिता च ऐशानी, अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयः ऊर्द्धम्, पतनजन्यसंयोगाश्रयः अधः। "सर्व्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित" इत्यादिवचनात्, एवमेव मुक्तावलीकारः ॥ १० ॥

दिशि द्रव्यत्वं नित्यत्वञ्च कथयति।

एतत्सूत्रं पूर्व्ववद्व्याख्येयम् ॥ ११ ॥

पूर्व्ववन्नानात्वं निराकरोति।

एतस्यापि पूर्व्ववदेव व्याख्यानम् ॥ १२ ॥

सू० कार्य्यविशेषेण नानात्वम्॥ १३॥

आदित्यसंयोगाद्भूतपूर्व्वाद्भविष्यतो भूताच्च प्राची॥ १४॥

---

उ० ननु यद्येकैव दिक् कथं तर्हि दश दिश इति प्रतीतिव्यवहाराविव्यत आह।

कार्य्यविशेषः कार्य्यभेदस्तेन नानात्वोपचार इत्यर्थः॥ ॥ १३॥

तमेव कार्य्यभेदं दर्शयन्नाह।

प्राक् अस्यां सविता अञ्चतीति प्राची तथाच यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो भूतपूर्व्वो भविष्यन् वा भवन् वा सा दिक् प्राची अत्र पुरुषाभिसन्धिभेदमाश्रित्य कालत्रयोपवर्णनम्, भवति हि कस्यचित्पूर्व्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं

---

वि० दिश एकत्वेऽपि प्राच्यादिव्यवहारमुपपादयति।

कार्य्यविशेषेण जन्यमूर्त्तरूपोपाधिना नानात्वं प्राच्यादिनानाव्यवहारः, वस्तुत एकैव दिगित्यर्थः॥ १३॥

कार्य्यविशेषं दर्शयति।

आदित्यसंयोगादिति प्राथमिकादित्यादि, भूतपूर्व्वात् अतीतात्, भूतादिति आदिकर्म्मणि निष्ठाप्रत्ययः वर्त्तमानादित्यर्थः। प्रथममस्यामादित्योऽञ्चतीति प्राची तथाच प्राथमिकादित्यसंयोगाधार एव प्राचीव्यवहारनियामकोपाधिः तादृशसंयोगश्चामं म पूर्व्वेद्युरत्र प्रथममादित्यसंयोगो जात इत्याकारकमतीतसं-

सू० तथा दक्षिणा प्रतीची उदीची च*॥ १५॥

उ० वृत्त इतीयं प्राचीति प्राचीव्यवहारः कस्यचिदपरेद्यु-
रस्यां आदित्यसंयोगः प्रथमं भावीत्यभिसन्धाय प्राची-
व्यवहारः कस्यचिदिदानीं अस्यां आदित्यसंयोगो भव-
न्तीत्यभिसन्धाय प्राचीव्यवहारः भूतादिति आदिकर्म्मणि
क्तप्रत्ययः तेनाभिसन्धेरनियमात् यदाप्यादित्यसंयोगो
नास्ति रात्रौ मध्याह्नादौ वा तत्रापि प्राचीव्यवहारानु-
गमः सिद्ध्यतीतिभावः॥ १४॥

दिगन्तरव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह।

तद्वदेव दक्षिणदिग्वर्त्तिनगादिना सहादित्यसंयोगा-

वि० योगविषयकं कस्यचिद्व्यवहर्त्तु भवति, कस्यचिच्च इदानीमत्रा-
दित्यसंयोगः प्रथमं भवतीति वर्त्तमानविषयकम् कस्यचित्त्वा-
त्रादित्यसंयोगः श्वः प्रथमं भविष्यतीति भविष्यद्विषयकं भव-
तीति ज्ञापनाय पञ्चम्यन्तत्रयम्, तादृशसंयोगाधारतया ज्ञायमान
उदयगिरिस्तत्सन्निहितत्वज्ञानात्प्राचीव्यवहार इति हृदयम्,
इदन्त्ववधातव्यम् उदयगिरावुदयगिरिसन्निहितात्वभावात् कथं
प्राचीव्यवहारः न च व्यवधानराहित्यमेव सन्निहितत्वं तच्च तत्रा-
बाधितमिति वाच्यं तथा सति उदयगिरेः स्वापेक्षया प्राचीत्वा-
पत्तेरिति॥ १४॥

प्रतीच्यादिव्यवहारेऽप्ययमेव रीतिरित्याह।

दक्षिणादिव्यवहारोऽपि तथा कश्चिदुपाधिमादाय निर्व्वाह्य
इत्यर्थः उपाधिस्तु इतइदमित्यादिसूत्रव्याख्यायां द्रष्टव्यः॥ १५॥

* उदीचीति चेत्यपि पाठः।

सू॰ एतेन दिगन्तरालानि व्याख्यातानि॥ १६॥

द्भूतपूर्व्वाङ्गविष्यतो भूताद्वा दक्षिणाव्यवहारः एवं प्रतीच्युदीच्योरपि व्यवहार उन्नेयः। वामत्वदक्षिणत्वे नियते एव॥ १५॥

दिगन्तरालव्यवहारेऽपीममेव प्रकारमतिदिशन्नाह।

उ॰ प्राचीदक्षिणयोर्दिशोर्लक्षणसाङ्कर्य्येण दक्षिणपूर्व्वा दिगिति व्यवहारः एवं दक्षिणपश्चिमा पश्चिमोत्तरा उत्तरपूर्व्वेत्यूह्यम् एते चादित्यसंयोगा येन विभुना द्रव्येणोपनीयन्ते सा दिगिति कणादरहस्ये व्युत्पादितं विस्तरतः॥ १६॥

चतुर्णां भूतानां रूपादीनि लक्षणानि कारणगुणपूर्व्वकतया तात्त्विकानि अन्यथात्वौपाधिकानीति व्यवस्थितं पूर्व्वमेव, विशेषगुणशून्यविभुलिङ्गश्चोक्तम् इदानीमाकाशस्य लिङ्गं शब्दः परीक्षणीयः सन्ति चात्र तान्त्रिकाणां विप्रतिपत्तयः, केचिच्छब्दं द्रव्यमाचक्षते, केचिद्गुणम्, गुणत्वे सत्यप्येके नित्यमाहुः अपरे त्वनित्यम्, अन्ये तु शब्देऽपि स्फोटाख्यं शब्दान्तरमाहुः। तदत्र परीक्षामारभमाणः परीक्षाप्रथमाङ्गं संशयमेव तावल्लक्षणतः कारणतश्च व्यवस्थापयन्नाह।

अनयैव रीत्या आग्नेय्यादिव्यवहार उपपादनीय इत्याह।

वि॰ दिगन्तरालानीत्युपलक्षणम् ऊर्द्ध्वमधश्चापि ज्ञेयम्॥ १६॥

इदानीं शब्दं परीक्षिषुः परीक्षाङ्गसंशयस्य कारणं निर्दिशति।

सू॰ सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः॥ १७॥

---

उ॰ सामान्यप्रत्यक्षादिति सामान्यवतोधर्म्मिणः प्रत्यक्षात् ग्रहणात् मतुब्लोपात्, विशेषाप्रत्यक्षादिति विशेषस्य परस्परव्यावर्त्तकस्य धर्म्मस्य वक्रकोटरादेः शिरःपाण्यादेश्चाप्रत्यक्षादग्रहणात् विशेषस्मृतेः विशेषस्य कोटिद्वयस्य स्थाणुत्वपुरुषत्वलक्षणस्य स्मरणात् स्मरणमपि ग्रहणपरं क्वचिदनुभूयमानधर्म्मयोरपि कोटित्वात् चकाराददृष्टादेः संशयकारणस्य संग्रहः, असाधारणोधर्म्मोऽनध्यवसायात्मकज्ञानजनक इति नोक्तः, यद्वा असाधारणस्यापि व्यावृत्तिद्वारा कारणत्वं सपक्षविपक्षव्यावृत्तिः साधारणधर्म्म एवेति नोक्तः, विप्रतिपत्तिरपि विरुद्धप्रतिपत्तिद्वयजन्यं वाक्यद्वयं शब्दोनित्य इत्येकं शब्दोऽनित्य इत्यपरं तदुभयं तदुभयजन्यञ्च ज्ञानद्वयमयुगपद्भावित्वात् सम्भूय न संशायकमतस्तत्रशब्दत्वादिरसाधारणः, सत्त्वप्रमेयत्वादिः साधारणो वा धर्म्मः संशायकइति पृथङ्नोक्ता समानतन्त्रे गौतमीयेऽनध्यवसायज्ञानस्यानभ्युपगमात् असाधारणोधर्म्मः

---

वि॰ सामान्यस्य साधारणधर्म्मस्य प्रत्यक्षात् ज्ञानात् विशेषस्य एककोटिव्याप्यस्य अप्रत्यक्षात् अज्ञानात् विशेषस्य कोटिद्वयस्य स्मृतेर्ज्ञानात् संशयो भवतीतिशेषः। तथाच संशयं प्रति साधारणधर्म्मज्ञानम् एककोटिव्याप्यनिश्चयाभावः कोटिद्वयज्ञानञ्च

उ॰ संशयकारणत्वेनोक्तः विप्रतिपक्षे विरुद्धवाक्यद्वयस्यान्वयव्यतिरेकशालितया संशयकारणत्वमुक्तम्, न्यायभाष्ये च उपलभ्यमानत्वं यत् संशयकारणमुक्तं सदप्युपलभ्यते असदप्युपलभ्यते इति उपलभ्यमानमिदं सदसद्वेति यथानुपलभ्यमानत्वं सदपि नोपलभ्यते मूलककीलकादि, असदपि नोपलभ्यते गगनारविन्दादि, तथाच पञ्चविधः संशय इति तदेतत्सामान्यमेवेति सामान्यप्रत्यक्षादित्यनेनैव गतार्थम्। न्यायवार्त्तिकेऽपि यत् कारणभेदेन संशये चित्वमुक्तं तदपि न सम्भवति व्यभिचारेण समानधर्म्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात् नहि तृणारणिमणिजन्यवह्नौ वैजात्यवद्त्रापि वैजात्यं कल्पनीयं संशयत्वावच्छिन्नकार्य्यं प्रति समानधर्म्मत्वेनैव कारणतायाः कल्पनात्, यच्च प्रधानविधिकोटित्वप्रधाननिषेधकोटित्वादि वैजात्यमुक्तं तदननुगतत्वान्नावच्छेदकं तथाच संशयो न त्रिविधो न वा पञ्चविधः किन्त्वेकविध एव, प्रकारान्तरेण तु द्वैविध्यं सूत्रकृदेव स्पष्टयति। ननु जिज्ञासाजनकज्ञानं संशय इति न लक्षणम् अनध्यवसायेऽपि गतत्वात्, संस्काराजनकज्ञानं संशय इत्यपि निर्व्विकल्पकसाधारणं विशिष्टज्ञानत्वेन संशयस्यापि संस्कारजनकत्वात्। संशयत्वञ्च जातिरपि न लक्षणं धर्म्म्यंशे

---

वि॰ हेतुरित्यर्थः, चकारात् न्यायसूत्रोक्तयोः असाधारणधर्म्मज्ञानविप्रतिपत्तिवाक्यज्ञानयोः संग्रहः, साधारणादिधर्म्मज्ञानानां का-

सू॰ दृष्टञ्च दृष्टवत्॥ १८॥

उ॰ संशयत्वाभावेन तदंशे तज्जात्यभावात् जातेश्चाव्याप्यवृत्तित्वानभ्युपगमात् इति चेत् एकस्मिन् धर्म्मिणि विरोधिनानाप्रकारकं ज्ञानं संशय इति तल्लक्षणात्॥ १७॥

द्विविधः संशयो वहिर्व्विषयकोऽन्तर्व्विषयकश्च वहिर्व्विषयकोऽपि दृश्यमानधर्म्मिकोऽदृश्यमानधर्म्मिकश्च तत्र दृश्यमानधर्म्मिको यथा ऊर्द्धत्वविशिष्टस्य धर्म्मिणो दर्शनात् अयं स्थाणुः पुरुषो वेति, अदृश्यमानधर्म्मिको यथा अरण्ये झाटाद्यन्तरिते गोगवयादिपिण्डे विषाणमात्रदर्शनात् अयं गौर्गवयो वेति वस्तुतस्तत्रापि विषाणधर्म्मिक एव सन्देहो विषाणमिदं गोसम्बन्धि गवयसम्बन्धि वेति, विवक्षामात्रात्तु द्वैविध्याभिधानम्। यत् सामान्यं संशयहेतुस्तदनेकत्र दृष्टं संशायकम् एकत्र धर्म्मिणि वा दृष्टं संशयहेतुरित्यत्र प्रथमां विधामाह।

दृष्टमूर्द्धत्वं संशयहेतुः दृष्टवदिति वतिप्रत्ययः तेन

---

वि॰ र्थतावच्छेदककोटौ कारणाथवहितोत्तरत्वस्य निवेशान्न व्यभिचारः, कारणस्य त्रैविध्यात् संशयस्त्रिविध इतिभावः॥ १७॥

कोटिद्वयसहचरितो धर्म्मः साधारणधर्म्मः स च क्वचिद्धर्म्मिद्वये प्रत्यमानः संशायकः क्वचिदेकत्रैव धर्म्मिणीति, तत्राद्यमाह।

यत्र पुरोवर्त्तिनि वस्तुनि दृष्टे अयं स्थाणुः पुरुषो वेति संशयस्तद् दृष्टं वस्तु, तत्र पूर्व्वं स्थाणुपुरुषयोर्दृष्टं यदूर्द्धत्वादिकं तद्वत्

सू॰ यथादृष्टमयथादृष्टत्वाच्च ॥ १९ ॥

---

उ॰ दृष्टाभ्यां स्थाणुपुरुषाभ्यां तुल्यं वर्त्तते पुरोवर्त्तिनि यदूर्द्ध्वत्वं तद्दृष्टं संशयहेतुरित्यर्थः ॥ १८ ॥

एकधर्म्मिविषयं यद्दृष्टं तदुदाहरति।

संशयहेतुरितिशेषः चकारः पूर्व्वोक्तसमुच्चयार्थः अयथादृष्टत्वाद्धेतोर्यथादृष्टमपि संशायकं यथा चैत्रो यथादृष्टः केशवान्, कालान्तरे अयथादृष्टः केशविनाशतोदृष्ट इत्यर्थः। क्रमेण तत्रैव चैत्रे वस्त्रावृतमस्तके दृष्टे सति भवति संशयश्चैत्रोऽयं सकेशो निष्केशो वेति, तत्र हि चैत्रत्वं समानोधर्म्मः संशायकः स चैकत्रैव दृष्ट इत्यभिन्न एव धर्म्मिणि दृष्टः संशयहेतुः ॥ १९ ॥

---

वि॰ तदाश्रयः तथाच धर्म्मिद्वये कोटिद्वयसहचरितत्वेन प्रसिद्धमार्ध्वं यदूर्द्ध्वत्वादिकं तज्ज्ञानादेव पूर्व्वोक्तः संशय इतिभावः। १८।

एकत्र कोटिद्वयसहचरितं धर्म्ममाह।

भवति हि प्रावृतशिरसि चैत्रे अयं केशवान् निष्केशो वेत्यादिसंशयः तत्कारणञ्च केशतदभावसहचरितचैत्रत्वज्ञानं तदुभयसाहचर्य्यज्ञानञ्च चैत्ररूपैकधर्म्यन्तर्भावेणैव चैत्रत्वे भवतीत्याह यथादृष्टमिति केशसहचरितत्वेन दृष्टमेव चैत्रत्वम् अयथादृष्टत्वात् केशाभावसहचरितत्वेन कदाचिद्दृष्टत्वात् संशयप्रयोजकमितिशेषः केशनखादीनां शरीरावयवत्वाभावात् तदपचये न पूर्व्वशरीरनाशः, यद्यपि बाल्यादिभेदेन चैत्रशरीरं नाना तथाप्यत्र चैत्रादिशरीरगतं तत्तद्व्यक्तित्वमेव साधारणो धर्म्म इति न किञ्चिदनुपपन्नम्। १९।

सू० विद्याऽविद्यातश्च संशयः॥ २०॥

---

उ० उपलभ्यमानत्वं समानमेव धर्मं संशयकारणमाह।

आन्तरसंशयोहि विद्याऽविद्याभ्यां भवति यथा मौहूर्त्तिकः सम्यगादिशति चन्द्रोपरागादि, असम्यगपि, तत्र स्वज्ञाने संशयोऽस्य जायते सम्यगादिष्टमसम्यग्वेति, यद्वा ज्ञानं हि क्वचिद्विद्या भवति क्वचिच्चाविद्या अप्रमा भवति तथाच ज्ञायमानत्वात् सदिदमसद्वेति संशयो जायते, पुनः संशयग्रहणमिहापि सामान्यप्रत्यक्षादेव संशयो नतु निमित्तान्तरादिति सूचनार्थं तथाच "समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय" इति गौतमीये लक्षणे उपलब्ध्यनुपलब्ध्यव्यवस्थेत्यस्य पृथगेव संशयकारणत्वं कैश्चिदुक्तं तन्निरस्तम्॥ २०॥

---

वि० प्रामाण्यादिसंशयस्यापि साधारणधर्म्मज्ञानसहकृतस्यैव विषयसंशायकत्वमित्याह।

अत्र यथासंख्यमन्वयः विद्याऽविद्ययोः प्रमाभ्रमयोर्यः प्रमात्वभ्रमत्वयोः संशयः, चकारात् विषयसंशयश्च सामान्यप्रत्यक्षादेव भवतीतिशेषः तथाच पर्व्वतो वह्निमान् हृदोवह्निमानित्यादिप्रमाभ्रमयोर्यः प्रमात्वभ्रमत्वसंशयः स ज्ञानत्वरूपसाधारणधर्म्मज्ञानाद्भवति एवं तादृशसंशयोत्तरं पर्व्वतो वह्निमान्नवा हृदोवह्निमान्नवेत्यादिसंशयोऽपि ज्ञायमानत्वरूपसाधारणधर्म्मज्ञानादेव भवति, प्रमात्वादिसंशयश्चाऽगृहीतप्रामाण्यकविपरीतनिश्चयस्य संशयविरोधितया तद्विघटने उपयुज्यते नतु तन्मात्रादिविषयसंशय इति भावः। २०।

सू० श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ २१ ॥

उ० एवं लक्षणतः स्वरूपतस्य परीक्षाप्रथमाङ्गं संशयं व्युत्पाद्य इदानीं परीक्षाविषयं शब्दं धर्मिणं दर्शयन्नाह।

श्रोत्रं ग्रहणं ग्रहकरणं यस्य स श्रोत्रग्रहणः, अर्थ इति धर्मीत्यर्थः तथाच शब्दवृत्तिधर्मेषु श्रोत्रग्राह्येषु शब्दत्वतारत्वादिगुणत्वसत्त्वादिषु नातिव्याप्तिः अर्थपदेन धर्मिपरेण जातिधर्मित्वम् अभिप्रेतम् अतः स्फोटनामा शब्दसमवेतः शब्दो नास्तीति सूचितम्। नन्वेकं पदम् एकं वाक्यमिति प्रतीतिबलादवश्यं स्फोटोऽङ्गीकर्त्तव्यः नहि बहुवर्णात्मके पदे बहुवर्णात्मके वा वाक्ये भवत्येकत्वप्रत्ययः, स्फोट इति चार्थस्फुटीकरणाधीना संज्ञा, वर्णानां प्रत्येकं तावदर्थप्रत्ययाजनकत्वमेव, मिलनन्वेकवक्तृकाणामाशुतरविनाशिनामसम्भवीति स्फोटादेवार्थप्रत्ययः तज्ज्ञानमन्तरेणार्थस्फुटीभावाभावात्, स च स्फोटो यद्यपि पदभावेनावस्थितेषु सर्व्वेष्वेव वर्णेषु तथापि चरमवर्णे स्फुटीभवति। मैवं सङ्केतवद्वर्णत्वं पदत्वं तथाच सङ्केतबलादेव पदार्थ-

---

वि० इदानीं शब्दं धर्म्मिणं लक्षणमुखेन व्यवस्थापयति।

श्रोत्रेण गृह्यतेऽसौ श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषय इत्यर्थः। शब्दत्वादेरपि तादृशत्वादर्थ इति जातिमानिति तदर्थस्तथाच श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वमेव शब्दलक्षणं पर्य्यवसितम्, तेनाश्रुतशब्दे नाव्याप्तिर्नवा सत्त्वगुण-

सू० तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्य उभयथा दृष्टत्वात्॥ २२॥

उ० प्रतीतौ किं स्फोटेन वर्णानामव्वन्नामप्येकार्थप्रतिपादकत्वमेकं धर्म्ममभिप्रेत्य एकं पदमिति भाक्तो व्यवहारः एवं वाक्येऽपि, यदि वर्णातिरिक्तः पदात्मा कश्चित् प्रत्यक्षतोगृह्येत स्वीक्रियेतापि स्फोटः सोऽयं स्फोटवादस्तुच्छत्वादुपेक्षितः सूत्रकृता॥ २१॥

तदेवं शब्दे धर्म्मिण्युपस्थिते गुणत्वे सत्येव तस्याकाशलिङ्गत्वम् अतोगुणत्वव्यवस्थापनाय त्रिकोटिकं संशयमुपपादयन्नाह।

शब्दे संशय इतिशेषः। शब्दे शब्दत्वं श्रोत्रग्राह्यत्वं चोपलभ्यते, तच्च तुल्यजातीयेषु चयोविंशतौ गुणेषु अर्थान्तरभूतेषु द्रव्येषु कर्म्मसु च विशेषस्य व्यावृत्तेः उभयथा उभयत्र दर्शनात् शब्दः किं गुणोद्रव्यं कर्म्म वेति संशयं जनयति सामान्यविशेषसमवायकोटिकत्वन्तु सत्त्वकारणवत्त्वादिवैधर्म्म्यदर्शनान्न भवति, ननु चासाधारणधर्म्मस्याऽन-

वि० त्वादिकमादाय गुणान्तरेष्वतिव्याप्तिरित्यत्र प्रत्यक्षसिद्धः शब्दो धर्म्मी न शक्योऽपलपितुमितिभावः॥ २१॥

केचित्तु सूक्ष्मः शब्दः, महाञ्छब्द इत्यादिव्यवहाराद्द्रव्यमेव शब्द इत्याहुस्तन्मतं निराकर्त्तुमारभते।

शब्दे गृह्यमाणस्य शब्दत्वादेर्विशेषस्य तुल्यजातीयेषु रूपादिषु त्रयोविंशतौ गुणेषु, अर्थान्तरेषु द्रव्येषु कर्म्मसु च उभयथा

सू॰ एकद्रव्यत्वान्न द्रव्यम्॥ २३ ॥

---

उ॰ व्यवसायजनकत्वात् संशयजनकत्वं प्रतिषिद्धं शब्दत्वं श्रोत्रग्राह्यत्वञ्चासाधारण एव धर्म्मः कथं संशयं जनयिष्यतीति चेत्सत्यं व्यावृत्तिरस्य सजातीयासजातीयसाधारणीति व्यावृत्तेः साधारणस्यैव धर्म्मस्य संशयजनकत्वेनोक्तत्वात् शब्दत्वप्रतियोगिकी व्यावृत्तिः समानो धर्म्मः उभयगतव्यावृत्तिप्रतियोगित्वञ्च शब्दत्वमसाधारणो धर्म्मः तदुक्तं विशेषस्योभयथा दर्शनादिति अत्र हि विशेषस्य व्यावृत्तेरुभयत्र सजातीये विजातीये च दर्शनस्य संशयहेतुत्वेनोपादानात् स च समान एव धर्म्म इति ॥ २२ ॥

तदेवं संशयं दर्शयित्वा द्रव्यत्वकोटिव्युदासायाह ।

एकं द्रव्यं समवायि यस्य तदेकद्रव्यं द्रव्यञ्च किमप्येकद्रव्यसमवायिकारणकं न भवतीति द्रव्यवैधर्म्यान्नायं शब्दो द्रव्यमित्यर्थः ॥ २३ ॥

---

वि॰ उभयत्र द्रव्यत्वादिमत्तया निश्चितेषु तदभाववत्तया निश्चितेषु च अदृष्टत्वात् अदर्शनात् शब्दो द्रव्यं नवेति संशय इति पूरणीयं तथाच निश्चितोभयकोटिमद्व्यावृत्तत्वरूपासाधारणस्य शब्दत्वादौ सत्त्वात् तज्ज्ञानं तादृशसंशयं जनयतीति भावः ॥ २२ ॥

इदानीं शब्दस्य द्रव्यत्वं निरस्यति ।

शब्दो न द्रव्यम् एकद्रव्यत्वात् एकमात्राश्रितत्वात् नह्येकमात्राश्रितं किमपि द्रव्यं प्रसिद्धम् ॥ २३ ॥

सू० नापिकर्म्माऽचाक्षुषत्वात् ॥ २४ ॥
गुणस्य सतोऽपवर्गः कर्म्मभिः साधर्म्म्यम् ॥२५॥

---

उ० ननु कर्म्मैकद्रव्यमेव तथाच शब्दः कर्म्म स्यादित्यत आह। प्रत्ययस्य शब्दविषयकस्याचाक्षुषत्वात् चक्षुर्भिन्नबहिरिन्द्रियजन्यत्वादित्यर्थः तथाच शब्दत्वं न कर्म्मवृत्ति चाक्षुषप्रत्यक्षावृत्तिजातित्वात् रसत्वादिवदिति भावः ॥ २४ ॥

ननु शब्दः कर्म्म आशुतरविनाशित्वात् उत्क्षेपणादिवदिति चेदत आह।

अपवर्गः आशुनाशः स च गुणत्वेऽपि द्वित्वादिवदाशुभाविनाशकसन्निपाताधीन इति कर्म्मभिः साधर्म्म्यमात्रमस्य नतु कर्म्मत्वमेव त्वदुक्तहेतोराशुतरविनाशित्वस्य द्वित्वज्ञानसुखदुःखादिभिरनैकान्तिकत्वमितिभावः ॥ २५ ॥

---

वि० शब्दत्वरूपासाधारणधर्म्मज्ञानात् शब्दे सन्दिग्धं कर्म्मत्वमपि निराकरोति।

शब्दो न कर्म्म अचाक्षुषत्वात् चाक्षुषप्रत्यक्षावृत्तियोग्यजातिमत्त्वात् गन्धादिवदिति पूरणीयं मनःक्रियागतवैजात्यादिवारणाय योग्येति अपिना सत्त्वादिमत्त्वान्न सामान्यादिकमिति सूचितम् ॥ २४ ॥

ननु शब्दस्याशुविनाशित्वेन कर्म्मत्वं साधनीयमत आह।

सत उभयवाद्यङ्गीकृतस्य गुणस्य अपीतिशेषः अपवर्गः आशुविनाशः कर्म्मभिः साधर्म्म्यं नतु स कर्म्मत्वव्याप्यः द्वित्वादावुभयवादिसिद्धगुणे व्यभिचारादित्यर्थः ॥ २५ ॥

सू॰ सतो लिङ्गाभावात्॥ २६॥
नित्यवैधर्म्म्यात्॥ २७॥

---

उ॰ ननु सिध्यतु शब्दो गुणस्तथापि नाभावाकाशलिङ्गम् आकाशं हि तदाऽनुमापयेत् यदि तस्य कार्य्यः स्यात् किन्तु नित्य एवायं कदाचिदनुपलम्भस्तु व्यञ्जकाभावप्रयुक्त इत्याशङ्क्याह।

यदि हि उच्चारणात् प्रागूर्द्ध्वं शब्दः सन् स्यात् तदा सतोऽस्य लिङ्गं प्रमाणान्तरं स्यात् न चाश्रवणदशायां शब्द-सत्त्वे प्रमाणमस्ति तस्मात् कार्य्य एवायं न व्यङ्ग्य इति॥ २६॥

इतश्च न व्यङ्ग्योऽसावित्याह।

नित्येन सहास्य शब्दस्य वैधर्म्म्यमुपलभ्यते यतश्चैत्रो वक्तीत्यचाह्तोऽपि चैत्रमैत्रादिर्वचनेनानुमीयते न च व्य-ञ्जकःप्रदीपादिर्व्यङ्ग्येन घटादिना क्वचिदनुमीयते तस्मा-दन्य एवायं न व्यङ्ग्य इतिभावः॥ २७॥

---

वि॰ शब्दो न जन्यते किन्तु नित्य एव सः, कदाचिदप्रत्यक्षन्तु तस्य व्यञ्जकवैधुर्य्यादिति मीमांसकमतं निरस्यति।

सतो नित्यस्य शब्दस्य लिङ्गाभावात् शब्दनित्यतासाधक-प्रमाणाभावादिति फलितार्थः॥ २६॥

साधकाभावमुक्त्वा बाधकमप्याह।

नित्यवैधर्म्म्यात् विनाशित्वात् शब्दो न नित्यस्तन्नाशस्य प्रत्यक्ष-सिद्धत्वादितिभावः॥ २७॥

सू० अनित्यश्चायं कारणतः ॥ २८ ॥
नचासिद्धं विकारात् ॥ २९ ॥

---

उ० व्यञ्जकत्वे बाधकमुक्त्वा सम्प्रत्यनित्यत्वे हेतुमाह ।

कारणत उत्पत्तेर्दृष्टत्वादिति शेषः । उपलभ्यते हि भेरीदण्डसंयोगादिभ्यः प्रादुर्भवन् शब्दः, तथाचोत्पत्तिमत्त्वादनित्योऽयमिति यद्वा कारणत इति कारणवत्त्वहेतुमुपलक्षयति ॥ २८ ॥

ननु च कारणवत्त्वं शब्दस्य स्वरूपासिद्धमत आह ।

शब्दस्य कारणवत्त्वमसिद्धमिति न वाच्यं तीव्रमन्दादिभावेन विकारस्य दर्शनात् भेरीदण्डाभिघातस्य तीव्रतया तीव्रस्य मन्दतया मन्दस्य शब्दस्योपलम्भात् नह्यभिव्यञ्जकतीव्रत्वाद्यधीनोऽभिव्यङ्ग्यतीव्रत्वादिः तथाच कारणतो विकारादनुमीयते जन्योऽयं नत्वभिव्यङ्ग्य इति ॥ २९ ॥

---

वि० शब्दस्यानित्यत्वे हेत्वन्तरमाह ।

शब्दोऽनित्यः कारणतः कारणात् कारणवत्त्वादिति यावत् नहि नित्यानि कारणवन्ति भवन्ति इत्यर्थः ॥ २८ ॥

अत्र स्वरूपासिद्धिं निराकरोति ।

शब्दस्य कारणवत्त्वं नासिद्धं विकारात् तीव्रमन्दादिभावात् नहि भेरीदण्डाद्यभिघातस्य तीव्रमन्दादित्वाभावे शब्दस्य तीव्रमन्दादिभावः केनचिदुपलभ्यते नाप्यभिव्यञ्जकस्य तीव्रमन्दादिभावेन शब्दे तीव्रमन्दादिभावो भवितुमर्हति अतो भेरीदण्डाद्यभिघातादिरूपकारणजन्यत्वं शब्दस्याकामेनापि वाच्यमिति नासिद्धिरितिभावः ॥ २९ ॥

सू॰ अभिव्यक्तौ दोषात् ॥ ३० ॥

ननु व्यञ्जकस्यैवायं महिमा यत्तीव्रमन्दादिभावेनाभिव्यनक्ति भेरीदण्डाद्यभिहतो वायुरेव तीव्रो मन्दश्च तथा प्रत्ययमाधत्ते अत आह।

शब्दस्याभिव्यक्तौ समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दोषः स्यात् नच तादृशानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वचिद्दृष्टम् अत्र यदि तथा न स्वीक्रियेत तदा ककाराभिव्यक्तौ सर्व्ववर्णाभिव्यक्तिप्रसङ्गः। ननु समानदेशानामपि सत्त्वनरत्वब्राह्मणत्वानां स्वरूपभेदसंस्थान-योनिव्यङ्ग्यानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं दृष्टमेवेति चेन्न तेषां समानदेशत्वाभावात् नहि यावान् देशः सत्त्वस्य तावानेव नरत्वस्य ब्राह्मणत्वस्य वा ॥ ३० ॥

---

अभिव्यक्तिस्वीकारोऽपि न सम्भवतीत्याह।

वि॰ अभिव्यक्तिस्वीकारे दोषात् ककाराभिव्यक्तिदशायां यावद्वर्णाभिव्यक्तिरूपदोषप्रसङ्गात् न च वर्णानां नैकं व्यञ्जकं किन्तु प्रतिवर्णं भिन्नभिन्नमेव स्वीकार्य्यम्, समानेन्द्रियग्राह्याणां समनियतानामेकव्यञ्जकव्यङ्ग्यत्वनियमात् अन्यथा चालोकसंयोगदशायां घटादिगतसंख्यापरिमाणाद्यभिव्यक्तिर्न स्यात् तत्रापि व्यञ्जकभेदप्रसङ्गात् रूपरसगन्धस्पर्शानां समानेन्द्रियग्राह्यत्वाभावात् घटीयपटीयरूपादीनां सत्त्वमनुष्यत्वब्राह्मणत्वादीनाञ्च समनैयत्याभावादेव व्यञ्जकभेदस्वीकारादिति संक्षेपः ॥ ३० ॥

सू॰ संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः॥ ३१॥
लिङ्गाच्चानित्यः शब्दः॥ ३२॥

---

उ॰ इतश्च नाभिव्यज्यतेत्याह।

संयोगात् भेरीदण्डादिसंयोगात् विभागात् वंशे पाट्यमाने तत्र संयोगस्तावन्नाद्यस्य शब्दस्य कारणं तदभावात् तस्मात् वंशदलद्वयविभागो निमित्तकारणं दलाकाशविभागश्चासमवायिकारणम्। यत्र च दूरे वीणादावुत्पन्नः शब्दः तत्र सन्तानक्रमेण उत्पद्यमानः शब्दः कर्णशष्कुल्यवच्छिन्नमाकाशदेशमासादयन् गृह्यते तेन शब्दादपि शब्दनिष्पत्तिरिति॥ ३१॥

अनित्यत्वे हेत्वन्तरं समुच्चिनोति।

वर्णात्मकः शब्दोऽनित्यः जातिमत्त्वे सति श्रोत्रग्राह्यत्वात् वीणादिध्वनिवदित्यर्थः॥ ३२॥

---

वि॰ अभिघातस्य व्यञ्जकत्वं न सम्भवतीत्याह।

संयोगात् भेरीदण्डाद्यभिघातात् विभागात् पाट्यमानवंशदलद्वयविभागात् तदुभयजन्यशब्दसन्तानाच्च शब्दनिष्पत्तिः शब्दोत्पत्तिरित्यर्थः अभिघातमात्रस्य व्यञ्जकत्वस्वीकारे वंशदलद्वयविभागस्थले दूरदेशस्थितभेरीदण्डाद्यभिघातादिस्थले च शब्दस्योपलब्धिर्न स्यात् इतिभावः॥ ३१॥

वर्णानित्यतासाधकं हेत्वन्तरमाह।

शब्द इति वर्णात्मक इत्यादि तथाच वर्णात्मकः शब्दोऽनित्यः सत्त्वे सति अवबोन्द्रियग्राह्यत्वात् मृदङ्गादिध्वनिवदित्यर्थः॥ ३२॥

सू॰ द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥

---

उ॰ इदानीम् नित्यत्वे सिद्धान्तिनोक्ताम् हेतुम् दूषयितुमाह।

तुशब्दः पूर्व्वोक्तव्यवच्छेदकः पूर्व्वपक्षाभिव्यक्त्यर्थः। द्वयोराचार्य्यान्तेवासिनोरध्यापनेऽध्ययने च प्रवृत्ति दृश्यते तस्या अभावात् अभावप्रसङ्गात् अध्यापनं हि सम्प्रदानं सम्प्रदीयते गुरुणा शिष्याय वेदः स यदि स्थिरो भवति तदा तस्य सम्प्रदानं सम्भवति। ननु सम्प्रदीयमानं गवादि दातृप्रतिग्रहीत्रोरन्तराल उपलभ्यते न च वेदादि गुरुशिष्ययोरन्तराले उपलभ्यत इति नाध्यापनं सम्प्रदानमितिचेत् अन्तरालेऽपि तत्रस्थपुरुषश्रोत्रेण तदुपलम्भात् किञ्चाभ्यासादपि शब्दस्य नित्यता, यथा पञ्चकृत्वो रूपं पश्यतीति स्थिरस्य रूपस्याभ्यासो दृष्टः तथा दशकृत्वोऽधीतोऽनुवाकः विंशतिकृत्वोऽधीत इत्यभ्यासः स्थैर्य्ये शब्दस्य प्रमाणम्, सिद्धे च स्थैर्य्ये विनाशकानुपलब्धेः "तावत्कालं

---

मीमांसकः प्रत्यवतिष्ठते।

वि॰ द्वयोर्गुरुशिष्ययोः प्रवृत्त्योः गुरोरध्यापने प्रवृत्तिः शिष्यस्य तु अध्ययने तयोरभावात् अभावप्रसङ्गात् गुरुः शिष्यान् वेदमध्यापयति शिष्येभ्यो वेदं ददाति इत्यादिवाक्यानामेकार्थकत्वानुभवेन अध्यापनं दानमेव तथाच शब्दस्याशुविनाशित्वे तस्य दानप्रतिग्रहयोरसम्भवात् अध्यापने अध्ययने च प्रवृत्तिर्न स्यात् अतः शब्दस्यावश्यं स्थैर्य्यं स्वीकार्य्यं नाशकानुपलब्धेश्च तन्नाशे

सू० प्रथमाशब्दात् ॥ ३४ ॥

सम्प्रतिपत्तिभावाच्च ॥ ३५ ॥

---

स्थिरश्चैनं कः पश्चान्नाशयिष्यति" इति नित्यतैव पर्य्यवस्येति भावः ॥ ३३ ॥

हेत्वन्तरं शब्दस्य नित्यत्वे आह।

उ० "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति प्रथमोत्तमयोः सामिधेन्योस्त्रिरुच्चारणं स्थैर्य्यं विनाऽनुपपन्नमित्यर्थः ॥ ३४ ॥

शब्दनित्यत्वे हेत्वन्तरमाह।

उ० सम्प्रतिपत्तिः प्रत्यभिज्ञा तद्भावात् तत्सद्भावादित्यर्थः प्रतिपत्तिशब्दादेव तद्विशेषस्य प्रत्यभिज्ञाया लाभात् सम्पूर्व्वः सत्यत्वमाह तथाच यैव गाथा मैत्रेणोच्चा-

---

वि० प्रमाणाभावात् "तावत् कालं स्थिरश्चैनं कः पश्चान्नाशयिष्यति" इतिन्यायेन नित्यतैव फलितेति भावः॥ ३३॥

शब्दनित्यतायां हेत्वन्तरमुपन्यस्यति।

शब्दस्यावश्यं नित्यत्वमुपेयम् "त्रिःप्रथमामन्वाह त्रिरुत्तमामन्वाह" इतिश्रुतौ प्रथमोत्तमयोः सामिधेन्योः त्रिरुच्चारणस्य विहितत्वात् नहि स्थैर्य्यमन्तरेण त्रिरुच्चारणं सम्भवतीति पूर्व्वोक्तन्यायेन नित्यतायाः सिद्धेरित्यर्थः॥ ३४॥

इतश्च शब्दनित्यतेत्याह।

शब्दस्यावश्यं स्थैर्य्यं सम्प्रतिपत्तेः प्रत्यभिज्ञाया भावात् सत्त्वात् यः श्लोकश्चैत्रेण पठितस्तमेव मैत्रः पठति, स एवायं गकार-

सू० सन्दिग्धाः सति बहुत्वे ॥ ३६ ॥

---

उ० रिता तामेवायमुच्चरति तमेव श्लोकं पुनः पुनः पठति उक्तमेव वचनं पुनः पुनरभिधत्ते यदेव वाक्यं परारि परुत् त्वयोक्तं तदेवेदानीमपि ब्रूषे स एवायं गकार इत्यादि-प्रत्यभिज्ञाबलात् स्थैर्य्यं शब्दस्येति ॥ ३५ ॥

सर्व्वानिमान् हेतून् दूषयन्नाह।

सन्दिग्धा अनैकान्तिका इत्यर्थः तदुक्तं "विरुद्धासिद्ध-सन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इति तथाच बहुत्वे नानात्वेऽपि अध्ययनमभ्यसनं प्रत्यभिज्ञानञ्च दृष्टमित्य-नैकान्तिकत्वं हेतूनां तथाहि नृत्यमधीते नृत्यमभ्यस्यति द्विरनृत्यत् यदेव नृत्यं परुदकार्षीः चैत्रोऽपि तदेव करोषि यदेव नृत्यमेकेन चारणेन कृतं तदेवायमपि करोतीति नृत्ये दृष्टत्वात् तस्य च कर्म्मविशेषस्य त्वयाऽपि स्थैर्य्यानभ्युपगमात्॥ ३६ ॥

---

वि० इत्यादि प्रत्यभिज्ञा शब्दस्य स्थिरत्वमन्तरेणानुपपन्नेतिभावः ॥ ३५ ॥

मीमांसकमतं दूषयति।

नृत्यादीनामङ्गक्रियाविशेषाणां बहुत्वेऽपि नानात्वेऽपि अस्थै-र्य्येऽपीति यावत्, सति अध्यापनाभ्यासप्रत्यभिज्ञानां दर्शनात् अध्यापनादीनां स्थैर्य्ये साध्ये सन्दिग्धा अनैकान्तिकाः नृत्यमधीते निर्त्तयति यदेव नृत्तं चैत्रेण कृतं मैत्रस्तदेव करोतीत्यनुभवस्य सर्व्वसिद्धत्वादित्यर्थः ॥ ३६ ॥

सू॰ संख्याभावः सामान्यतः ॥ ३७ ॥

---

उ॰ ननु पञ्चाशद्वर्णा अष्टाक्षरो मन्त्रः त्र्यक्षरो मन्त्रः अष्टाक्षराऽनुष्टुबित्यादिसङ्ख्या कथं वर्णानामनित्यत्वे उच्चारणभेदेनानन्त्यसम्भवादित्यत आह।

सङ्ख्यायाः पञ्चाशदादिसङ्ख्याया भावः सद्भावः सामान्यतः कत्वगत्वादिजातित इत्यर्थः ककारादीनामानन्त्येऽपि कत्वगत्वाद्यवच्छिन्नानां पञ्चाशत्त्वं चित्वमष्टत्वं वा द्रव्यगुणादीनामान्तर्गणिकभेदेनानन्त्येपि नवत्वचतुर्विंशतित्वादिवदिति भावः। ननु स एवायं गकार इति प्रत्यभिज्ञैव स्थैर्य्यसाधिका नचैषा तीव्रो गकारो मन्दो गकार इति प्रतीत्या विरुद्धधर्म्मं गोचरयन्त्या बाध्यते तीव्रत्वादेस्त्वौपाधिकत्वात् नचोपाधिभेदादपि भेदो माभूत् तर्हि जवातापिञ्छादिसंयोगान्नीलपीतादिभावेन प्रथमानः स्फटिकमणिरपि नानारूपाणमणिदर्पणेषु दीर्घादिभावेन भासमानं मुखमपि वा नाना न भासेत। ननु कस्यायं तीव्रत्वादिधर्म्मो गकारोपाधिक इति चेन्न वायुधर्म्मो नादधर्म्मो-

---

वि॰ ननु वर्णानामनित्यतया नानात्वे पञ्चाशत्त्वसंख्या स्मृत्याद्युक्ता कथं सङ्गच्छते अत आह।

सामान्यतः सामान्येषु कत्वखत्वादिषु जातिषु संख्यायाः पञ्चाशत्त्वादिसंख्यायाः भावः सद्भावः तथाच पञ्चाशद्वर्णा इत्यादौ जातिगतैव संख्या विवक्षिता पञ्चमूर्त्ता इत्यादाविवेतिभावः पुनपुनर्जातकेशादौ तएवामी केशा इत्यादिवत् स एवायं गकार

उ० ध्वनिधर्मो वा भविष्यति किं तत्र विशेषचिन्तया त्वयापि तारत्वादेः कत्वगत्वादिना परापरभावानुपपत्त्या स्वाभाविकत्वाभ्युपगमादिति चेन्नैवं उत्पन्नो गकारः, नष्टो गकारः, श्रुतपूर्व्वोगकारोनास्ति, निवृत्तः कोलाहल इत्यादि विरोधिप्रतीतौ सत्यामपि चेत् इयं प्रत्यभिज्ञा न निवर्त्तते तदास्या जातिविषयताकल्पनात् अन्यथा व्यक्ति स्थैर्य्यमालम्बमानायाम् अस्यां सत्यां उक्तविरोधिप्रत्यया एव नोत्पद्येरन् नचायं वायुधर्म्म-स्तद्धर्म्माणां श्रोत्राविषयत्वात् नापि नादधर्म्मः, नादो यदि वायुरेव तदा दोषस्योक्तत्वात् अन्यस्य निर्व्वक्तुमशक्यत्वात् नापि ध्वनिधर्म्मः, शङ्खादिध्वनावनुपलभ्यमानेऽपि गकारे तारत्वादिप्रतीतेः । स्वाभाविकत्वे तु न जातिसाङ्कर्य्यं गत्वादिव्याप्यस्य तस्य नानात्वाभ्युपगमात् किञ्च शुकसारिकामनुष्यप्रभवेषु गकारादिषु स्फुटतरा रूपभेदप्रथाऽस्ति, एवं स्त्रीपुंसप्रभवेषु स्त्रीपुंसभेदप्रभवेषु च, यतः काण्डपटाद्यावृता अपि शुका-

---

वि० इत्यादि प्रत्यभिज्ञापि साजात्यविषयिण्येव न स्थैर्य्यसाधिकेति । अपिच शब्दोऽनित्यः कृतकत्वाद्घटादिवदित्याद्यनुमानतः शब्दस्यानित्यत्वं सिद्ध्यतीति । तत्र शब्दोत्पत्ति र्वीचीतरङ्गन्यायेनेति केचित् तेषां मते भेरीदण्डाद्यभिघातात् तद्देशावच्छेदेन आद्यशब्दस्योत्पत्तिः अनन्तरं तदहि र्दशदिगवच्छेदेन प्रथमशब्दात्तद्व्यापको द्वितीयः शब्दः, ततस्तदहिर्दशदिगवच्छिन्नस्तृतीयः शब्दो द्वितीयशब्दाद्भवतीत्येवंक्रमेण चतुर्थादिशब्दानामप्युत्पत्तिर्व्वोध्या

उ० दयोरनुमीयन्ते औपाधिकत्वन्तस्य नानुभूयमानोपाधिनि-बन्धनं कुङ्कुमारुणा तरुणीतिवत् नाप्यौपपत्तिकमौपाधिकत्वम् उपपत्तेस्तादृश प्रमाणस्याभावादिति संक्षेपः ॥ ३७ ॥

इति वैशेषिकसूत्रोपस्कारे शाङ्करे द्वितीयाऽध्यायस्य द्वितीयमाह्निकम् ॥ * ॥

॥०॥ समाप्तश्चायं द्वितीयाध्यायः ॥०॥

---

वि० केचित्तु कदम्बगोलकन्यायात् शब्दस्योत्पत्तिरित्याहुः एतन्मते द्वितीयादिशब्दोनैको नवा दशदिगवच्छिन्नः किन्तु दशसु दिक्षु द्वितीयाद्याः शब्दा दश उत्पद्यन्ते इति विशेषः । ३७ ।

इति श्रीजयनारायण-तर्कपञ्चानन-कृतायां कणादसूत्रविवृतौ द्वितीयाध्यायस्य द्वितीयमाह्निकम् । * ।

॥०॥ समाप्तश्चायं द्वितीयाध्यायः ॥०॥



सू॰ प्रसिद्धा इन्द्रियार्थाः॥ १ ॥

---

उ॰ तदेवं द्वितीयाध्याये वहिर्द्रव्यपरीक्षामुपपाद्य उद्दे-शक्रमादिदानीमात्मपरीक्षायै पीठमारचयितुमाह।

इन्द्रियाणामर्था गन्धरसरूपस्पर्शशब्दा वाह्यैकैकेन्द्रिय-ग्राह्याः तत्र श्रोत्रग्रहणो योऽर्थः स शब्द इति शब्द-प्रसिद्धौ दर्शितायामर्थाद्गन्धादौ स्पर्शपर्य्यन्ते प्रसिद्धि-र्दर्शितेत्यर्थः तथाहि घ्राणग्रहणो योऽर्थः स गन्धः, रसन-ग्रहणो योऽर्थः स रसः, चक्षुर्मात्रग्रहणो योऽर्थः तद्रूपम्, त्वगिन्द्रियमात्रग्रहणो योऽर्थः स स्पर्शः, सर्व्वत्र चाऽर्थ-शब्देन धर्म्मी भावभूत उच्यते तेन गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः तदेवं घ्राणग्रहणवृत्तिगुणत्वावान्तरजा-तिमत्त्वं गन्धत्वम् एवं रसादावपि वाच्यं तेन नातीन्द्रि-यगन्धाद्यनुपपत्तिः॥ १ ॥

---

वि॰ यदीयकरुणां विना वहति जाड्यजालं जन-
स्तथान्तरतमोऽर्णवं तरति यत्कृपालेशतः।
कणादनयनीरधौ मम निमज्जतः साऽधुना
निहन्तु विपदान्ततिं विबुधवासि वाग्देवता॥ १॥

उद्देशक्रमप्राप्तामात्मपरीक्षामिदानीमारभते।

इन्द्रियार्थाः रूपरसगन्धस्पर्शशब्दाः, प्रसिद्धाः प्रत्यक्षनिश्चय-विषया इत्यर्थः तथाच रूपादिविषयकः साक्षात्कारः सर्व्व-सिद्ध इतिभावः॥ १॥

सू० इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्यो ऽर्थान्तरस्य हेतुः ॥ २ ॥

---

उ० इन्द्रियार्थप्रसिद्धेरात्मपरीक्षायामुपयोगमाह।

हेतुर्लिङ्गमर्थान्तरस्य आत्मनः इन्द्रियार्थेभ्य इति इन्द्रियेभ्योऽर्थेभ्यश्च रूपादिभ्यस्तद्वद्भ्यश्च यदर्थान्तरं आत्मा तस्य लिङ्गमित्यर्थः। यद्यपि ज्ञानमेव लिङ्गमिह विवक्षितं तथापीन्द्रियार्थप्रसिद्धे रूपादिसाक्षात्कारस्य प्रसिद्धतरतया ताद्रूप्येणैव लिङ्गत्वमुक्तं तथाहि प्रसिद्धिः क्वचिदाश्रिता कार्य्यत्वात् घटवत् गुणत्वाद्वा क्रियात्वाद्वा साच प्रसिद्धिः करणजन्या क्रियात्वात् छिदिक्रियावत् यच्च प्रसिद्धेः करणं तदिन्द्रियं तच्च कर्तृप्रयोज्यं करणत्वात् वास्यादिवत् तथा यत्रेयं प्रसिद्धिराश्रिता, यः घ्राणादीनां करणानां प्रयोक्ता स आत्मा ॥ २ ॥

---

वि० एतावतात्मनः किमायातमित्यत आह।

इन्द्रियार्थप्रसिद्धिः रूपादिसाक्षात्कारः इन्द्रियार्थेभ्यः इन्द्रियेभ्यः अर्थेभ्यश्च अर्थान्तरस्य भिन्नस्यात्मनामकद्रव्यस्य हेतुः साधिकेत्यर्थः तथाच रूपादिसाक्षात्कारो द्रव्याश्रितो गुणत्वाद्रूपवदित्यनुमानेन इतरबाधसहकृतेन आत्मनः सिद्धिरिति भावः। यद्यपि प्रसिद्धेः पक्षतया हेतुत्वकथनमसङ्गतं तथापि हेतुपदमत्रानुमितिजनकपरामर्शविशेष्यपरमिति न किञ्चिदनुपपन्नम्। ॥ २ ॥

सू॰ सोऽनपदेशः॥ ३॥

कारणाज्ञानात्॥ ४॥

---

उ॰ ननु शरीरमिन्द्रियाणि वा प्रसिद्धेराश्रयोऽस्तु प्रसिद्धिं प्रति तदुभयान्वयव्यतिरेकयोः स्फुटतरत्वात् किं तदन्याश्रयकल्पनया तथाहि चैतन्यं शरीरगुणः तत्कार्य्यत्वात् तद्रूपादिवत् एवमिन्द्रियगुणत्वेऽपि वाच्यमित्याशङ्क्याह।

अपदेशो हेतुः तदाभासोऽनपदेशः तथाच तत्कार्य्यत्वं प्रदीपजन्यज्ञानादावनैकान्तिकत्वादनपदेश, इत्यर्थः॥ ३॥

ननु तत्कार्य्यत्वं चैतन्यत्वावच्छिन्नस्यैव कार्य्यत्वं विवक्षितं प्रदीपादीनाञ्च समस्तमेव चैतन्यं न कार्य्यमिति न व्यभिचार इत्याशङ्क्याह।

शरीरकारणानां करचरणादीनां तदवयवानां वा अज्ञानात् ज्ञानशून्यत्वादित्यर्थः पृथिव्यादिविशेषगुणानां

---

वि॰ ननु रूपादिप्रसिद्धि र्देहाश्रिता तत्कार्य्यत्वात् तदीयरूपादिवदित्यनुमानेन देहवृत्तित्वे सिद्धे नाऽतिरिक्तात्मसिद्धिरित्यत आह।

सः देहवृत्तित्वसाधको हेतुः, अनपदेशः हेत्वाभासः, देहकार्य्यत्वस्य घटपटादौ सत्त्वेन तत्र देहाश्रितत्वाभावात् उक्तहेतोर्व्यभिचारित्वान्न प्रसिद्धे र्देहवृत्तित्वसिद्धिरित्यर्थः॥ ३॥

ननु ज्ञाननिष्ठं यद्देहकार्य्यत्वं तदेव हेतुर्भविष्यति व्यतिरेकेण घटादेर्दृष्टान्तत्वसम्भवादित्यत आह।

कारणेषु देहकारणेषु अवयवेषु अज्ञानात् ज्ञानाभावात्

सू० कार्य्येषु ज्ञानात्॥ ५ ॥

---

उ० हि कारणगुणपूर्व्वकता दृष्टा तथाच शरीरकारणेषु यदि ज्ञानं स्यात्तदा शरीरेऽपि सम्भाव्येत नचैवम्, नन्वस्तु शरीरकारणेष्वपि चैतन्यमिति चेन्न एकमत्याभावप्रसङ्गात् नहि बहूनाञ्चेतनानामैकमत्यं दृष्टम्, करावच्छेदेनानुभूतस्य करच्छेदेऽस्मरणप्रसङ्गात् यतो "नान्यदृष्टं स्मरत्यन्य" इति किञ्च शरीरनाशे तत्कृतहिंसादिफलानुपभोगप्रसङ्गात् नहि चैत्रेण कृतस्य पापस्य फलं मैत्रो भुङ्क्ते ततश्च कृतहानिरकृताभ्यागमश्च स्यात्॥ ४ ॥

ननु शरीरकारणेषु सूक्ष्ममात्रया ज्ञानमस्ति शरीरे तु स्फुटमतो नाऽकारणगुणपूर्व्वकता नचैकमत्यानुपपत्तिरित्याशङ्क्याह।

यदि हि शरीरमूलकारणेषु परमाणुषु चैतन्यं स्यात् तदा तदारब्धेषु कार्य्येषु घटादिष्वपि स्यात् किञ्च पार्थिव-

---

वि० तथाच ज्ञानं न शरीरविशेषगुणः अपाकजत्वे सति अकारणगुणपूर्व्वकत्वात् शब्दवदित्यनुमानेन ज्ञानसामान्यस्य देहवृत्तित्वाभावसिद्धिः प्रागुक्तशरीरकार्य्यत्वहेतोरप्रयोजकत्वमेवेति भावः ॥ ४ ॥

ननु शरीरावयवेषु सूक्ष्मज्ञानक्रमेण शरीरे स्फुटतरं ज्ञानं कारणगुणपूर्व्वकमेव स्वीकार्य्यमतः प्रागुक्तहेतोः स्वरूपासिद्धत्वान्न देहावृत्तित्वसाधकत्वमत आह।

यदि शरीरे चैतन्यं कारणगुणपूर्व्वकं स्वीक्रियते तदा तत्प-

सू० अज्ञानाच्च ॥ ६ ॥

---

उ० विशेषगुणानां सर्व्वपार्थिववृत्तितायाव्याप्तेः कार्य्येष्वपि घटादिषु चैतन्यं स्यान्न च तत्र चैतन्यमुपलभ्यते इत्यर्थः ॥ ५ ॥

ननु घटादावपि सूक्ष्ममात्रया चैतन्यमस्त्येवेत्याशङ्क्याह ।

सर्व्वैः प्रमाणैरज्ञानात् कुम्भादौ न चैतन्यमित्यर्थः सर्व्वप्रमाणागोचरस्याप्यभ्युपगमे शशविषाणादेरप्यभ्युपगम-

---

वि० रनायुश्चाप्यवश्यं ज्ञानं स्वीकार्य्यं तथाच शरीरमात्रे तत्परमाण्वारब्धेषु कार्य्यान्तरेष्वपि ज्ञानात् ज्ञानप्रसङ्गात् गन्धादिवदित्यर्थः ॥ ५ ॥

ननु तत्तत्कार्य्येषु सूक्ष्ममेव ज्ञानं स्वीकार्य्यमतोनोपलब्धिरित्यत आह ।

अज्ञानात् केनापि प्रमाणेन तत्तत्कार्य्यगतज्ञानस्य ज्ञानाजननात् तथाच निष्प्रमाणकत्वान्न तत्तत्कार्य्येषु ज्ञानमित्यर्थः चकारो गौरवं समुच्चिनोति तथाच नानावयवेषु नानाचैतन्यकल्पनापेक्षया चैतन्याधारतया एकं द्रव्यान्तरमेव कल्पयितुमुचितमितिभावः । इदमुपलक्षणं देहे चैतन्यस्वीकारे बाल्येऽनुभूतस्य यौवनादौ स्मरणानुपपत्तिस्तदानीमनुभवितुरभावात् परिमाणनाशेन बाल्यशरीरनाशाभ्युपगमस्यावश्यकत्वात् एवं अद्यजातबालकस्य स्तनपाने प्रवृत्तिर्न स्यात् प्रवृत्तिजनकस्य इष्टसाधनत्वानुभवस्य तदानीमसम्भवात् एवं गर्भनिःसरणदशायां वानरशिशूनां शाखावलम्बने प्रवृत्तिरपि नोपपद्यते तदानीमिष्टसाधनत्वानुभवकाभावात् अतिरिक्तचेतनवादिमते च जन्मा-

सू० अन्यदेव हेतुरित्यनपदेशः ॥ ७ ॥

---

उ० प्रसङ्गः नहि घटादौ चैतन्यं केनापि प्रमाणेन ज्ञायत इति ॥ ६ ॥

ननु श्रोत्रादिभिः करणैरधिष्ठाताऽनुमीयते इत्युक्तं तदयुक्तं नहि श्रोत्रादिभिरात्मनस्तादात्म्यं तदुत्पत्तिर्वा नच ताभ्यामन्तरेणाऽविनाभावसिद्धिः नचाविनाभावमन्तरेणाऽनुमितिरित्यत आह ।

हेतुः साध्यादन्य एव भवति नतु साध्यात्मा साध्याविशेषप्रसङ्गात् तस्मात्तादात्म्यघटितो हेतुरहेतुरनपदेश इत्यर्थः ॥ ७ ॥

---

वि० शरीरेष्टसाधनत्वानुभवजनितसंस्कारवशात् स्मरणसम्भवेन स्तनपाने शाखावलम्बने च पूर्व्वोक्तप्रवृत्ति र्नाऽनुपपन्ना नच जन्मान्तरानुभूतानामन्येषामपि स्मरणं कथं न भवतीति वाच्यं उद्बोधकाभावात् अत्र त्वनायत्त्या जीवनादृष्टमेवोद्बोधकं कल्प्यते अन्यथा शुष्ककण्ठतया उच्चपतनेन च बालस्य मरणप्रसङ्गादित्यादिकं द्रष्टव्यमिति संक्षेपः ॥ ६ ॥

ज्ञानस्य गुणत्वहेतुना द्रव्याश्रितत्वं कथं सिध्यति अतदात्मनस्तदनुत्पन्नस्य वा तदसाधकत्वादिति सांख्यैकदेशिनामाशङ्कां निरस्यति ।

अन्यदेव साध्यादन्यदेव वस्तु हेतु र्भवति इति हेतौ यतः साध्याभिन्नोऽनपदेशः हेत्वाभासः, साध्यस्यासिद्धत्वेन तदभिन्नस्याप्यसिद्धत्वादितिभावः ॥ ७ ॥

सू॰ अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः ॥ ८ ॥

---

उ॰ ननु श्रोत्रादिभिरिन्द्रियैरात्मनो यथा न तादात्म्यं तथा तदुत्पत्तिरपि नास्ति नहि वह्नेर्धूम इव आत्मनः श्रोत्रादिकरणमुत्पद्यते इत्यत आह।

हि यतः कार्य्यं धूमादि यथा रासभादेरर्थान्तरं तथा कारणादग्न्यादेरप्यर्थान्तरमेव तथा चार्थान्तरत्वाविशेषात् धूमो रासभं न गमयति किन्तु वह्निमेव गमयतीत्यत्र स्वभावविशेष एव नियामकः, स च स्वभावो यदि कार्य्यादन्यस्यापि भवति तदा सोऽप्यपदेशो भवत्येव तथाच कार्य्यमविवक्षितस्वभावभेदम् अनपदेशः, तथाच तादात्म्यतदुत्पत्ती एवाऽविनाभावः तयोरेवाऽविनाभावपर्य्यवसानं ताभ्यां समानोपायो वा तदुभयमात्रग्रहाधीनग्रहो वेति स्वशिष्यव्यामोहनाय परिभाषामात्रमितिभावः ॥ ८ ॥

सम्प्रत्यऽविनाभावस्य तदुभयव्यभिचारमेव स्फुटयितुमाह।

---

वि॰ ननु साध्यादनुत्पन्नस्य गुणत्वस्य कथमनुमापकत्वम्, तथा सति धूमादिना वह्न्यादेरिव रासभादेरप्यनुमानापत्तेरित्यत आह।

हि हेतौ यतोऽर्थान्तरं वस्त्वन्तरम् अर्थान्तरस्य वस्त्वन्तरस्य अनपदेशः अहेतुः रासभादेर्व्याप्तिशून्यो हि धूमादिः रासभादौ साध्ये हेत्वाभासः नतु वह्न्यादौ, तद्व्याप्यत्वस्य तत्र सत्त्वात् प्रकृतेतु व्याप्तिसत्त्वान्नागमकत्वमितिभावः॥ ८ ॥

ननु गुणत्वहेतौ व्याप्यत्वमपि दुर्घटं व्याप्यत्वस्य तादात्म्यतदुत्पत्तिनियतत्वादित्यत आह।

सू० संयोगिसमवाय्येकार्थसमवायिविरोधि च॥९॥

---

उ० शरीरं त्वग्वत् शरीरत्वादित्ययं हेतुः संयोगी, वृद्धिचयवद्द्रव्यसहजावरणं हि त्वगित्युच्यते तच्च न शरीरस्य कार्य्यं कारणं वा किन्तु सहोत्पत्तिकमात्रं नियतसंयोगवत्। एवं समवायि यथाकाशं परिमाणवद् द्रव्यत्वात् घटादिवदिति अत्र परिमाणं साध्यं द्रव्यत्वेनाकाशसमवायिना धर्म्मेण साध्यते यदा परिमाणतारतम्यं क्वचिद्विश्रान्तमित्यनेनाऽणुत्वं परिमाणविशेषः सिद्धः तेन तदाश्रयः परमाणुरनुमीयते, शब्दादिना त्वाकाशस्य, ज्ञानादिना त्वात्मनोऽनुमानं कार्य्येणैव कारणानुमानमिति नोदाहृतम्॥ ९॥

एकार्थसमवायिनं सूत्रकृदुदाहरति।

---

वि० संयोगि संयोगानुयोगि लिङ्गमिति सर्व्वशेषः। तथाच संयोगानुयोगि संयोगप्रतियोगिनो लिङ्गं व्याप्यं कथमन्यथा अयं देशः सारथिमान् विलक्षणगतिमद्रथादित्यादावनुमितिः साध्यतावच्छेदकसम्बन्धश्चात्र स्वसंयुक्तसंयोगः एवं समवाय्यपि समवेतस्य लिङ्गं कथमन्यथा पश्चाद्यवयवमात्रदर्शनदशायां विशिष्टावयवेनाऽवयविनः पश्वादेरनुमितिः नचावयवचक्षुःसंयोगदशायामवयविन्यपि संयोगसत्त्वात् तस्यापि प्रत्यक्षं दुर्व्वारमितिवाच्यं तथापि सिषाधयिषया तादृशानुमानसम्भवात् तथाच सारथ्यादिभिन्नस्य सारथ्याद्यकार्य्यस्य च रथादेः सारथ्यादेर्व्याप्यत्वात् व्याप्यत्वं न तादात्म्यतदुत्पत्तिनियतमिति भावः॥ ९॥

एकार्थसमवायिनोलिङ्गस्योदाहरणं स्वयमेव दर्शयति।

सू० कार्य्यं कार्य्यान्तरस्य॥ १०॥
विरोध्यभूतं भूतस्य॥ ११॥

उ० कार्य्यं रूपं कार्य्यान्तरस्य स्पर्शस्य लिङ्गम्। उपलक्षणञ्चैतत् अकार्य्यमप्याकाशैकत्वम् आकाशैकपृथक्त्वे लिङ्गम् एवं परममहत्त्वे॥ १०॥

विरोधिलिङ्गमुदाहरति।

अभूतं वर्षं, भूतस्य वाय्वभ्रसंयोगस्य लिङ्गम् एवं स्फोटादेर्विरोधी मन्त्रपाठः तथाचाऽभूतमनुत्पन्नं स्फोटादि भूतस्य मन्त्रपाठस्य लिङ्गम्॥ ११॥

विरोधिलिङ्गस्योदाहरणान्तरमाह।

वि० कार्य्यं पृथिव्याः कार्य्यं गन्धादिकं कार्य्यान्तरस्य रसादेर्लिङ्गमितिशेषः एकार्थसमवायः समवायघटितसामानाधिकरण्यम् एवं नित्यरसादिकमपि नित्यरूपादेर्लिङ्गं द्रष्टव्यम्, तथाच गन्धादेः रसाद्यभेदस्य रसादिजन्यत्वस्य चाऽभावात् व्याप्तेस्तदुभयनैयत्यं बाधितमेवेति भावः॥ १०॥

विरोधिनो व्याप्यत्वमुदाहरति।

अभूतम् असन्निहितं विरोधि विरोध्यसन्निधानमिति यावत् भूतस्य जातस्य स्थितस्य वा विरोधिनोलिङ्गमितिशेषः अयमनुमानप्रकारः अयं काष्ठो दाहवान् वह्निसंयुक्तत्वे सति मण्याद्यसन्निधानात् भस्मीभूतवस्त्वन्तरवत् अयं देशो निर्भयाहिमान् अहिमत्त्वे सति नकुलशून्यत्वात् तादृशनिश्चितदेशान्तरवदित्यादिः॥ ११॥

विरोध्यन्तरमुदाहरति।

सू० भूतमभूतस्य ॥ १२ ॥
भूतोभूतस्य ॥ १३ ॥

---

उ० भूतं स्फोटादिकम् अभूतस्य मन्त्रपाठस्य लिङ्गम् एवं भूतो वाय्वभ्रसंयोगो ऽभूतस्य वर्षस्य लिङ्गम् एवं भूतोदाहोऽभूतस्य भण्यादिसमवधानस्य लिङ्गमेवमन्यदप्यूह्यम् ॥ ॥ १२ ॥

लिङ्गान्तरमुदाहरति ।

विद्यमानेनैव विरोधिना विद्यमानस्यैव विरोधिनः क्वचिदनुमानं यथा विस्फूर्ज्जन्तमहिं दृष्ट्वा झाटाऽन्तरितस्य नकुलस्य अत्र हि विस्फूर्ज्जन्नहिर्भूतो विद्यमानो झाटान्तरितो नकुलोऽपि विद्यमान एवेति भवति भूतो भूतस्य लिङ्गमित्यर्थः वर्षवाय्वभ्रसंयोगयोस्तु नैकस्मिन् काले विद्यमानता न वा स्फोटमन्त्रपाठयोरिति ॥ १३ ॥

इदानीं परिगणनस्य प्रयोजनमाह ।

---

वि० भूतमुत्पन्नं स्थितं वा अभूतस्य विरोधिनो विरोध्यसन्निधानस्य लिङ्गमित्यर्थः यथायं काष्ठो मण्याद्यसन्निहितो दाहवत्त्वात् अयं देशो नकुलशून्यः भीतिरहिताहिमत्त्वादित्यादि ॥ १२ ॥

सद्विरोधिनः सद्विरोधिलिङ्गत्वमुदाहरति ।

भूतो वर्त्तमानो विरोधी भूतस्य वर्त्तमानस्य विरोधिनो लिङ्गमित्यर्थः यथा विस्फूर्ज्जनवदहिदर्शनेन गुल्माद्यन्तरितस्य विद्यमानस्य नकुलस्यानुमानम् ॥ १३ ॥

ननूक्तस्थलेषु अनुमिति र्न भवत्येव व्याप्तिविरहादित्यत आह ।

सू० प्रसिद्धिपूर्व्वकत्वादपदेशस्य ॥ १४ ॥

---

उ० प्रसिद्धिः स्मर्य्यमाणा व्याप्तिः, अपदेशो हेतुवचनं, तेन स्मर्य्यमाणव्याप्तिविशिष्टो हेतुर्हेत्ववयवेनोपनयावयवेन वोच्यते इति भवति प्रसिद्धिपूर्व्वकोऽपदेश इति तथाच श्रोत्रादिना करणेनाऽधिष्ठातुः, ज्ञानादिना च गुणेन तदाश्रयस्यात्मनो यदनुमानमुक्तं तत्र सर्व्वत्र व्याप्तिरस्ति, त्वयातु शरीरकार्य्यत्वेन हेतुना ज्ञानस्य यच्छरीरगुणत्वं साधितं तत्र न व्याप्तिरितिभावः। ननु केयं व्याप्तिर्न तावदव्यभिचरितसम्बन्धः अव्यभिचारस्य साध्यात्यन्ताभावसामानाधिकरण्यानधिकरणत्वस्य केवलान्वयिन्यप्रसिद्धेः साध्यानधिकरणानधिकरणत्वस्यापि केवलान्वयिन्यसम्भवात् धूमादेरपि यत्किञ्चित्साध्यानधिकरणाधिकरणत्वात्। नाप्यऽविनाभावः। स हि साध्यं विनाऽभावो वा हेतोः, अविना, साध्याश्रये सति भावो वा, धूमस्यापि क्वचिद्रासभाभावेऽभावात् रासभसत्त्वे सत्त्वाच्च नियतव्यतिरेको नियतस्याऽन्वयोविवक्षित इतिचेत् न नियमस्यैव निरूप्यमाणत्वात् नापि कार्त्स्न्येन सम्बन्धः, स यदि कृत्स्नस्य

---

वि० प्रसिद्धिर्व्याप्तिप्रमा तत्पूर्व्वकत्वात् तदधीनत्वात् अपदेशस्य सद्धेतूद्भावनस्य तथा चोक्तस्थलेषु सन्न्यायप्रयोगस्य कथकसम्प्रदायसिद्धत्वात् तद्धेर्व्वाक्यकव्याप्तिप्रमोपपादकव्याप्तिस्वीकार आवश्यक इतिभावः। व्याप्तिश्च साध्यतावच्छेदकसम्बन्धावच्छिन्न

उ॰ साध्यस्य साधनसम्बन्धः, स विषमव्याप्ते धूमादावपि नास्ति अथ कृत्स्नस्य साधनस्य साध्यसम्बन्धः, सोऽप्येकस्य साध्यस्य कृत्स्नसाधने सम्बन्धाभावादनुपपन्नः अथ कृत्स्नस्य साध्यस्य कृत्स्नेन साधनेन सम्बन्धः, एतदप्ययुक्तं नहि कृत्स्नेन साधनेन कृत्स्नस्य साध्यस्य क्वचिदपि सम्बन्धः सम्भवति, प्रत्येकमेव साध्यसाधनयोः सम्बन्धात् विषमव्याप्ते चाऽव्याप्तेः नापि स्वाभाविकः सम्बन्धः, स्वभावो हि स्वस्यभावो वा स्वमेव भावो वा, तत्र तज्जन्यलक्षेत्तद्धितार्थः, तदा समवायलक्षणायां व्याप्तावव्याप्तेः, तदाश्रितलक्षेत्तद्धितार्थः, तदापि समवायेऽव्याप्तिः नहि समवायः क्वचिदाश्रितः संयोगस्याऽपि हेतुधर्म्मधूमत्वाद्यनाश्रितत्वात् हेतुधर्म्मधूमत्वाद्यजन्यत्वाच्च नाप्यऽस्यौपाधिकः सम्बन्धः उपाधेरेव दुर्व्वचत्वात्, सुवचत्वेऽपि दुर्ग्रहत्वात्, सुग्रहत्वे ऽप्यऽन्योन्याश्रयात् साध्यव्यापकत्वे सति साधनाव्यापकत्वादेर्व्याप्तिग्रहाधीनग्रहत्वात् नापि सम्बन्धमात्रं व्याप्तिः, व्यभिचारिसम्बन्धस्यापि देशविशेषकालविशेषगर्भतया व्याप्तिरूपत्वेऽपि तज्ज्ञानस्यानुमितावतन्त्रत्वात् अनुमितिकारणीभूतज्ञानविषयव्याप्तेरेव निरूपयितुमुचितत्वात् नापि

---

वि॰ यत् साध्यवत्त्वं तदवच्छिन्नप्रतियोगिताकस्याऽन्योन्याभावस्य स्वप्रतियोगितावच्छेदकवत्त्वबुद्धिविरोधिताघटकसम्बन्धेन यदधिकरणं तन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानवच्छेदकहेतुतावच्छेदकधर्म्मवत्त्वं, केवलान्वयिस्थले सत्तावान् जातेरित्यादि-

उ॰ साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः वह्नेरपि धूमवन्निष्ठात्यन्ताभावप्रतियोगित्वात् नहि धूमवति महानसे पर्व्वतीयवह्नेर्नाऽत्यन्ताभावः इदं संयोगि द्रव्यत्वादित्यादौ संयोगात्यन्ताभावस्य साधनसमानाधिकरणत्वादव्यापकताप्रसङ्गात् प्रतियोगिविरुद्धस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः संयोगात्यन्ताभावस्य प्रतियोगिविरुद्धत्वाभावादिति चेन्न संयोगात्यन्ताभावस्यापि प्रतियोगिविरुद्धत्वात् अन्यथाऽवच्छेदभेदकल्पनावैयर्थ्यात् नहि कृतकत्वानित्यत्वयोर्वृत्त्यर्थमवच्छेदभेदः कल्प्यते नापि साध्यवैयधिकरण्यानधिकरणत्वं केवलान्वयिनि साध्यवैयधिकरण्याप्रसिद्धेः साध्यानधिकरणाधिकरणत्वं हि तत्, नापि यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः वह्नित्वस्यापि धूमसम्बन्धितावच्छेदकत्वात्, अधिकदेशवृत्तितया तन्न तथेति चेत् व्यापकतावच्छेदकस्याऽधिकदेशवृत्तेरप्यभ्युपगमात् धूमत्वस्याऽपि गगनतत्त्वावत्सम्बन्धिधूमवृत्तितयाऽधिकदेशवृत्तित्वात्, अतएव तद्वारणार्थं विशेषणमिति चेत् तर्हि यद्, व्याप्यतावच्छेदकं तदेव सम्बन्धितावच्छेदकत्वेनाभिमतमित्यभिमतं तथाचात्माश्रयः। एवञ्च यत्

---

वि॰ स्थले च व्याप्तिभ्रमादेवाऽनुमितिः आकाशादिहेतौ व्याप्तिरस्त्येव परन्तु पक्षधर्म्मत्वविरहादसद्धेतुत्वव्यवहारः अथवा यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्ननिरूपक-

उ० सामानाधिकरण्यावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिरित्यप्युक्तदोषाक्रान्तमिति चेत् अचोच्यते अनौपाधिकः सम्बन्धो व्याप्तिः अनौपाधिकत्वन्तु यावत् स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यं यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं वा, यावत् साधनाव्यापकाव्याप्यसाध्यसामानाधिकरण्यमितिनिरुक्तिद्वयार्थः, यावत्साध्यव्यापकव्यापकत्वं वा, बहुव्रीहिणा दुर्ग्रहमिदमितिचेत् अतएव तत्र भूयोदर्शनापेक्षा तर्कापेक्षाच। यद्वा साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः अत्यन्ताभावश्च वह्नित्वादिसामान्यावच्छिन्नप्रतियोगिताको विवक्षितः तेन महानसीयधूमे पर्व्वतीयवह्न्यत्यन्ताभावसामानाधिकरण्येऽपि न दोषः धूमवति वह्निर्नास्तीति प्रतीतेरनुदयात्, द्रव्यत्वन्तु संयोगित्वात्यन्ताभावासमानाधिकरणमेव नहि भवति द्रव्यं न संयोगीतिप्रतीतिः, संयोगानां प्रत्येकमव्याप्यवृत्तित्वेऽपि संयोगित्वसामान्यस्य व्याप्यवृत्तित्वात् तस्यैव च व्यापकत्वात्। नन्वनौपाधिकत्वमुपाधिविरहः उपाधिरेव दुष्परिकलनीय इति चेन्न साध्यव्यापकत्वे सति

---

वि० ताकाधिकरणतावदन्यत्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावत वृत्तिनिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताशून्यं यत् साध्यताव-

उ॰ साधनाव्यापकस्योपाधित्वात् तदुक्तं "साधने सोपाधिः साध्ये निरुपाधिरुपाधिः"। ननु केवलसाध्याव्यापकोपाध्यव्यापकमेतत् यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वम्, स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वम्, न ह्युद्भूतरूपवत्त्वं प्रत्यक्षत्वव्यापकम् आत्मनि गुणकर्म्मादौ च प्रत्यक्षे तदभावात् नापि शाकपाकजत्वं श्यामत्वव्यापकं काककोकिलजलदजम्बूफलादौ श्यामे तदभावादिति चेन्न पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वस्य तथा विवक्षितत्वात्, पर्य्यवसितञ्च साध्यं यद्धर्म्मावच्छेदेनोपाधेर्व्यापकत्वमभग्नं तद्धर्म्मावच्छिन्नम्, प्रकृते वहिर्द्रव्यत्वावच्छेदेन प्रत्यक्षत्वस्योद्भूतरूपवत्त्वं व्यापकम्, अन्वयव्यतिरेकाभ्यां गृहीतम्, औत्पत्तिकनरश्यामत्वावच्छिन्नं साध्यं प्रति चरकसुश्रुतादौ शाकपाकजत्वस्य व्यापकत्वावधारणादेवमन्यत्राप्यूह्यम्। ननु नायमुपाधिपदवाच्यः, यद्धर्म्मोऽन्यत्र भासते स उपाधिः यथा स्फटिकादौ जवाकुसुमादि विषमव्याप्तोपाधौ च व्याप्यत्वाभावात्तद्धर्म्मस्य साधनाभिमतेऽनवभासनादिति चेत् सत्यं समव्याप्त एवार्द्रेन्धनप्रभववह्निमत्त्वादौ मुख्य उपाधिपदप्रयोगः, अन्यत्र तु गौणः, गुणः

---

वि॰ च्छेदकं तदवच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिवृत्ति यत् हेतुतावच्छेदकं तदत्त्वं व्याप्तिः, गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वस्वीकाराच्च कम्बुग्रीवादिमत्त्वान् द्रव्यत्वादित्यादौ नातिव्याप्तिः, कालो घटवान् महाकाशत्वादित्यादौ महाकाशान्यत्वविशिष्ट-

उ० व्यभिचारोन्नायकत्वम्, यद्धि यद्व्यापकव्यभिचारि तस्य तद्व्यभिचारित्वनियमात्, भवति च साध्यव्यापकस्योपाधेर्व्यभिचारि साधनम्, अतः साध्यव्यभिचारीति, यद्व्यापकाव्याप्यं यत् तत् तदव्याप्यम् इति व्याप्यत्वासिद्ध्युन्नायकत्वं वा सत्प्रतिपचोत्थापकत्वं वा पचे उपाधेः साध्यव्यापकस्याभावात् साध्याभावसाधनात् तदुक्तं "वायुकस्साध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः पर्य्यवसितं नियमयन् दूषकतावोजसाम्यात्" इति, उन्नीयते चायं साधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः। यत्तु यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिरिति तन्न हतीया न करणे न हेतौ न प्रकारे न लक्षणे, नच यद्व्यभिचारित्वे न ज्ञातेन साधनस्य साध्यव्यभिचारित्वं ज्ञायते इति पूरणीयम् अज्ञायमानोपाध्यव्यापनात् स्फुटव्यभिचारस्योपाध्यव्यापनात्, योग्यतागर्भा तु दुर्निरूपा, व्यभिचारोन्नायकत्वमव्यवस्थाप्य उपाध्युद्भावनाशक्यत्वाच्च पचेतरत्वन्तु उपाधिलक्षणाक्रान्तमपि स्वव्याघातकत्वान्नोपाधिः यथा पचे सन्दिग्धानैकान्तिकत्वम्, यदि हि तत्र न सन्देहस्तदा न पचता, यदि पचता तदा सन्देहस्यावश्यकतया सन्दिग्धानैकान्तिकत्वध्रौव्यात् अवशिष्टं मयूखेऽन्वेष्टव्यम्॥ १४ ॥

---

वि० घटाद्यभावप्रतियोगितामादाय सम्बन्धसमन्वयः, उभयो संज्ञयोः सम्बन्धादिनिवेशव्यावर्त्तिः सुधीभिरूहनीया विस्तरभयात् परित्यक्ताऽस्माभिः॥ १४ ॥

सू० अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः॥ ॥१५॥

---

उ० इदानीं हेतूनां वर्त्तिष्यमाणानाञ्च हेतूनां हेत्वाभासाद्विवेकाय हेत्वाभासप्रकरणमारभमाण आह।

अप्रसिद्ध इति अव्याप्तोऽगृहीतव्याप्तिको विपरीतव्याप्तिकश्च विरुद्धः एतेन व्याप्यत्वासिद्धविरुद्धयोः संग्रहः, असन्

---

वि० प्रसङ्गात् हेत्वाभासं निरूपयति।

अप्रसिद्धः अप्रमितः व्याप्त्या पक्षधर्मतया च तथाच यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति स असिद्ध इतियावत्, असन् साध्यवतीत्यादि साध्यवदवृत्तिर्विरुद्ध इति फलितार्थः सन्दिग्ध इति यतः पक्षे साध्यरूपोधर्म्म इत्यादिः तथाच साध्यसन्देहजनकपक्षधर्मताज्ञानविषय इत्यर्थः सव्यभिचार इति तु फलितार्थः। चकारादनुक्तयोः गौतमीयतन्त्रोक्तयोः सत्प्रतिपक्षबाधितयोः संग्रहः तथाच हेत्वाभासाः पञ्च असिद्धविरुद्धसव्यभिचारसत्प्रतिपक्षबाधिताः तादृशपञ्चान्यतमत्वं हेत्वाभाससामान्यलक्षणमित्यर्थः। "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इत्याप्युपलक्षणं ज्ञेयम् एवमेव वृत्तिकारः। हेतुवदाभासन्ते इति व्युत्पत्त्या हेत्वाभासपदं दुष्टहेतुपरं, हेतोराभासा इति व्युत्पत्त्या तु हेतुदोषबोधकमेव तत्, तच्च दोषा अपि पञ्च, तत्र दोषसामान्यलक्षणं प्रकारान्तरमपि सम्भवति, तथाहि अनाहार्य्याप्रमाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयिताव्यापिका पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेति समूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तादृशविशि-

उ॰ इति पचेऽसन् अपचधर्म्म इत्यर्थः स च क्वचित् स्वरूपविरहात् क्वचित् सन्देहसिषाधयिषयोरभावात् सिद्धसाधने, सन्दिग्ध इति पचे साध्यसदसत्त्वकोटिकसंशयजनकः, स च संशयः समानधर्म्मदर्शनात् क्वचिदसाधारणधर्म्मदर्शनात्

---

वि॰ त्वं हेतुदोषत्वम्, अत्र तादृशविशिष्टान्तराघटितत्वे सतीति विशेषणं देयं तेन प्रमेयत्वविशिष्टव्यभिचारादौ नातिप्रसङ्गः यद्यपि विशेषगुणसामान्याभाववान् द्वितीयक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ बाधघटिताया आश्रयासिद्धेरसंग्रहस्तथापि स्वावच्छिन्नविषयकत्वावच्छिन्न यत्किञ्चित् प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्म्मवत्त्वं हेतुदोषत्वमित्यस्य विवक्षितत्वान्न दोषः, लक्षणसङ्गमनादिकन्तु सुधीभिः स्वयमूहनीयं विस्तरभयादुपेक्षितमस्माभिः। निर्व्वह्निः पर्व्वतो वह्निमानित्यादौ तु हेतुदोषो न स्वीक्रियते, अविज्ञाताख्यनिग्रहेणैव वादिनस्तत्र निग्रहात् अथवा यादृशविशिष्टविषयकानाहार्य्याप्रामाण्यज्ञानानास्कन्दितनिश्चयोत्तरानुमितित्वव्यापकः विरोधिविषयताप्रयुक्तः पक्षविशेष्यतानिरूपितसाध्यप्रकारत्व तादृशविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारत्वोभयाभावः तादृशविशिष्टत्वं हेतुदोषत्वम् अत्रापि निरुक्तबाधघटिताश्रयासिद्धिसंग्रहाय प्रमेयत्वादिविशिष्टदोषवारणाय च स्वविषयताप्रयोज्यविशिष्टान्तरविषयत्वाप्रयोज्य तादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वं विवक्षणीयं लक्षणसङ्गमनादिकं सुधीभिः स्वयमूहनीयं ग्रन्थगौरवभयाद्विरम्यतेऽस्माभिः। तत्रासिद्धिदोषस्त्रिविधः स्वरूपासिद्ध्याश्रयासिद्धिव्याप्यत्वासिद्धिभेदात् पक्षे हेत्वभावः

सू॰ यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥

---

उ॰ क्वचित् पक्ष एव हेतोः साध्यतदभावसाहचर्य्यदर्शनात् आद्यः साधारणानैकान्तिकः, द्वितीयस्त्वसाधारणानैकान्तिकः तृतीयोऽनुपसंहारी ॥ १५ ॥

तत्र व्याप्यत्वासिद्धविरुद्धस्वरूपासिद्धानामुदाहरणमाह।

यत्र रासभपिण्डं पक्षीकृत्यायमसावश्वः विषाणित्वात्

---

वि॰ स्वरूपासिद्धिः, पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः, व्यर्थविशेषणघटितं हेतुतावच्छेदकम्, साध्ये साध्यतावच्छेदकाभावः, साधने साधनतावच्छेदकाभावश्च व्याप्यत्वासिद्धिः, यत्र योऽसिद्धिस्तत्र तद्व्याप्योप्यसिद्धिरेव तावदन्यतमत्वम् असिद्धित्वम्, हेतौ साध्यसामानाधिकरण्याभावतद्व्याप्यौ साध्ये हेतुसामानाधिकरण्याभावतद्व्याप्यौ च विरोधः, तावदन्यतमत्वं विरोधत्वम्, साधारणासाधारणानुपसंहार्य्यभेदात् व्यभिचारस्त्रिविधः, हेतौ साध्याभाववद्वृत्तित्वतद्व्याप्यौ साधारण्यम् साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुरसाधारण्यम्, अत्यन्ताभावाप्रतियोगिसाध्यादिकं हेतौ व्यतिरेकव्याप्त्यभावश्चानुपसंहार्य्यम्, अत्रापि व्याप्योविवक्षणीयः, साधारण्यादित्रितयान्यतमत्वं व्यभिचारत्वम्, साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः, साध्याभाववान् पक्षोबाधः, असिद्ध्यादिपञ्चदोषान्यतमत्वं हेतुदोषत्वं स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवान् हेतुर्दुष्ट इत्यपि केचित् ॥ ॥ १५ ॥

हेत्वाभासानामुदाहरणमाह।

यथ ग्रथादिः पक्षः अश्वत्वं साध्यं विषाणित्वं हेतुस्तत्र पञ्चैव हेतुदोषाः सन्ति तत्समन्वयः स्वयमूहनीयः ॥ १६ ॥

सू० यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥

उ० यस्तु नाश्वो नासौ विषाणी, यथा शशशृगालनरवानरादिरिति व्यतिरेकसहचारदर्शनाहितव्यामोहः प्रयुङ्क्ते, तत्र व्याप्यत्वासिद्धस्वरूपासिद्धविरुद्धानामुदाहरणमिदम्॥१६॥

अनैकान्तिकमुदाहरति।

यत्र महिषं पक्षयित्वा अयं गौर्विषाणित्वादिति साधयति तत्र साधारणानैकान्तिकता, यदा त्वाकाशं नित्यं शब्दाश्रयत्वादिति साधयति तदाऽस्यासाधारणानैकान्तिकता, एवं शब्दोऽनित्यः शब्दत्वादित्याद्यप्यग्रहमाणदशायामसाधारणानैकान्तिकमेव, यदा तु विपक्षबाधकतर्कावतारात् पक्ष एव साध्यं सिद्ध्येत् तदा सपक्षवृत्तिताज्ञानदशायां सद्धेतुरेव पक्षस्यापि सपक्षत्वात् तत्र व्याप्तपक्षधर्मतयाऽप्रमितोऽसिद्धः स च त्रिविधः व्याप्यत्वासिद्धः स्वरूपासिद्धः आश्रयासिद्धश्च तत्रागृहीतव्याप्तिकोव्याप्यत्वासिद्धः, सत्या एव व्याप्तेरग्रहात् व्याप्तेरभावाच्च उभयथाऽपि, तेनानुकूलतर्काभावादयोऽसिद्धभेदाः, सचायमसमर्थविशेषणा समर्थविशेष्या समर्थोभय सन्दिग्धासमर्थविशेषण-

वि० सव्यभिचारस्योदाहरणमाह।

अत्र यदि गोपिण्डस्य पक्षता तदा बाधः सत्प्रतिपक्षश्चास्ति यदि महिषपिण्डादिः पक्षः तदा तावपि विद्येते अत्र गोत्वाभाववद्वृत्ति-

उ॰ सन्दिग्धासमर्थविशेष्य सन्दिग्धासमर्थाभयभेदप्रपञ्चेन सप्तधा भिद्यते सर्व्वत्र चात्र सिद्धिविरह एवोन्नाव्यः। अत्रेदं तत्त्वम् हेतुस्तावत् केवलान्वय्यन्वयव्यतिरेकिकेवलव्यतिरेकिभेदात्त्रिविधः तत्र सर्व्वधर्म्मिगतोधर्म्मः केवलान्वयी यथा प्रमेयत्वाभिधेयत्वविशेष्यत्वविशेषणत्वनित्यद्रव्यात्यन्ताभावाश्रयगगनाश्रगुणादिध्वंसात्यन्ताभावादयः, नह्यस्ति तादृशं किञ्चित्, यत्रैते धर्म्मा न विद्यन्ते, तथाच सर्व्वगतत्वम् अत्यन्ताभावाप्रतियोगित्वं वा केवलान्वयित्वम् एतेषाञ्च स्वात्मवृत्तित्वेऽपि न दोषः तदुक्तं "प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः" इति केवलान्वयिसाध्यकोहेतुः केवलान्वयी अस्य च पक्षसत्त्वसपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि गमकत्वौपयिकानि, अन्वयव्यतिरेकिणस्तु हेतोर्विपक्षासत्त्वेन सह पञ्च, केवलव्यतिरेकिणः सपक्षसत्त्वव्यतिरेकेण चत्वारि, तथाच यस्य हेतोर्यावन्ति रूपाणि गमकत्वौपयिकानि तदन्यतररूपहीनः स हेत्वाभासः एवञ्च गमकत्वौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वं तेनान्यतररूपशून्यत्वस्य निश्चयवत्सन्देहोऽप्यनुमितिप्रतिबन्धकः वादिहेतोरसाधकतासाधकः नच केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः केवलान्वयिनि विपक्षासत्त्वस्य केवलव्य-

वि॰ विद्यावित्वं साधारण्यम्, मोक्षव्यतिरेकव्याप्यभाववद्विद्यावित्वम् अनुपसंहार्य्यम्, असाधारण्यं तु अत्र नास्ति एवं मोक्षव्याप्यभा-

उ॰ तिरेकिणि सपक्षसत्त्वस्य गमकत्वौपयिकत्वाभावात् एवञ्चा-श्रयासिद्धस्वरूपासिद्धभागासिद्धानां पक्षसत्त्वरूपविरहादा-भासत्वम्, व्याप्यत्वासिद्धविरुद्धसाधारणानैकान्तिकानां वि-पक्षासत्त्वरूपवैकल्यात्, असाधारणानैकान्तिकानुपसंहारि-णोः सपक्षसत्त्ववैकल्यात्, बाधितसत्प्रतिपक्षितयोरबाधि-तत्वासत्प्रतिपक्षितत्वविरहात्, एवं सोपाधित्वाप्रयोजकत्वयो-रपि विपक्षासत्त्वनिश्चयाभावादगमकत्वम्, अनुकूलतर्का-भावप्रतिकूलतर्कयोरपि विपक्षासत्त्वनिश्चयविरहात्, एवं साध्यविकलसाधनविकलोभयविकलदृष्टान्ताभासानां यदि हेत्वाभासविधया दोषत्वं तदा सपक्षसत्त्वानिश्चयात्, यदि स्वातन्त्र्येण दृष्टान्ताभासतया तथापि द्वारं हेतोः सपक्ष-सत्त्वानिश्चय एव, अनुपदर्शितान्वयानुपदर्शितव्यतिरेकास्तु न्यूनाप्राप्तकालनिग्रहस्थानपर्य्यवसन्ना एव, आत्माश्रयान्यो-न्याश्रयचक्रकानवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्ष-सत्त्वविपक्षासत्त्वान्यतररूपविकला एव हेत्वाभासतामासा-दयन्ति, तत्र पक्षे साध्यसदसत्त्वकोटिकसंशयजनको हेत्वा-भासः सव्यभिचारः, पक्षे साध्याभावनिश्चयफलको हेत्वा-भासो विरुद्धः, व्याप्तिपक्षधर्म्मताप्रमितिविरहोऽसिद्धः, बाध-सत्प्रतिपक्षौ तु काश्यपीये मते न स्वतन्त्रौ तत्र बाध आश्रयासिद्धावनैकान्तिके वा पर्य्यवस्यति तदुक्तं "बाधा-

---

वि॰ सव्यभिचारित्वं व्याप्यत्वासिद्धिरप्यत्र वर्त्तते हेत्वाभासविशेषाणां लक्षणम् उदाहरणञ्च स्वयमूह्यं विस्तरभयादस्माभिः ॥ १७ ॥

सू० आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ ॥ १८ ॥

उ० याममपक्षधर्मो हेतुरनैकान्तिको वा" इति सत्प्रतिपक्षोऽप्यन्यतरच व्याप्त्यादिसंशयमापादयन् अनैकान्तिकादावेव पर्य्यवस्यति। वृत्तिकारस्तु "अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेश" इति सूत्रस्थचकारस्य बाधसत्प्रतिपक्षसमुच्चयार्थतामाह तेन "सव्यभिचार विरुद्ध प्रकरणसम साध्यसमातीतकालाः पञ्च हेत्वाभासा" इति गौतमीयमेव मतमनुधावति, परन्तु "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इत्याद्यभिधानात् सूत्रकारस्त्वरसो हेत्वाभासत्रित्वे, चकारस्तूक्तसमुच्चयार्थ इति तत्त्वम्, ग्रन्थगौरवभयात् प्रपञ्चो न कृतो मयूखे विस्तरोऽन्वेष्टव्यः ॥ १७ ॥

इदानीं हेत्वाभासविवेचनस्य फलमाह।

आत्मेन्द्रियार्थसन्निकर्षात्तावज्ज्ञानमुत्पद्यते तच्चात्मनि लिङ्गम् असिद्धविरुद्धानैकान्तिकेभ्योऽन्यत् अनाभासमित्यर्थः। तथाहि ज्ञानमात्मन्युभयथा लिङ्गम्, ज्ञानं क्वचिदाश्रितं कार्य्यत्वाद्रूपादिवदिति वा, प्रत्यभिज्ञारूपतया वा योऽहमद्राक्षं सोऽहं स्पृशामीति, तच ज्ञानगतं कार्य्यत्वं ना-

वि० आत्मनि प्रमाणान्तरमपि दर्शयति। यदात्मसाधको हेतु र्न हेत्वाभास इत्याह।

आत्मरूपो य इन्द्रियार्थस्तत्र यः सन्निकर्षः अर्थान्मनसः, आत्ममनःसंयोग इति यावत् तस्मात् यज्ज्ञानमुत्पद्यते अहं सुखीत्या-

उ० सिद्धं सविपक्षत इत्यभिधानात्, न विरुद्धं सामान्यतोदृष्टेऽच विरोधाभावात्, न चानैकान्तिकम्, तत एव, तथाच स्वगतकार्य्यत्वगुणत्वद्वारा सामान्यतोदृष्टेन ज्ञानमेवात्मनि लिङ्गम्, प्रत्यभिज्ञानन्तु भिन्नकर्तृकेभ्यो व्यावर्त्तमानमेककर्तृकतायां पर्य्यवस्यति नच बुद्धिचैतन्येऽपि कार्य्यकारणभावनिबन्धनमेव प्रतिसन्धानम्, शिष्यगुरुबुद्ध्योरपि प्रतिसन्धानप्रसङ्गात्। उपादानोपादेयभावस्तत्र नास्ति स च प्रतिसन्धानप्रयोजक इति चेदुपादानत्वस्य द्रव्यधर्म्मतया बुद्धावसम्भवात्, सम्भवे वा बुद्धीनां क्षणिकतया पूर्व्वानुभूतप्रतिसन्धानानुपपत्तेः, नहि पूर्व्वबुद्ध्या उत्तरासु बुद्धिषु कश्चित् संस्कार आधीयते, स्थिरस्य तस्य त्वयाऽनभ्युपगमात्, क्षणिकबुद्धिधारारूपस्य च कालान्तरस्मृतौ प्रतिसन्धाने वाऽसामर्थ्यात्, आलयविज्ञानसन्तानः प्रवृत्तिविज्ञानसन्तानादन्य एव स्मर्त्ता च प्रतिसन्धाता चेति चेत् स यदि स्थिरः तदा सिद्धं नः समीहितम्, क्षणिकबुद्धिधारारूपश्चेत् तदा पूर्व्वदोषानतिवृत्तेः, नहि तत्रापि स्थिरः कश्चित् संस्कारः। किञ्च प्रवृत्तिविज्ञानातिरिक्ते तत्र प्रमाणाभावः। अहमिति बुद्धिधारैव प्रमाणमिति चेत् भवतु तत्र यदि प्रवृत्तिविज्ञा-

---

वि० ज्ञाकारकं तदन्यत् तत् ज्ञानम् अनुमानादन्यत् आत्मनि प्रमाणमितिशेषः आत्ममनःसंयोगजन्यज्ञानस्य प्रत्यक्षत्वज्ञापनाय एवं वक्रोक्तिः, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति प्रत्यक्षलक्षणात्, यद्यपि तादृशप्रत्यक्षं न घटादिभिरात्मसाधकं तथाप्यात्म-

उ॰ नाम्बालयविज्ञानमेव चेदुपादत्ते तदा प्रवृत्तिविज्ञाना-
नामुपादानताविरहे निमित्तताऽपि न स्यात् उपादा-
नताव्याप्तत्वान्निमित्ततायाः, माऽस्तु निमित्तताऽपीति चेत्
तर्हि सत्त्वमपि गतम्, अर्थक्रियाकारित्वस्य सत्त्वलक्षणत्वात्
प्रवृत्तिसन्तानालयविज्ञानसन्तानाभ्यां सम्भूय सन्तान-
द्वयमुपादीयत इति चेत् तर्हि किमपराद्धमवयवि-
संयोगादिभिः, व्यासज्यवृत्तितायास्तथाप्यभ्युपगमात् त-
स्माज्ज्ञानेनाश्रयतयाऽनुमितमात्मानं प्रतिसन्धानं स्थिर-
त्वेन साधयतीति न किञ्चिदनुपपन्नम् । यदा नित्या
बुद्धिर्नात्मानं कारणत्वेन गमयितुमर्हतीति-साङ्ख्यमत-
निरासाय सूत्रमिदमुपतिष्ठते "आत्मेन्द्रियार्थसन्निकर्षाद्
यन्निष्पद्यते तदन्यत्" बुद्धितत्त्वं यत्त्वयोच्यते तज्ज्ञानमेव,
बुद्धिरुपलब्धिर्ज्ञानमिति हि पर्य्यायाभिधानं, तच्चात्मा-
दिसन्निकर्षादुत्पन्नम् अन्यदेव त्वदभ्युपगतादन्तःकरणा-
दित्यर्थः तथाच भवति तत् आत्मनोलिङ्गमितिभावः ॥
॥ १८ ॥

---

वि॰ मात्रसाधकतायास्तत्र निराबाधतैवेतिभावः अथवा यन्निष्पद्यते
इत्यन्तेन ज्ञानमेव प्रतिपाद्यते, तदन्यदित्यस्य च तत् ज्ञानम्
आत्मानुमापकं हेत्वाभासादन्यत् इत्यर्थः, तथाच ज्ञानं द्रव्याश्रितं
गुणत्वादित्यस्माकं य आत्मसाधको हेतुः स न हेत्वाभासः किन्तु
ज्ञानं शरीराश्रितं तत्कार्य्यत्वादित्यादिना त्वयोद्भावितो हेतुरेव
हेत्वाभास इतिभावः । १८ ।

सू० प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ १९ ॥

---

उ० आत्मन्यनुमानमभिधाय इदानीं परात्मानुमानमाह ।

प्रत्यगात्मनीति स्वात्मनीत्यर्थः, इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती प्रयत्नविशेषौ ताभ्याञ्च हिताहितप्राप्तिपरिहारफलके शरीरकर्म्मणी चेष्टालक्षणे जन्येते तथाच परशरीरे चेष्टां दृष्ट्वा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत्, स च प्रयत्न आत्मजन्यः आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मानुमानम् ॥ १९ ॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे तृतीयाध्यायस्याद्यमाह्निकम् ॥ * ॥

---

वि० परात्मनि प्रमाणमाह ।

प्रवृत्तिरुत्कटरागजन्यः प्रयत्नविशेषः निवृत्तिरुत्कटद्वेषजन्यो यत्नविशेषः ते च प्रत्यगात्मनि स्वात्मनि दृष्टे साक्षात्कृते परत्र परात्मनि लिङ्गमिति सौत्रमेकवचनं परात्मसाधकानुमितिसम्पादिके इत्यर्थः, चैत्रशरीरादिगता चेष्टा चेतनप्रयत्नसाध्या चेष्टात्वात् मच्छरीरचेष्टावदित्यनुमाने साध्यतावच्छेदककोटौ परात्मनः सिद्धेरिति । यद्यपि गमनादिक्रियायां प्रवृत्तिरेव हेतुर्दृश्यते नतु निवृत्तिरिति तथापि हिंसादिनिवृत्तितो मन्त्रदेशावस्थितानां क्षुद्रजन्तूनां यजनादिना अपसारणादिरूपा चेष्टाऽपि दृश्यत एवेति नानुपपत्तिरिति संक्षेपः ॥ १९ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-कृतायां कणादसूत्रविवृतौ तृतीयाध्यायस्याद्यमाह्निकम् ॥ * ॥

सू० आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावाऽभावश्च मनसोलिङ्गम् ॥ १ ॥

---

उ० हेतुहेत्वाभासविवेकः आह्निकार्थः। इदानीमात्मपरीक्षाशेषं वर्णयिष्यन् उद्देशक्रमलङ्घनेन मनःपरीक्षामवतारयन्नाह।

मनोगतिमात्ममनोलिङ्गं वक्ष्यति तद् यदि मनो ज्ञानकरणत्वेन मूर्त्तत्वेन च परीक्षितं भवति तदा यत्प्रेरितं मनः इन्द्रियान्तरादभिमतविषयग्राहिणि इन्द्रिये सम्बध्यते स आत्मेति सिद्धं भवतीत्येतदर्थं क्रमलङ्घनम्। आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन् इन्द्रियसन्निकृष्टे ज्ञानस्य भावः उत्पादः, असन्निकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मन इत्यर्थः नन मनोवैभवेऽपि करणधर्म्मत्वादेव ज्ञानायौगपद्यमुपपद्यते किञ्च मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत् ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत् स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादि वैभवसाधकं प्रमाणमिति चेत् नैवं यदि मनो विभु स्यात्तदा सर्व्वेन्द्रियसन्निकृष्टान्ततः सर्व्वेन्द्रियकमेकमेव ज्ञानं स्यात्, कार्य्यविरोधान्नैवमिति चेन्न

---

वि० आत्मपरीक्षाशेषसम्पादकं मनोनिरूपणमारभते।

आत्मा च इन्द्रियञ्च अर्थश्च ते आत्मेन्द्रियार्थास्तेषु यः सन्निकर्षस्तस्मिन् सतीत्यर्थः अत्रात्मनि इन्द्रिये च मनसः संयोगरूपः सन्निकर्षः, अर्थे च रूपादौ चक्षुरादेः सन्निकर्षो बोध्यः तथाच

उ॰ नहि सामग्री विरोधाविरोधमाकलयति येन चाक्षुषत्व-रासनत्वादिविरोधाय बिभ्येत्, चित्ररूपवत् चित्राकार-मेव वा स्यात्, भवत्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न तत्रापि व्यासङ्गदर्शनात्, तर्हि रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कथमनुव्यवसाय इति चेन्न शीघ्रसञ्चारिमनो-जनितेषु पञ्चसु स्मृत्युपनीतज्ञानेषु यौगपद्याभिमानात्, व्यासङ्गोऽपि करणधर्म्माधीन इति चेन्न उक्तोत्तरत्वात्, बुभुत्साधीनो व्यासङ्ग इति चेन्न सर्व्वबुभुत्सायां सर्व्वविषय-कसर्व्वोदयप्रसङ्गात् बुभुत्साया अपि अभिमतार्थग्राहीन्द्रि-यमनःसम्बन्धमात्रफलकत्वात् तस्माज्ज्ञानायौगपद्यान्यथा-नुपपत्त्या सिध्यति अणु मनः, ततोधर्म्मिग्राहकमानबाधिताः वैभवहेतवः किञ्च मनोविभवे पादे मे सुखं शिरसि मे वेद-नेति प्रादेशिकत्वं सुखादीनां न स्यात् विभुकार्य्याणाम-समवायिकारणावच्छिन्नदेशे उत्पादनियमात्, तवापि सुखादीनामणुदेशापत्तिरिति चेन्न असमवायिकारणं विभु-कार्य्यं स्वदेशे जनयत्येवेति नियमात् तथाच निमित्त-

---

वि॰ चक्षुर्मनोयोगदशायां सत्यां रासनप्रत्यक्षसामग्र्यां चाक्षुषमेव भवति न रासनादिकमिति तन्नियामकतयाऽवश्यं अणु मनः स्वीकार्य्यं तथाच मनसोऽणुतया नैकदा द्वाभ्यामिन्द्रियाभ्यां योगः किन्तु येन योगस्तदेव प्रत्यक्षं जनयति नेतरत्, न च मानसा-मान्यं प्रति त्वङ्मनोयोगस्य हेतुतया चक्षुर्मनोयोगदशायां कथं त्वङ्मनोयोग इति वाच्यं त्वगिन्द्रियस्य देहव्यापित्वेन मनसश्चक्षुषा

सू० तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥

---

उ० चन्दनाद्यवच्छेदादधिकदेशेऽपि गमनाविरोधात्, ममापि निमित्तसमवधानानुरोध इति चेन्न उक्तनियमभङ्गप्रसङ्गात् किञ्चात्मना विभुना मनसः संयोगोऽपि कथं स्यात्, अजोऽसाविति चेन्न विभागस्याप्यजत्वप्रसङ्गात्, अवच्छेदभेदेनोभावप्यविरुद्धाविति चेन्न संयोगविभागयोरवच्छेदभेदस्य स्वकारणाधीनत्वात् अजयोस्तु तदभावादितिदिक् ॥ १ ॥

ननु सुखाद्युपलब्धिः करणसाध्या क्रियात्वात् रूपोपलब्धिवदित्याद्यनुमानात् युगपज्ज्ञानानुत्पत्त्या वा यन्मनः सिद्धं तत्करणतया तथाच तस्य द्रव्यत्वं नित्यत्वञ्च कुत इत्यत आह ।

यथाऽवयविद्रव्यानुमितो वायुपरमाणुर्गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम्, तथा युगपज्ज्ञानानुत्पत्त्याऽनुमितं मनो गुणवत्त्वाद्द्रव्यं, नहि तस्य इन्द्रियसंयोगमन्तरेण ज्ञानोत्पादकत्वं

---

वि० संयोगदशायां त्वचापि संयोगसम्भवात् नच चाक्षुषकाले त्वचापत्तिरिति वाच्यं त्वाचं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वस्यागत्या कल्पनात् चर्ममनःसंयोगस्यैव ज्ञानसामान्यं प्रति हेतुतायाः पक्षधरमिश्रादिसम्मतत्वेनोक्तापत्त्यसम्भवाच्चेति संक्षेपः ॥ १ ॥

ननु भवतु मनसः सिद्धिस्तथापि मनसो नित्यत्वं द्रव्यत्वञ्च कथं स्वीकर्त्तव्यमित्यत आह ।

यथा वायवीयपरमाणो आरम्भकसंयोगादिरूपगुणवत्त्वाद्

सू० प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्॥ ३॥

उ० येन गुणवत्त्वं न स्यात् किञ्च सुखादिसाक्षात्कारः इन्द्रियकरणकः साक्षात्कारत्वात् रूपादिसाक्षात्कारवदितीन्द्रियत्वेन मनः सिद्धम्, इन्द्रियत्वञ्च ज्ञानकारणमनःसंयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसोद्रव्यत्वम्, नित्यत्वञ्च तस्यानाश्रितत्वात्, तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति॥ २॥

तत् किं प्रतिशरीरमेकमनेकं वेति सन्देहे निर्णायकमाह।

मनः प्रतिशरीरमितिशेषः यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात् यत्तु नर्त्तकीकरचरणाङ्गुलीषु युगपत् कर्मदर्शनाद्युगपदेव बहवः प्रयत्ना उत्पद्यन्ते इति मतं तदयुक्तं मनसः शीघ्रस-

वि० द्रव्यत्वं तदवयवकल्पनायां प्रमाणाभावान्नित्यत्वं तथा ज्ञानजनकसंयोगादिरूपगुणवत्त्वात् तदुत्पादविनाशयोः प्रमाणाभावाच्च मनसोपि द्रव्यत्वं नित्यत्वञ्चेत्यर्थः॥ २॥

प्रतिशरीरं मनस एकत्वं व्यवस्थापयति।

यदङ्गेन मनसः संयोगो यदा भवति तदा तदङ्गावच्छेदेन प्रयत्न उत्पद्यते नान्यावच्छेदेन एवञ्च मनसो नानात्वे एकदाऽङ्गद्वयेनापि एकैकस्य मनसः संयोगसम्भवात् प्रयत्नद्वयमुत्पद्येत नच विंशत्यङ्गुल्यवच्छेदेन एकदैव विंशतिः प्रयत्ना उत्पद्यन्ते कथमन्यथा एकदैव तेषां क्रिया उत्पद्यन्ते इति वाच्यम् उत्पलपत्रशतव्यतिभेद इव

उ॰ सञ्चारादेव तदुपपत्तेः अविनश्यदवस्थयोश्चात्मविशेषगुणानां यौगपद्यानभ्युपगमात्। एतेनैकस्मिन्नपि शरीरे पञ्च मनांसि तेषां द्वित्रिचतुःपञ्चानां तत्तदिन्द्रियसंयोगे द्वे त्रीणि चत्वारि पञ्च वा ज्ञानानि युगपज्जायन्त इति मतं निरस्तं कल्पनागौरवप्रसङ्गात्, यौगपद्याभिमानस्तु समर्थित एव, रसनेन्द्रियावच्छेदेन त्वगिन्द्रियसम्बन्धेन मनसस्तिक्तगुड इति ज्ञानद्वययौगपद्यापत्तिरपि करणधर्मत्वादेव नास्ति, द्वित्रिच्छिन्नगोधाभुजगादावपि अवयवद्वये कर्म खड्गाद्यभिघाताद्वा मनस आशु सञ्चाराद्वा तदानीमेवादृष्टेन पञ्चमनोन्तरग्रहणाद्वा। यत्तु मनोऽवयव्येव जलौकावत् तत्सङ्कोचविकाशाभ्यां ज्ञानयौगपद्या-

---

वि॰ तासु यौगपद्यप्रतीतेर्भ्रमरूपत्वात् मनस आशु सञ्चारादेव भिन्नभिन्नक्षणेषु तासामुत्पादात्, एवं मनसो नानात्वे युगपदेव श्रावणरसनादिभिः सह तेषामेकैकस्य संयोगसम्भवात् श्रावणरासनादीनामपि युगपदुत्पादापत्तिरतः प्रतिशरीरं मन एकमेव न तु नानेत्यर्थः। ननु छिन्नवृश्चिकादिखण्डद्वय एव क्रियादर्शनान्मनसो नानात्वमावश्यकमिति चेन्न तदानीमदृष्टवशेन मनोन्तरसन्निवेशादेव तत्सम्भवात् अन्यत्र प्रयत्नायौगपद्यस्य ज्ञानायौगपद्यस्य च प्रामाणिकत्वेन मनसो नानात्वस्वीकारस्य कर्त्तुमशक्यत्वादिति। कूर्म्मशुण्डादिवत् मनसः सङ्कोचविकाशाभ्यामेव प्रयत्नानां ज्ञानानाञ्च यौगपद्यायौगपद्ययोर्निर्व्वाहः वस्तुत एकमेवैकस्मिन् शरीरे मन इति केचित् तदपि न मनोरमम् अनन्तावयवानां तत्प्रागभावानां तत्प्रध्वंसानाम् अनन्ततत्परमाणूनाञ्च

सू० प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रिया-

उ० यौगपद्ये इति तत् तदवयवकल्पनागौरवप्रतिहतमिति दिक् ॥ ३ ॥

इदानीं क्रमसङ्गतप्रयोजनमादर्शयन्नेवात्मपरीक्षाशेषं वर्त्तयिष्यन्नाह ।

प्रसिद्धिर्ज्ञानमेव केवलमात्मनो लिङ्गमिति न मन्तव्यं प्राणादयोऽपि सन्ति आत्मनो लिङ्गानि तथाहि शरीरान्तश्चारिणि समीरणे प्राणापानलक्षणे ऊर्द्धाधोगती उत्क्षेपणावक्षेपणे मुषलादाविव प्रयत्नं विनाऽनुपपद्यमाने यस्य प्रयत्नाद्भवतः स नूनमात्मा, नहि तिर्य्यग्गमनस्वभावस्य वायोरेवं स्वभावविपर्य्ययो विना प्रयत्नात्, न च विरुद्धदिक्क्रिययोर्वाय्वोः सलिलयोरिवोर्द्धगतिः स्यादिति वाच्यम् एवं सत्यूर्द्धगमनमेव स्यान्नत्वधोगमनं फुत्कारादौ वा तिर्य्यग्गमनम्, तथाचास्ति कश्चित्, यः प्रयत्नेन वायुमूर्द्धमधो वा प्रेरयति, सुषुप्तिदशायां कथं प्राणापानयोर-

वि० कल्पने महागौरवादिति संक्षेपः । एकमित्यनेन प्रथमसूत्रस्थस्य मनस इत्यस्य विभक्तिविपरिणामेन प्रथमान्ततयाऽन्वयः ॥ ३ ॥

आत्मसाधकानि लिङ्गान्तराण्यपि सन्तीत्याह ।

प्राणादयोऽपि आत्मनो लिङ्गानि तथाहि तिर्य्यग्गमनस्वभाववायुविशेषस्य प्राणस्योर्द्धगमनम् अपानस्याधोगमनं वा चेतनप्रयत्नसाध्यम् ऊर्द्धगतित्वात् अधोगतित्वाद्वा लोष्टाद्यूर्द्धाधोगतिवत् इत्यनुमानेनात्मसिद्धिः, न च सुषुप्तौ प्रयत्नाभावेन तदानी-

सू० न्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि॥ ४॥

---

उ० र्द्धाधोगती इति चेन्न तदानीं योग्यप्रयत्नाभावेऽपि प्रयत्नान्तरस्य सद्भावात् स एव जीवनयोनिः प्रयत्न इत्युच्यते एवं निमेषोन्मेषावपि शरीरस्याधिष्ठातारमनुमापयतः तथाहि निमेषस्तावत् अक्षिपक्ष्मणोः संयोगजनकं कर्म्म उन्मेषस्तयोरेव विभागजनकं कर्म्म एते च कर्म्मणी नोदनाभिघातादिदृष्टकारणमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना नोत्पद्येते यथा दारुपुत्रकनर्त्तनं कस्यचित् प्रयत्नात् तथाऽक्षिपक्ष्मनर्त्तनमपि, तेन प्रयत्नवाननुमीयते, एवं जीवनमप्यात्मलिङ्गं तथाहि जीवनपदेन लक्षणया जीवनकार्य्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयति। तथाच यथा गृहपतिर्भग्नस्य गृहस्य निर्म्माणं करोति, लघीयो वा गृहं वर्द्धयति तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याहारादिना वृद्धिमुपचयं करोति क्षतञ्च भेषजादिना प्ररोहयति भग्नञ्च करचरणादि संरोहयति तथाच गृहपतिरिव देह-

---

वि० न्तनताद्दृशक्रियायामंशतोबाध इति वाच्यं तदानीमपि जीवनयोनियत्नस्य सत्त्वात् एवमक्षिपक्ष्मणोः संयोगजनकं कर्म्म निमेषः तयो र्विभागजनकं कर्म्म उन्मेषस्तयोरपि दारुपुत्रकनर्त्तनदृष्टान्तेन चेतनप्रयत्नसाध्यत्वानुमानं बोध्यम्, तथा जीवनं देहस्य वृद्धिक्षतसंरोहणादिकं जीवनकार्य्यमित्यर्थः तच्चाधिष्ठातारमनु-

उ॰ स्याप्यधिष्ठाता सिध्यतीति, एवं मनोगतिरप्यात्मलिङ्गं तथाहि मनस्तावन्मूर्त्तमणु चेति पूर्व्वप्रकरणे साधितम्, तस्य चाभिमतविषयग्राहिणि इन्द्रिये निवेशनम् इच्छाप्रणिधानाधीनम्, तथाच यदिच्छाप्रणिधाने मनः प्रेरयतः स आत्मेत्यनुमीयते यथा गृहकोणावस्थितो दारकः कन्दुकं लाक्षागुटकं वा गृहाभ्यन्तर एव इतस्ततः प्रेरयति, ननु दारुपुत्रनर्त्तयिता गृहपतिर्दारको वा न शरीरादन्यो यो दृष्टान्तः स्यात् किञ्च शरीरमेव चैतन्याश्रयः अहङ्कारास्पदत्वात्, भवति हि गौरोऽहं स्थूलोऽहमित्याद्यहङ्कारसामानाधिकरण्येन प्रत्ययः यत्तु बाल्येऽनुभूतं यौवने वार्द्धक्ये वा स्मरति तच्च चैत्रमैत्रवच्छरीरभेदेपि स्मरणं न स्यात् "नान्यदृष्टं स्मरत्यन्य" इति तत्र चैत्रमैत्रयोर्भिन्नसन्तानत्वेन प्रतिसन्धानं माऽस्तु बाल्यकौमारभेदेऽपि सन्तानैकत्वात् कार्य्यकारणभावेन प्रतिसन्धानमुपपत्स्यत इति तत्र ब्रूमः पित्राऽनुभूतस्य पुत्त्रेणापि स्मरणप्रसङ्गः, तच्च शरीरभेदपक्षेबाधक इति चेत् वृद्धेन बालशरीराद्भेदेनैव स्वशरीरस्य ग्रहात् प्रतिसन्धानानुपपत्तेः अनुपलब्धपिटकस्य बालस्य शरीरभेदाग्रहस्यापि सत्त्वात्

---

वि॰ मापयति यथा गृहाधिष्ठाता भग्नं गृहं वर्द्धयति भग्नञ्च संस्कुरुते तथा देहस्याहारादिना वृद्धिं जनयति भग्नञ्च करचरणादिकम् औषधादिना संरोहयति कश्चिच्चेतनोऽधिष्ठातेति, एवमणुतया व्यवस्थितस्य मनसोऽभिलषितज्ञानसाधनेन्द्रिये गतिरपि चेतनाभिलाषाधीनेति साप्यात्मनि लिङ्गं यथा गृहकोणा-

उ॰ मम शरीरमिति ममकारसामान्येनाहङ्कारस्य भानात्, ममात्मेत्यत्रापि तथेति चेन्न तत्र ममकारस्यौपचारिकत्वात् राहोः शिर इतिवदभेदेऽपि षष्ठ्युपपत्तेः, हिंसादिफलस्य कर्त्तरि न स्यात् शरीरस्यान्यान्यत्वात्, पातकमिच्छतोभूतचैतनिकस्य कृतहानमकृताभ्यागमस्य दोष इति दिक्।
इन्द्रियान्तरविकारात् खल्वपि दृश्यते हि नागरङ्गस्य चिरविल्वस्य वा रूपविशेषसहचरितं रसविशेषमनुभूय पुनस्तादृशं फलमुपलभमानस्य रसगर्द्धिप्रवर्त्तितो दन्तोदकसंप्लवः, स च मान्यरसानुमितिमन्तरेण, अनुमिति र्न व्याप्तिस्मृतिमन्तरेण, सा च न संस्कारं विना, स च न व्याप्त्यनुभवमन्तरेण, स च न भूयोदर्शनमन्तरेणेति इयं ज्ञानपरम्परा नैकं कर्त्तारमन्तरेण कार्य्यकारणभूता सम्भवतीति तथाच गौतमीयं सूत्रम् "इन्द्रियान्तरविकारात्" इति। सुखादयश्च ज्ञानवदेवात्मलिङ्गानि द्रष्टव्याः। तथाहि सुखादिकं क्वचिदाश्रितं द्रव्याश्रितं वा कार्य्यवस्तुत्वात् गुणत्वाद्वा रूपादिवदितीतरबाधसहकृतं सामान्यतोदृष्टमेव अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विषयीकरोति नहि पृथिव्याद्यष्टकानाश्रिता इच्छा द्रव्याश्रितेति प्रतिज्ञा अष्टद्रव्याति-

---

वि॰ वस्थितो बालकः कन्दुकादिकं गृहमध्य एव इतस्ततः प्रेरयति तथात्माऽपि देहावस्थित इन्द्रिये मनः प्रेरयतीति। ननु इन्द्रियेष्वेव चैतन्यं लोकार्थं देहाधिष्ठातृत्वमपि तेषामेवेत्यत आत्मन इन्द्रियातिरिक्तत्वं साधयति इन्द्रियान्तरविकारा इति चिरवि-

सू० तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥

---

उ० रिक्तद्रव्याश्रितत्वं प्रकारमनादाय पर्य्यवस्यति यत्र तु प्रथमं न बाधावतारस्तत्राष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं व्यतिरेकिसाध्यमिति विभागः, व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति तु तुच्छम्, येन विना प्रतीतिर्न पर्य्यवस्यति तस्यैव तत्र प्रकारत्वात् अन्यथा द्व्यणुकं कार्य्यानाश्रितं सत् कचिदाश्रितम् अवयवित्वादित्यादावकार्य्याश्रितत्वप्रकारिकाऽनुमिति र्न स्यात् ॥ ४ ॥

ननु सिद्यतु आत्मा स्थिरः, स तु नित्य इति कुतः, कुतश्च द्रव्यमित्यत आह ।

यथा वायुपरमाणोरवयवकल्पनायां न प्रमाणमतोऽनित्यत्वं तथात्मनोऽपि, यथा गुणवत्त्वाद्वायुपरमाणुर्द्रव्यं तथात्माऽपीत्यर्थः ॥ ५ ॥

पूर्व्वपक्षमाह ।

---

वि० घ्राणाद्यन्यद्रव्ये दृष्टे तद्रसस्मरणात् दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिद्यतीत्यर्थः सुखादीनां पश्चानामात्मलिङ्गत्वं ज्ञानवदेव बोध्यम् ॥ ४ ॥

सिद्धे इन्द्रियादिव्यतिरिक्ते आत्मनि तस्य नित्यद्रव्यत्वमतिदेशेन साधयति ।

यथा वायुपरमाणो र्निरवयवत्वात् गुणवत्त्वाच्च नित्यद्रव्यत्वं तथात्मनोऽपीत्यर्थः ॥ ५ ॥

पूर्व्वोक्तमात्मानुमानमाक्षिपति ।

सू० यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते ॥ ६ ॥

सामान्यतोदृष्टाच्चाविशेषः ॥ ७ ॥

---

उ० सन्निकर्षे सति अयं यज्ञदत्त इति चेत् प्रत्यक्षं नास्ति तदा दृष्टं प्रत्यक्षतो गृहीतव्याप्तिकं लिङ्गं नास्ति यथा वह्निना प्रत्यक्षेण सहचरितो गृहीतो धूमो वह्नौ दृष्टं लिङ्गं तथात्मसाधकं लिङ्गं दृष्टं नास्तीत्यर्थः ॥ ६ ॥

ननु प्रत्यक्षदृष्टव्याप्तिकस्य दृष्टलिङ्गस्याभावेऽपि सामान्यतोदृष्टमेव लिङ्गं भविष्यति नहि ततो नानुमितिरित्याशङ्क्य पुनः पूर्व्वपक्षी आह।

सामान्यतोदृष्टमपि लिङ्गं भवति नतु तत आत्मत्वेन

---

वि० यज्ञदत्तशरीरे चक्षुरादिसन्निकर्षे सत्यपि तदधिष्ठातुरात्मनश्चाक्षुषाद्यभावात् दृष्टं व्याप्यत्वेन प्रत्यक्षविषयीभूतं लिङ्गं नास्तीत्यतः कथमात्मानुमानं सुघटम, वह्न्यादौ सन्निकर्षे तत्प्रत्यक्षानन्तरं तद्व्याप्तिप्रत्यक्षाद्वह्न्याद्यनुमानन्तु निराबाधमेवेतिभावः ॥ ६ ॥

ननु द्रव्यत्वरूपेण द्रव्यान्तरस्य प्रत्यक्षाद्द्रव्याश्रितत्वव्याप्यत्वस्य गुणत्वादौ प्रत्यक्षसम्भवादात्मानुमानं न दुर्घटं सामान्यधर्म्मावच्छिन्नव्याप्यत्वज्ञानादपि इतरबाधादिस्थले विशेषधर्म्मप्रकारेणानुमितिसम्भवादित्यत आह।

सामान्यतोदृष्टात् सामान्यधर्म्मावच्छिन्नव्याप्यत्वग्रहात् अवि-

सू० तस्मादागमिकः ॥ ८ ॥

---

उ० अष्टद्रव्यातिरिक्तद्रव्यत्वेन वा स्यादात्मसिद्धिः किन्तु तेनेच्छादीनां कचिदाश्रितत्वमात्रं सिद्ध्येत् तच्च नात्ममननौपयिकमित्यर्थः तदेतदाह अविशेष इति ॥ ७ ॥

तत् किं योऽपहतपाप्मा स आत्मा इत्याद्यागमोऽनर्थक एवेत्याशङ्क्य स एवाह।

आगममात्रसिद्ध एवात्मा नत्वनुमेयः दृष्टसामान्यतोदृष्टयोर्लिङ्गयोरभावात् तस्मात् सम्यगुपनिषदां श्रवणात् तत्त्वसाक्षात्कार उत्पद्यते नतु मननप्रणालिकया, तथाच मननप्रयोजनकमिदं तन्त्रमतन्त्रम्, दृष्टं हि भूतदशकनदीसन्तरणादावुपदेशमात्रादेव साक्षात्कारिज्ञानम् ॥ ॥ ८ ॥

तदेवं त्रिभिः सूत्रैः पूर्व्वपक्षे सिद्धान्तवाद्याह।

---

वि० शेषः विशेषधर्म्मप्रकारेण नानुमितिः व्यापकतावच्छेदकप्रकारकस्यैवानुमितिविधेयतावच्छेदकत्वे तन्त्रत्वादित्यर्थः ॥ ७ ॥

पूर्व्वपक्षी उपसंहरति।

आगमिक इत्यस्य आत्मेत्यादि यतो गृहीतव्याप्तिकलिङ्गाभावादात्मनोऽनुमितिर्न सम्भवति अत आत्मा आगममात्रप्रमाणक इत्यर्थः। तथा चात्ममननार्थमेतच्छास्त्रं विफलमितिभावः ॥ ८ ॥

समाधत्ते।

सू॰ अहमितिशब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥

---

उ॰ आगममात्रं प्रमाणमात्मनि किन्त्वहमिति-पदमात्म-परं वा साभिधेयं पदत्वात् घटादिपदवत् इत्यनुमाना-दप्यात्मसिद्धिः। ननु पृथिव्याद्येव तदभिधेयं स्यादित्यत आह व्यतिरेकादिति पृथिव्यादितोऽहमिति पदस्य व्यति-रेकाद्व्यावृत्तेरित्यर्थः। नहि भवत्यहं पृथिवी अहमापः अहन्तेजः अहं वायुः अहमाकाशम् अहं कालः अहं दिक् अहं मन इति व्यपदेशः प्रत्ययो वा, शरीरे भवतीति चेन्न परशरीरेऽपि तत्प्रसङ्गात्, स्वशरीरे भवतीति चेन्न स्वस्यात्म-भिन्नस्यानिरुक्तेः मम शरीरमिति वैयधिकरण्येन प्रत्ययाच्च नन्विदमपि सामान्यतोदृष्टमेव तच्च विशेषापर्य्यवसन्नमिति दूषितमेवेति चेन्न अहम्पदेऽहन्त्वमात्मत्वमेव प्रकारः तथाच पक्षधर्म्मताबलादेवाऽहन्त्वस्य प्रवृत्तिनिमित्तत्वं पर्य्यवसन्नं तच्चानन्यसाधारणमेवेति विशेषसिद्धेः एवं सामान्यतोदृष्टा-दपि बाधसहकृतादिशेषसिद्धिः यच्चोक्तं श्रवणादेव साक्षा-त्कारः किमनेनेति तदयुक्तम् नहि मननमन्तरेण सङ्कशु-कस्याश्रद्धामलक्षालनम्, नच तदन्तरेण तत्र निदिध्या-

---

वि॰ आगमिकमिति आत्मवस्तु इतिशेषः आत्मरूपं वस्तु न आ-गमिकम् आगममात्रप्रमाणकम् अहमिति शब्दस्य व्यतिरेकात् पृथिव्यादिषु अष्टसु द्रव्येषु अप्रयोगात् तथाचाहमिति-पदं सप्र-वृत्तिनिमित्तकम् साधुपदत्वात् घटपदवदित्यनुमानादहम्पदे

उ० मनाधिकारः, नच निदिध्यासनमन्तरेण सवासनमिथ्याज्ञानोन्मूलनक्षमस्तत्त्वसाक्षात्कारः, अभ्यासादेव हि कामातुरस्याकस्मात् कामिनीसाक्षात्कारः; नहि शाब्दमानुमानिकं वा ज्ञानं मिथ्याज्ञानोन्मूलनक्षमं दिङ्मोहादौ दृष्टमितिभावः। ननु तथापि परोक्षे आत्मनि कथं सङ्केतग्रह इति चेत् क एवमाह नात्मा प्रत्यक्ष इति, किन्तु मनसा संयोगप्रत्यासत्त्यात्मग्रहः कथमन्यथाऽहं सुखी जानामीच्छामि यते दुःखीत्यादिप्रत्ययः नह्ययमवस्तुकः सन्दिग्धवस्तुको वा, नीलादिप्रत्ययवत् अस्यापि निश्चितवस्तुकत्वात्, नच लैङ्गिकः, लिङ्गज्ञानमन्तरेणापि जायमानत्वात्, नापि शाब्दः, तदनुसन्धानानानुविधानात्, प्रत्यक्षाभासोऽयमिति चेत्, तर्हि क्वचिदनाभासविषयोऽपि नह्यप्रमितमारोप्यते इत्यावेदयिष्यते ॥ ८ ॥

---

वि० आत्मत्वावच्छिन्नप्रत्यक्षत्वस्य सिद्धौ आत्मापि सिध्यतीत्यर्थः न चात्रापि सामान्यधर्म्मे व्यापकतावच्छेदकत्वग्रहादिशेषधर्म्मप्रकारेण कथमनुमितिरिति वाच्यम् इतरबाधादिस्थले व्यापकतावच्छेदकत्वेनाज्ञातस्यापि विशेषधर्म्मस्य विधेयतावच्छेदकत्वस्वीकारात् अन्यथा महानसीयवह्नीतरवह्न्यभाववान् पर्व्वत इत्यादीतरबाधसहकृतेन वह्निपरामर्शेन जनिताया अनुमितेः भ्रमत्वानुपपत्तेरिति संक्षेपः। इदमुपलक्षणं पूर्व्वोक्तानि ज्ञानादिलिङ्गकान्यनुमानान्यपि दर्शितरीत्यात्मनि प्रमाणानि वेदितव्यानि ॥ ८ ॥

सू॰ यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥
॥ १० ॥

दृष्टयात्मनि लिङ्गे एक एव दृढ़त्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥

---

उ॰ एवञ्चेत् किमनुमानेनेति पूर्व्वपक्षवादी आह।

इति शब्दो ज्ञानप्रकारमाह दृष्टमिति भावे-क्तप्रत्ययान्तम्, अन्वक्षमित्यध्यक्षं तेनायमर्थः अयं देवदत्तः अयं यज्ञदत्त इति प्रकारकं दृष्टं दर्शनं अध्यक्षमेवास्ति यदि किमनुमानप्रयासेन "नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः" ॥ १० ॥

अत्र सिद्धान्त्याह।

दृष्टे प्रत्यक्षेण गृहीते आत्मनि लिङ्गे सम्भूतसामग्रीके

---

वि॰ ननु मनःसंयोगरूपसन्निकर्षेण आत्मनो लौकिकमानसप्रत्यक्षमेवात्मनि प्रमाणमस्तीति प्रमाणान्तरग्वेषणं व्यर्थमित्याशङ्कते।

अन्वक्षं प्रत्यक्षं दृष्टं दर्शनं ज्ञानमिति यावत् भावे निष्ठाप्रत्ययात् तथाच अहं देवदत्तः अहं यज्ञदत्तः सुखी दुःखी वेत्याद्याकारकं प्रत्यक्षमेव ज्ञानं यदि वर्त्तते तदा भवतामनुमानप्रयासः किमर्थमिति समुदितार्थः, सिषाधयिषायां सिद्धिदशायां सिषाधयिषयाऽनुमितेः सम्भवेऽपि तस्या अनावश्यकत्वात् तत्रेच्छैव नोदेति तदुक्तं तात्पर्य्यटीकायां वाचस्पतिमिश्रैः "नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार" इति ॥ १० ॥

आशङ्कां निरस्यति।

दृष्टे मनसा गृहीते आत्मनि लिङ्गे अनुमाने सति प्रत्यक्षवत्

उ० सति एक एव एकवैषयिक एव प्रत्ययः, प्रत्यय इति निरस्तसमस्तविभ्रमाशङ्कित्वमाह, कुत एवमित्यत आह दृढत्वात् प्रमाणसंप्लवेनान्यथाभावशङ्कानिवर्त्तनपटुत्वात्, तत्र दृष्टान्तमाह प्रत्यक्षवदिति यथा दूरात्तोयप्रत्यक्षे सत्यपि संवादार्थं बलाकालिङ्गेनाऽपि तदनुमानं तदुक्तम् "प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः" इति, इदमत्राकूतम् यद्यात्मा कदाचित् प्रत्यक्षे चेतसि भासत एव तथापि अहं गौरः अहं कृश इत्यादिविरोधिप्रत्ययान्तरतिरस्कृतो न तथा स्थेमानमासादयति विद्युत्सम्पातसञ्जातज्ञानवत्, तत्र लिङ्गेन अनन्यथासिद्धेन ज्ञानान्तरमुत्पद्यमानं पूर्व्वज्ञानमेव स्थिरीकरोति। किञ्च "श्रोतव्यो मन्तव्य" इत्यादिविधिबोधितस्यात्ममननस्य इष्टसाधनत्वावगतौ अनुमित्सयाऽवश्यमात्मन्यनुमानप्रवृत्तिः तद्व्यतिरेके निदिध्यासनासम्भवे

---

वि० प्रत्यक्षसमानकारक एक एव मुख्य एव प्रत्ययः भवतीतिशेषः मुख्यत्वं कुतः दृढत्वात् अप्रामाण्यशङ्कानिवर्त्तनक्षमत्वात् मुख्यत्वञ्च गृहीतप्रामाण्यकत्वम्, यथा दूरस्थे सरोवरादिसलिले दृष्टेऽपि मरीचिकादिसन्देहात्तादृशप्रत्यक्षेऽप्रामाण्यशङ्का उदेति, ततो बलाकादिलिङ्गेन तदनुमाने सति सम्वादेन तत्र प्रामाण्यग्रहात्तादृशशङ्का निवर्त्तते, तथात्मनि दृष्टेऽपि विपरीतसम्भावनादिना तज्ज्ञानेऽप्रामाण्यशङ्का सञ्जायते ततोऽनुमानेनात्मनि गृहीते सम्वादेन तत्र प्रामाण्यग्रहादप्रामाण्यशङ्कानिवर्त्तनक्षमत्वरूपं दृढत्वं तादृशग्रहस्य सुघटमेव तदुक्तं मिश्रैः "प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः" इति ॥ ११ ॥

सू० देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारा-
च्छरीरे प्रत्ययः ॥ १२ ॥

---

उ० साक्षात्काराभावेऽपवर्गासम्भवादिति भावः। अहं देवद-
त्तोऽहं यज्ञदत्त इति प्रतीतिद्वयाभिधानमात्मनः प्रत्या-
त्मवेदनीयत्वं सूचयितुम् ॥ ११ ॥

ननु यदि यज्ञदत्तोऽहमिति प्रत्यय आत्मनि तदा
यज्ञदत्तो गच्छतीति गमनसामानाधिकरण्यभानमनुपपन्न-
मित्यत आह।

अस्ति हि अहं गौरः अहं स्थूल इति प्रत्ययः अस्ति च
मम शरीरमिति भेदप्रत्ययः तत्र देवदत्तो गच्छतीति गति-
सामानाधिकरण्यानुभवो व्यवहारश्च भाक्तः, ममेति प्रत्य-
यस्य यथार्थत्वात् यद्यपि देवदत्तत्वं शरीरवृत्तिर्जातिस्तेन
देवदत्तो गच्छतीति मुख्य एव प्रयोगो यथार्थ एव च प्रत्य-

---

वि० नन्वहं यज्ञदत्त इत्यादिप्रत्ययश्चेद्यद्यात्मविषयकं तदा यज्ञ-
दत्तो गच्छतीति प्रत्ययः कथं स्यादात्मनि गतिमत्त्वस्याभावादित्यत
आह।

देवदत्तो गच्छतीति वाक्यजन्यप्रत्ययः देवदत्तादिपदस्य शरीरे
लक्षणाया सम्भवति देवदत्तो जानाति इच्छति करोति द्वेष्टीत्यादि
प्रयोगाणां मुख्यतया देवदत्तादिपदस्य विजातीयशरीरावच्छि-
न्नात्मनि शक्तेरावश्यकत्वात्तदर्थे भूरिप्रयोगसत्त्वेन गौरवस्याऽ-
किञ्चित्करत्वात् गच्छतीत्यत्राख्यातस्य यत्नार्थकत्वे तादृशप्रयोगस्य
मुख्यत्वमपि सम्भवतीत्यपि द्रष्टव्यम् ॥ १२ ॥

सू० सन्दिग्धस्तूपचारः ॥ १३ ॥

अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥ १४ ॥

---

उ० यः तथापि देवदत्तपदं तदवच्छिन्नात्मनि प्रयुक्तश्चेत् तदौपचारिको बोद्धव्यः ॥ १२ ॥

अत्र प्रकृते।

तुशब्दः पूर्व्वपक्षद्योतकः। आत्मशरीरयोस्तावदहमिति प्रत्ययः प्रयोगश्च दृश्यते तत्र क मुख्यः क वौपचारिक इति सन्देहः ॥ १३ ॥

समाधत्ते।

अर्थान्तरमात्मस्वरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययोऽर्थान्तरप्रत्यक्षः अयमर्थः अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मनि अभावात् अर्थान्तरे स्वात्मन्येव मुख्यः कल्पयितुमुचितः यदि तु शरीरे

---

वि० ननु देवदत्तो जानातीति प्रयोगस्यौपचारिकत्वं देवदत्तो गच्छतीत्यस्य वेत्यत्र किं विनिगमकमित्याशङ्कते।

उपचारः सन्दिग्धः देवदत्तादिपदस्यात्मनि शरीरे वौपचारिकत्वमिति सन्देहः तुशब्द आशङ्काद्योतकः ॥ १३ ॥

समाधत्ते।

अहमितीति अहं यज्ञदत्तः सुखीत्यादिव्यवहारः अर्थान्तरप्रत्यक्षः अर्थान्तरस्य शरीरादिभिन्नस्य प्रत्यक्षं ज्ञानं यस्मात् शरीरादिभिन्नविषयकशाब्दबोधजनक इति पर्य्यवसितार्थः यथाच

उ॰ मुख्यः स्यात् तदा वहिरिन्द्रियजः स्यात् नहि शरीरं मानसप्रत्यक्षं मानसश्चायमहमिति प्रत्ययः वहिरिन्द्रियव्यापारमन्तरेणापि जायमानत्वात् अहं दुःखी अहं सुखी जाने यते इच्छाम्यहमिति योग्यविशेषगुणोपहितस्यात्मनो मनसा विषयीकरणात्, नायं लैङ्गिको लिङ्गानुसन्धानमन्तरेणापि जायमानत्वात्, न शाब्दः शब्दाकलनमन्तरेणापि जायमानत्वात्, तस्मान्मानस एव मनसश्च वहिरस्वातन्त्र्येण शरीरादावप्रवृत्तेरितिभावः। किञ्च यदि शरीरे स्यात् परशरीरे स्यात्, स्वात्मनि यदि स्यात् तदापि परात्मनि स्यादिति चेन्न परात्मनः परस्यातीन्द्रियत्वात् तद्विशेषगुणानामयोग्यत्वात् योग्यविशेषगुणोपग्रहेण तस्य योग्यत्वात्, न केवलमात्मन इदं शीलं किन्तु द्रव्यमात्रस्य, द्रव्यं हि योग्यविशेषगुणोपग्रहेणैव प्रत्यक्षं भवति, आकाशमपि तर्हि शब्दोपग्रहेण प्रत्यक्षं स्यादिचेत् स्यादेवं यदि श्रोत्रं द्रव्यग्राहकं भवेत्, आकाशं वा रूपवत् स्यात्, आत्मनोऽपि नोरूपत्वं तुल्यमिति चेत् वहिर्द्रव्यमात्र एव

---

वि॰ शरीरादिभिन्न एवात्मनि तादृशप्रयोगो मुख्यः शरीरे त्वौपचारिकः, कुत एवमत आह प्रत्यगात्मनि स्वात्मनि भावात् अर्थात् सुखादेः सत्त्वात् परत्र शरीरेऽभावात् सुखादेरसत्त्वात् तथाच भूरिप्रयोगस्यात्मन्येव सत्त्वात्तत्रैव तादृशप्रयोगस्य मुख्यत्वं शरीरादावौपचारिकत्वमिति न सन्देहगन्धोऽपीति, न चाहं सुखीत्यादौ अवच्छेदकतासम्बन्धेन सुखादे वैशिष्ट्यं शरीरे भासत इति

सू० देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ १५ ॥

---

उ० प्रत्यक्षतां प्रति रूपवत्त्वस्य तन्त्रत्वात्, प्रत्यगित्ययं शब्दोऽन्यथावृत्तमाह ।

पुनः शङ्कते ।

अहङ्कारोऽहमिति प्रत्ययः स च शरीरप्रत्यक्षः शरीरं प्रत्यक्षं विषयो यत्र स शरीरप्रत्यक्षः । देवदत्तो गच्छतीत्युपचारात्तावत् प्रयोगः प्रत्ययो वा त्वया समाहितः सचोपचार आभिमानिकः यतोऽहं गौरः अहं कृशः सौभागिनोऽहं पुनरुक्तजन्मेत्यादयः प्रत्ययाः प्रयोगाश्चोपचारेण समन्वयितुमशक्या इत्यर्थः ॥ १५ ॥

---

वि० वाच्यम्, करोऽहं सुखीत्यादेरपि प्रामाण्यापत्तेः करादेरप्यवच्छेदकतासम्बन्धेन सुखादिमत्त्वात् अहमित्यस्मच्छब्दस्यात्मन्येव शक्ततया शरीरादौ तदभेदस्यासम्भवाच्च ॥ १४ ॥

पुनराक्षिपति ।

अहङ्कारः अहमितिप्रयोगः शरीरप्रत्यक्षः शरीरस्य प्रत्यक्षं प्रतिपत्तिर्यस्मात् सः शरीरप्रतिपादक इति यावत्, तथाच यज्ञदत्तोऽहमिति सामानाधिकरण्यानुभवात् यज्ञदत्तादिपदमपि शरीरप्रतिपादकमेव तावदिति हेतौ तस्मात् यज्ञदत्तो गच्छतीत्युपचारादिति यदुक्तं तदभिमानात् न तु तद्वास्तवं भवितुमर्हति अहं गौरः अहं स्थूल इत्यादिभूरिप्रयोगानां शरीरपरताया आवश्यकतया अस्मच्छब्दस्य तत्समानाधिकरणयज्ञदत्तादिशब्दस्य च शरीरे शक्तत्वादिति पर्य्यवसितार्थः ॥ १५ ॥

सू॰ सन्दिग्धस्तूपचारः॥ १६ ॥

---

उ॰ सिद्धान्तमाह।

तुशब्दोऽयं सिद्धान्तमभिव्यनक्ति उपचारोऽयमाभिमानिकः किन्तु शरीर एवायमहम्प्रत्यय इति यदुक्तं तत्रापि सन्देह एवेत्यर्थः तथाच प्रत्ययस्योभयचापि कूटसाक्षित्वेन विशेषावधारणाय यतितव्यं तत्र यत्ने क्रियमाणे निमीलिताक्षस्याप्यहमिति-प्रत्ययदर्शनात् शरीरभिन्ने बहिरिन्द्रियागोचरे वस्तुनि स मन्तव्यः, शरीरे भवन् परशरीरेऽपि स्यात् चक्षुर्नैरपेक्ष्येण च न स्यात्, अहं कृशः स्थूलो वा सुखीति कथं सामानाधिकरण्यमिति चेन्न सुखाद्यवच्छेदकत्वेनापि तत्र शरीरभागसम्भवात् सिंहनादवदिदं गहनमितिवत्, अहन्त्वमात्रं शरीरे समारोप्यते मनसोपस्थितम्, त्वगिन्द्रियोपनीतमौष्ण्यम् उष्णं जलम् उष्णं शरीरमितिवत्॥ १६ ॥

---

वि॰ आशङ्कां निरसितुमाह।

उपचारः सन्दिग्धः, किं यज्ञदत्तो गच्छतीत्यत्रोपचारः उत यज्ञदत्तोऽहं सुखीत्यत्र, शरीरे आत्मनि च भूरिप्रयोगस्याविशिष्टत्वेनैकस्मिन्नस्य कर्तुमशक्यत्वादित्यर्थः, तुशब्दः सिद्धान्तद्योतनार्थः॥ १६॥

ननु सन्देह एव किं भवतां सिद्धान्तः, किच यज्ञदत्तो गच्छतीत्यत्रोपचारो भवद्भिः पूर्व्वमभिहितस्तत्र प्रतिज्ञाहानिरुदवस्थेवेत्यत आह।

सू० ननु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयो र्ज्ञानं विषयः ॥ १७ ॥

---

उ० सिद्धान्तमुपक्रमयन्नाह।

ज्ञानमिति योग्यं सुखदुःखादिकमात्मगुणमुपलक्षयति, यथा यज्ञदत्तविष्णुमित्रयोः शरीरं परस्परभिन्नं तथा ज्ञानसुखादिकमपि भिन्नमेव तथाच यथा यज्ञदत्तस्येदं शरीरं तथा यज्ञदत्तस्य ज्ञाने सुखादौ वाऽनुत्पन्ने अहं सुखी जाने यते इच्छामीति ज्ञानादिकं विषयो भवति योग्यशरीरविषयकत्वेन तदीयरूपादिवत्तदीयज्ञानादीनामपि प्रत्यक्षत्वसम्भवात् न च सम्भवति, तस्मात् ज्ञानसुखादीनां शरीरादन्य एवाश्रयो वक्तव्य इतिभावः। शरीरविशेषात् शरीरस्य भेदादित्यर्थः तथाच शरीरभेदं प्राप्य ज्ञानं नतु विषय इति ल्यब्लोपे पञ्चमी ॥ १७ ॥

---

वि० ननु नहि शरीरविशेषात् शरीरविशेषविषयकत्वात् यज्ञदत्तविष्णुमित्रयोर्ज्ञानमपि विषयो भवति शरीरसाक्षात्कारे इत्यर्थः। ज्ञानपदं योग्यात्मविशेषगुणसामान्यपरम्, तथाच यथाऽस्माकमात्मसाक्षात्कारे ज्ञानादिकं विषयो भवति अहं जानामि इच्छामि यते सुखी दुःखी द्वेष्मीत्याद्यनुभवस्य सर्व्वसिद्धत्वात् तथा शरीरचाक्षुषादावपि ज्ञानादेर्भानं स्यात् यदि शरीरमहम्पदवाच्यं ज्ञानादिगुणकञ्च स्यात्, नहि स्थूलो यज्ञदत्तोऽहं जानामीति चाक्षुषप्रत्यक्षं कस्यचिद्भवति, तस्माच्छरीरेऽहमादिव्यवहार औपचारिक एवेति नास्माकं प्रतिज्ञाहानिरितिभावः ॥ १७ ॥

सू० अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः॥ १८॥

---

उ० नन्वात्मा न प्रत्यक्षः नीरूपद्रव्यत्वात् निरवयवद्रव्यत्वाद्वा आकाशवत्, तथाचाहं कृशो गौर इति बुद्धेः शरीरमेव विषयो वाच्यः, क्वचिदहं सुखीत्यादिधीरपि यद्यप्यस्ति, तथाप्याश्रयमन्तरेण भासमानानां सुखादीनां शरीरे समारोप इत्येव कल्पयितुमुचितम्, यथोष्णं सुरभिजलम् इत्याश्रयमन्तरेण प्रतीयमानयोरौष्ण्यसौरभयोर्जले समारोपः, नत्वेतदनुरोधेन जलप्रत्ययस्यापि प्रसिद्धजलमन्तरेणान्यविषयत्वम्, तथाऽहमित्यप्यहन्त्वं शरीर एव वास्तवम्, सुखादिकन्तु कदाचित्तत्रारोप्यते तेनात्मनि प्रत्यक्षाकारं ज्ञानं नास्त्येव सुखाद्याधारत्वेन यत्कल्पनीयं तदागमसिद्धं भवतु न तत्रापि ग्रह इत्यत आह।

अयमर्थः अहं सुखी अहं दुःखीति प्रत्ययो नागमिको न शाब्दो नापि लैङ्गिकः शब्दलिङ्गयोरनुसन्धानमन्तरे-

---

वि० वेदान्तिनस्तु नित्यविज्ञानमेवात्मा "अविनाशी वाऽरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म" इतिश्रुतेः स च वस्तुगत्या एकोऽपि मायाकार्य्याणां अन्तःकरणरूपोपाधीनां भेदान्नानेव प्रतिभाति "एकमेवाद्वितीयम्" इति "एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव" इत्यादिश्रुतेरित्याहुस्तन्मतं दूषयति।

अहमितीति प्रत्ययविषय इति शेषः, तथाचाहं सुखीत्यादिलौकिकमानसप्रत्यक्षविषयः न त्वागमिकः "सत्यं ज्ञानमनन्तं ब्रह्म"

उ॰ णापि जायमानत्वात् प्रत्यक्षत्वे च नीरूपत्वं निरवयवत्वञ्च यद्वाधकमुक्तं तद्वहिरिन्द्रियप्रत्यक्षतायां भवति तत्र हि रूपवत्त्वानेकद्रव्यवत्त्वयोः प्रयोजकत्वात्, मानसप्रत्यक्षता च तदन्तरेणापि। ननु स्यादेवं यद्यात्मनि प्रमाणं स्यात् तदेव तु नास्तीत्यत आह शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेरिति यथा क्षित्यादिषु द्रव्येषु शब्दस्य व्यतिरेकोऽव्यभिचारी नियतस्तेन तदाश्रयस्याष्टद्रव्यातिरिक्तस्याकाशरूपस्य विशेषस्य सिद्धिः एवमिच्छायाः पृथिव्यादिषु व्यतिरेकस्याव्यभिचारात् तदाश्रयेणापि अष्टद्रव्यातिरिक्तेन भवितव्यम्। नन्वेतावताऽप्यानुमानिक एव आत्मा नतु प्रत्यक्ष इत्यत आह अहमिति मुख्ययोग्याभ्यामिति अहमितीतिकारेण ज्ञानाकारमाह तेनाहमिति ज्ञानं शब्दलिङ्गा-

---

वि॰ इत्याद्यागमप्रतिपाद्येश्वराभिन्नः अत्र हेतुमाह मुख्ययोग्याभ्यामित्यादि, मुख्यं सत् यद् योग्यं सुखं दुःखञ्च ताभ्यां विशेषसिद्धेरीश्वरभेदसिद्धेः, इष्टेषु सुखस्य मुख्यत्वम् अन्येच्छानधीनेच्छाविषयत्वात्, दुःखस्य तु द्विष्टेषु मुख्यत्वम् अन्यद्वेषानधीनद्वेषविषयत्वात्, योग्यत्वञ्च प्रत्यक्षविषयत्वम् एतत्कथनञ्च हेतुसिद्धिशङ्कानिरासार्थम् ईश्वरे नित्यसुखाङ्गीकारपक्षे व्यभिचारवारणार्थञ्च नित्यसुखस्यायोग्यत्वात् तथाच अन्यं सुखं दुःखञ्च जीवस्येश्वरभेदसाधकम्। उपलक्षणञ्चैतत् नन्या ज्ञानेच्छायत्ना द्वेषश्च ईश्वरभेदसाधका द्रष्टव्याः। ननु अहमिति प्रत्यक्षविषय आत्मा ईश्वरभिन्नः जन्यसुखवत्त्वादित्यादौ दृष्टान्ताभावेन अन्वयसहचाराग्रहात् व्याप्तिज्ञानं दुर्घटमत उक्तं व्यतिरेकाव्यभिचारा-

उ० सुखज्ञानमन्तरेण निमीलिताक्षस्य यदुत्पद्यते तत्सुखेन अहन्त्ववता योग्येन प्रमाणसिद्धेन उपपादनीयम्, नतु शरीरादिना, तत्रेच्छाया व्यतिरेकाव्यभिचारात् सुखयोग्याभ्यामित्यनन्तरम् उपपादनीयमिति पूरणीयम् आत्मनि प्रमाणानि बहूनि ग्रन्थगौरवभिया त्यक्तानि मयूखेऽन्वेष्टव्यानि ॥ १८ ॥

आत्मपरीक्षाप्रकरणं समाप्य इदानीमात्मनानात्वप्रकरणमारभते तत्र पूर्व्वपक्षसूत्रम् ।

---

वि० दिति व्यतिरेकव्याप्तेरित्यर्थः, प्रयोज्यत्वं पञ्चम्यर्थस्तस्य च विशेषसिद्धावन्वयः तथाचान्वयदृष्टान्ताभावेऽपि व्यतिरेकेण ईश्वरस्य दृष्टान्तत्वसम्भवेन व्यतिरेकसहचारग्रहाधीनव्यतिरेकव्याप्तिग्रहादेवोक्तस्थलेऽनुमितिः सम्भवतीतिभावः, ननु व्यतिरेकव्याप्त्येश्वरभेदसाधकत्वं न दृष्टचरमित्याशङ्कानिरासायोक्तं शब्दवदिति शब्दादिवेत्यर्थः आकाशस्य यथा शब्दरूपाद्धेतो र्व्यतिरेकव्याप्तिप्रकारेण चायमानादीश्वरभेदसिद्धिस्तथात्मनो जन्यसुखादिमत्त्वात् तत्सिद्धिरित्यर्थः ॥ १८ ॥

ननु "एकमेवाद्वितीयम्" "तत्त्वमसि श्वेतकेतो" इत्यादि श्रुतिबलात् जीवेश्वरयोरभेदोऽवश्यं स्वीकार्य्यः, नचोक्तानुमानाद्भेदसिद्धिरिति वाच्यं सुखदुःखादीनामन्तःकरणधर्म्मत्वेन स्वरूपासिद्धत्वात् तथाच श्रुतिः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृति र्ह्रीर्धीर्भीरेतत् सर्व्वं मन एव" इति, अत्र कामशब्दस्य सुखपरत्वात् धीशब्दस्य वृत्तिरूपज्ञानपरत्वाच, दुःखस्यापि सुखसामानाधिकरण्येन प्रतीतेरात्मधर्म्मत्वाभावादित्याशङ्कते ।

सू० सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्॥१९॥
व्यवस्थातो नाना॥२०॥

उ० एक एव आत्मा चैत्रमैत्रादिदेहभेदेऽपि, कुतः सुखदुःखज्ञानानां निष्पत्तेरुत्पत्तेरविशेषात् सर्व्वशरीरावच्छेदेन सुखदुःखज्ञानानामुत्पत्तिरविशिष्टैव यतः। यद्यात्मभेदसाधकं लिङ्गान्तरं भवेत्तदा सिद्ध्येदात्मभेदः, नच तदस्ति, यथा तत्तत्प्रदेशावच्छेदेन शब्दनिष्पत्तावपि शब्दलिङ्गाविशेषादेकमेवाकाशम् यौगपद्यादिप्रत्ययलिङ्गाविशेषादेक एवं कालः पूर्व्वापरादिप्रत्ययलिङ्गाविशेषादेकैव दिक्॥ ॥१९॥

सिद्धान्तमाह।

नाना आत्मानः कुतः व्यवस्थातः व्यवस्था प्रतिनियमः यथा कश्चिदाढ्यः, कश्चित् रङ्कः, कश्चित् सुखी, कश्चिद्दुःखी, कश्चिदुच्चाभिजनः, कश्चिन्नीचाभिजनः, कश्चिद्विद्वान्, क-

वि० सुखदुःखज्ञानानां निष्पत्त्या निश्चयेन अविशेषात् जीवात्मनः ईश्वरभिन्नत्वासिद्धेः उक्तश्रुत्या मनस्येव तेषां सिद्धत्वेन आत्मन्यसिद्धत्वादितिभावः॥१९॥

आशङ्कां निरस्यति।

नाना नात्यैक्यं जीवात्मा न ईश्वराभिन्न इति यावत्, कुतः व्यवस्थातः व्यवस्था निश्चयः तस्याः सुखदुःखज्ञानानामात्मनीतिशेषः नहि सुखादयो मनसो धर्म्मा तस्य महत्त्वाभावेन सुखादीनाम-

सू॰ शास्त्रसामर्थ्याच्च ॥ २१ ॥

---

उ॰ स्थित् जात्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपद्यमाना साधयत्यात्मनां भेदम्, नच जन्मभेदेन बाल्यकौमारवार्द्धक्यभेदेन वा, एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यं कालभेदेन विरुद्धधर्माध्यासस्भवात् ॥ २० ॥

प्रमाणान्तरमाह।

शास्त्रं श्रुतिः तयाऽप्यात्मनो भेदप्रतिपादनात् श्रूयते हि "द्वे ब्रह्मणी वेदितव्ये" इत्यादि तथा "द्वा सुपर्णा सयुजा

---

वि॰ प्रत्यक्षत्वापत्तेः ज्ञानायौगपद्यनियामकतया मनसोऽणुत्वस्यावश्यमङ्गीकार्य्यत्वात् "कामः सङ्कल्पः" इत्यादिश्रुतिस्तु "आयुर्घृतम्" इत्यादिवत् मनसः कामादिजनकत्वमवगमयति नतु तदाधारत्वं तदभेदं वेति ॥ २० ॥

इतोऽपि जीवस्येश्वरभिन्नत्वमित्याह।

शास्त्रस्य श्रुतेः सामर्थ्यात् जीवेश्वरयोर्भेदबोधकत्वात् तथाहि "द्वे ब्रह्मणी वेदितव्ये" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति" इत्यादिश्रुतेः जीवेश्वरयोर्भेदोऽवश्यमङ्गीकार्य्यः। नच "तत्त्वमसि श्वेतकेतो" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिश्रुतीनां का गतिरिति वाच्यम् "तत्त्वमसि" इति श्रुतेस्तदभेदेन तदीयत्वप्रतिपादनेनाभेदभावनापरत्वात् "ब्रह्मविद् ब्रह्मैव" इति श्रुतिश्च

उ० सखाया समानं वृक्षं परिषस्वजाते" इत्यादि च॥२१॥

इति श्रीशाङ्करे कणादसूत्रोपस्कारे तृतीयाध्यायस्य द्वितीयाह्निकम्॥ * ॥

समाप्तश्चायं तृतीयाध्यायः॥०॥

---

वि० निर्दुःखत्वादिनेश्वरसाम्यं जीवस्याभिधत्ते नतु तदभेदम् "निरञ्जनः परमं साम्यमुपैति" इतिश्रुतेर्गत्यन्तरासम्भवात् अस्ति हि लौकिकवाक्येषु सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इत्यादिषु सादृश्यपरेषु अभेदोपचारः। नच मोक्षदशायामज्ञाननिवृत्तौ अभेदो जायते इति वाच्यं भेदस्य नित्यत्वेन नाशायोगात् भेदनाशाङ्गीकारेऽपि व्यक्तिद्वयावस्थानस्यावश्यकत्वाच्चेति संक्षेपः भेदसाधकानि युक्त्यन्तराणि श्रुत्यन्तराणि च ग्रन्थगौरवभिया परित्यक्तानि। २१।

इति श्रीजयनारायण-तर्कपञ्चानन-कृतायां कणादसूत्रविवृतौ तृतीयाध्यायस्य द्वितीयमाह्निकम्॥ * ॥

समाप्तश्चायं तृतीयाध्यायः॥०॥



सू॰ सदकारणवन्नित्यम्॥ १॥

---

उ॰ पृथिव्यादीनां नवानामुद्देशं लक्षणं परीक्षां निर्व्वर्त्त्य प्रकृतेर्मूलकारणतां साङ्ख्याभिमतां निराचिकीर्षुः परमाणूनां मूलकारणत्वं पृथिव्याद्यन्तर्भावञ्च सिषाधयिषु र्नित्यत्वसामान्यलक्षणं तावदाह।

न कारणवदकारणवत् पदसंस्कारात् तदेवं घटादीनां व्यवच्छेदः। तथापि प्रागभावेऽतिव्याप्तिरित्यत आह सदिति सत्तायोगीत्यर्थः। समवायविशेषपदार्थयोः सत्तैकार्थसमवाय एव सत्तायोगः सामान्यान्तरस्य सत्तायाश्च सत्प्रत्ययविषयतैव सत्तायोगः स च प्रत्ययो वस्तुस्वरूप-

---

वि॰ "यः शङ्करोऽपि प्रलयं करोति स्थाणुस्तथा यः परपूरुषोऽपि।
उमागृहीतोऽप्यनुमागृहीतः पायादपायात् सहि नः स्वयम्भुः॥
असतः सज्जायते इति केचिद्वदन्ति तेषामयमभिप्रायः, वीजादिर्नाङ्कुरादिकार्य्यजनकः तथा सति कुसूलस्थवीजादेरप्यङ्कुराद्यापत्तेः किन्तु क्षेत्रादौ स्थितस्य वीजस्यावयवविभागेन प्रध्वंसानन्तरमेवाङ्कुरोत्पादात् वीजादिप्रध्वंस एवाङ्कुरादेः कारणमिति तथाच गौतमीयं पर्व्वपक्षसूत्रम् "अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" इति तदेतन्मतं निराकुर्व्वन्नेव परमाण्वादिक्रमेणारम्भवादं द्रढयति।

सत् भावरूपं किञ्चित्, अकारणवत् अजन्यं, नित्यं विनाशाप्रतियोगि वस्तु, अवयविनां मूलकारणं नासत् इत्यर्थः प्रध्वंसस्य कारणत्वे चूर्णीकृतादपि वीजादङ्कुरापत्तेरितिभावः॥ १॥

सू० तस्य कार्य्यं लिङ्गम्॥ २॥

उ० मात्रनिबन्धन इत्यन्यदेतत् नचान्यत्रापि तथैवास्तु किं सत्तयेति वाच्यम् अननुगतमतेस्तत्सिद्धेरकत्वात्॥ १॥

नित्यसामान्यमभिधायेदानीं परमाणुमधिकृत्याह।

तस्य परमाणोः, कार्य्यं घटादि, लिङ्गम्, तथाच गौतमीयं सूत्रम् "व्यक्तात् व्यक्तस्य निष्पत्तिः प्रत्यक्षप्रामाण्यात्" इति, अवयवावयविप्रसङ्गस्तावदनुभूयते स यदि निरवधिः स्यात् तदा मेरुसर्षपयोः परिमाणभेदो न स्यात् अनन्तावयवारब्धत्वाविशेषात् न च परिमाणप्रचयविशेषाधीनो विशेषः स्यादिति वाच्यं सङ्ख्याविशेषाभावात्तयोरप्यनुपपत्तेः, प्रलयावधिः स्यादिति चेत् अन्त्यस्य कस्यचिन्निरवयवत्वे प्रलयस्यैवानुपपत्तेः अवयवविभागविनाशयोरेव द्रव्यनाशकत्वात्, विभागस्य नावधिः तस्यैकाश्रयत्वानुपपत्तेः तस्मान्निरवयवं द्रव्यमवधिः स एव परमाणुः। न च त्रसरेणुरेवावधिः, तस्य चाक्षुषद्रव्यत्वेन महत्त्वादनेकद्रव्यवत्त्वाच्च, महत्त्वस्य चाक्षुषप्रत्यक्षत्वे कारणत्वम् अनेक-

---

वि० ननु तादृशे मूलकारणे किं मानमत आह।

तस्य मूलकारणस्य, कार्य्यं त्रसरेण्वादिकार्य्यद्रव्यम्, लिङ्गम् अनुमापकम्, तथाहि अवयवावयविधारायाः अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः अनन्तावयवारब्धत्वाविशेषात् अतः क्वचिद्विश्रामो वाच्यः नच त्रसरेणौ विश्रामः; त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धेः, नापि

सू० कारणभावात् कार्य्यभावः ॥ ३ ॥

उ० द्रव्यवत्त्वमादायैव, अन्यथा महत्त्वमेव न स्यात् कस्य कारणत्वम्भवेत्, न च त्रसरेणोरवयवा एव परमाणवः, महद्द्रव्यारम्भकत्वेन तेषामपि सावयवत्वानुमानात् तन्तुवत् कपालवच्च तस्मात् यत् कार्य्यद्रव्यं तत् सावयवम्, यच्च सावयवं तत् कार्य्यं द्रव्यम्, तथाच यतोऽवयवात् कार्य्यत्वं निवर्त्तते तत्र सावयवत्वमपीति निरवयवपरमाणुसिद्धिः तदुक्तं प्रशस्तदेवाचार्य्यैः "सा च द्विविधा नित्या चानित्या च" इति ॥ २ ॥

इदानीं परमाणौ रूपादिसिद्धये प्रमाणमाह।

रूपादीनां कारणे सद्भावात् कार्य्ये सद्भावः कारणगुणपूर्व्वका हि कार्य्यगुणा भवन्ति घटपटादौ तथा दर्शनादित्यर्थः ॥ ३ ॥

---

वि० द्व्यणुक एव विश्रामः, त्रसरेणोरवयवाः सावयवा महदवयवत्वात् कपालवदित्यनुमानेन द्व्यणुकावयवस्य परमाणुरूपस्य मूलकारणस्य सिद्धेः, नचैवं क्रमेण तदवयवधाराऽपि सिद्ध्येत्, अनवस्थाभयेनानुकूलतर्काभावेन च तत्कल्पनाया असम्भवात्, ममतु अनेकद्रव्यवत्त्वप्रयोज्यं त्रसरेणोर्व्वैन्यमहत्त्वमेवानुकूलतर्कसम्पादकमिति संक्षेपः ॥ २ ॥

अभावस्य मूलकारणत्वे बाधकमाह।

कारणस्य मूलकारणस्य भावात् कार्य्याणाम् अवयविनां भावः सत्ता, अन्यथा मृदुपादानकस्य मृण्मयत्ववत् असदुपादानकत्वेन कार्य्याणामवयविनामसत्त्वप्रसङ्गादित्यर्थः ॥ ३ ॥

सू० अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥

---

उ० इदानीं सर्व्वानित्यतावादिनिराकरणायाह।

विशेषत इति षष्ठ्यन्तात्तसिः विशेषस्य नित्यस्य प्रतिषेधस्तदा स्यात् यद्यनित्य इति प्रत्ययः शब्दप्रयोगश्च न स्यात् नञ उत्तरपदार्थनिषेधार्थत्वात् तत् कथं नित्याभावेऽनित्य इति स्यात् भवति च ततो नित्यमस्तीति सिद्धम्, यद्वा अनित्य इति न नित्यः परमाणुरित्यनेन प्रकारेण नित्यस्य त्वया प्रतिषेधः कर्त्तव्यः अनेन च प्रकारेण प्रतिषेधो न सिद्ध्यति सिद्ध्यसिद्धिप्रतिहतत्वात् सूत्रञ्चैवं योजनीयम् अकारः स्वतन्त्र एव प्रतिषेधवचनः "अमानोनाः प्रतिषेधवचनाः" इति तथाचानित्य इति न नित्य इत्यर्थः प्रतिषेधभावः प्रतिषेधस्वरूपं तेन न नित्य इति विशेषस्य नित्यस्य प्रतिषेधस्वरूपम्, तच्च न सम्भवतीतिशेषः ॥ ४ ॥

ननु परमाणुर्न नित्यः मूर्त्तत्वात् घटवत् एवं रूपवत्त्वरसवत्त्वादयः प्रत्येकं हेतव उन्नेयाः एवं षट्केन युगपद्-

---

वि० सर्व्वमेवानित्यं नहि किञ्चिदपि नित्यमिति मतं निरस्यति।

अ इति नञ्समानार्थकमव्ययम्, तथाच न नित्य इति प्रतिषेधस्य भावो भवनं विशेषतः वस्तुविशेषमाश्रित्य तथाचावयवी न नित्य इति प्रतिषेधो भवति नतु सर्व्वः पदार्थो न नित्य इति सामान्यतः प्रतिषेधः सम्भवति, प्रतियोगिनो नित्यस्य सिद्ध्यसिद्धिभ्यां पराहतत्वादिति समुदितार्थः ॥ ४ ॥

सू० अविद्या ॥ ५ ॥

उ० योगात् परमाणोः षडंशता तथाच सावयवत्वात् अव्याप्यवृत्तिसंयोगाश्रयत्वात्। किञ्च परमाणोर्मध्ये यद्याकाशमस्ति तदा सच्छिद्रत्वेनैव सावयवत्वम्, अथ नास्ति, तदाकाशस्यासर्व्वगतत्वप्रसङ्गः। किञ्च छायावत्त्वात् आवृत्तिमत्त्वात्। अपिच यत् सत् तत् क्षणिकमित्यादिक्षणिकत्वसाधकानुमानादपि परमाणोरनित्यता, तथा चैतावती चेदनुमितिपरम्परा तदा कथमुच्यते परमाणु र्नित्य इत्यत आह।

परमाणोरनित्यत्वविषया सर्व्वाप्यनुमितिः अविद्या भ्रमरूपा आभासप्रभवत्वात् आपाततो धर्म्मिग्राहकमानबाधः सर्व्वत्र विपक्षबाधकप्रमाणशून्यत्वाद्व्याप्यत्वासिद्धिः क्वचित् स्वरूपासिद्धिरित्यादि समानतन्त्रेऽन्वेष्टव्यम्॥ ५ ॥

ननु यदि परमाणुरस्ति कथमिन्द्रियेण न गृह्यते रूपवत्त्वस्पर्शवत्त्वादयस्त्वैन्द्रियकत्वप्रयोजकास्त्वयैवोपपादिता इत्यत आह।

वि० ननु परमाणुरनित्यः अणुत्वात् मूर्त्तत्वात् रूपवत्त्वात् सावयवत्वात् अव्याप्यवृत्तिसंयोगाश्रयत्वाद्वा घटवदित्याद्यनुमानसाम्राज्यात् परमाणोरनित्यत्वं सेत्स्यतीत्यत आह।

अविद्या अप्रमा अर्थात् परमाणोरनित्यत्वानुमितिः दुष्टहेतुजन्यत्वात् पूर्व्वोक्तानां हेतूनामनैकान्तिकत्वादितिभावः॥ ५॥

ननु परमाणोः सत्त्वे कथं तस्य न चाक्षुषादिकमत आह।

सू॰ महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥ ६ ॥

उ॰ महति महत्त्ववति द्रव्ये महच्छब्दात् परिमाणवाचकात् गुणवाचकानां मतुपो लोपात्, अनेकद्रव्यवत्त्वादिति अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम्, तद्यस्यास्ति तदनेकद्रव्यवत् तद्भावस्तस्मात् अनेकद्रव्यवत्त्वात्, एवं सति वायुरपि प्रत्यक्षः स्यादत उक्तं रूपाच्चेति उद्भूतादनभिभूतादिति वक्ष्यते, उपलब्धिरिति वहिरिन्द्रियेणेतिशेषः तथाच परमाणोर्महत्त्वाभावादनुपलब्धिरित्युक्तं भवति, अनेकद्रव्यवत्त्वञ्च अनेकद्रव्याश्रिताश्रितत्वम् अवयवबहुत्वाधीनमहत्त्वाश्रयत्वं वा। न च महत्त्वेनैवानेकद्रव्यवत्त्वमन्यथासिद्धमिति वाच्यं वैपरीत्यस्यापि सम्भवात्, जन्येन जनकस्यान्यथासिद्धि र्नतु जनकेन जन्यस्येति चेन्न जन्यजनकयोर्युगपदन्वयव्यतिरेकग्रहेऽन्यथासिद्ध्यभावात् अन्यथा भ्रामणादिना दण्डादीनामन्यथासिद्धिप्रसङ्गात्, महत्त्वोत्कर्षात् प्रत्यक्षतोत्कर्षो दूरादाविति चेन्न अनेकद्रव्यवत्त्वोत्कर्षस्यापि तत्र सम्भवादिनि-

वि॰ उपलब्धिः चाक्षुषं स्पार्शनञ्च प्रत्यक्षम्, महति महत्परिमाणवति भवतीतिशेषः तथाच परमाणोर्महत्त्वाभावान्न प्रत्यक्षमिति भावः। ननु वाय्वादेरपि महत्परिमाणसत्त्वात् कथं न प्रत्यक्षमत उक्तं रूपादिति उद्भूतरूपादित्यर्थः तेन चक्षुरादौ रूपसत्त्वेऽपि न प्रत्यक्षम्, ननु त्रसरेण्वादावेव कथं महत्त्वं न परमाणावित्यत उक्तम् अनेकद्रव्यवत्त्वादिति तथाच जन्यमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य प्रयोजकत्वात् परमाण्वादौ च तदभा-

सू० सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायो-
रनुपलब्धिः ॥ ७॥

---

उ० गमनाविरहात् किञ्च मर्कटकीटसूत्रजाले हस्तचतुष्टयादि-
मिते दूरादप्रत्यक्षे मर्कटमात्रप्रत्यक्षताऽनेकद्रव्यवत्त्वोत्क-
र्षाधीनैव महत्त्वोत्कर्षस्य जाले वर्त्तमानत्वात् एवं सूक्ष्म-
तन्तुघटितपटादौ दूरत्वे महत्त्वोत्कर्षेऽपि स्वल्पपरिमाण-
मुद्गरादिप्रत्यक्षे द्रष्टव्यम् ॥ ६ ॥

नन्वेवमपि मध्यन्दिनोल्काप्रकाशस्य चाक्षुषस्य रश्मेर्वा-
योर्व्वा स्पर्शसमवायेन रूपसमवायिनो महतस्योपलम्भः
स्यात् अत आह।

रूपसंस्कारपदेन रूपसमवायो रूपोद्भवो रूपानभिभ-
वश्च विवक्षितः। तेन यद्यपि वायौ य एव स्पर्शसमवायः
स एव रूपसमवायः तथापि रूपनिरूपितो नास्ति तत्र

---

वि० वाय्र महत्त्वम् अनेकद्रव्यवत्त्वञ्च अनेकसमवेतसमवेतत्वमिति
अनेकद्रव्यवत्त्वादिति पञ्चम्याः प्रयोज्यत्वमर्थः अन्वयश्चास्य महत्-
परिमाणे तत्र च उपलब्धिप्रयोजकत्वं तात्पर्य्यबलात् पारतन्त्र्येण
भासते अतो न चकारासङ्गतिरिति ध्येयम् ॥ ६ ॥

ननु समवाय एक एव स्पर्शस्य रूपस्य च तथाच वायौ स्पर्श-
सत्त्वेन रूपवत्त्वमप्यावश्यकं सम्बन्धसत्तायाः सम्बन्धिसत्ताप्रयो-
जकत्वात्, इत्यञ्च कथं न वायोः प्रत्यक्षमत आह।

रूपसंस्कारः संस्कृतं रूपं छुदिदित इतिन्यायात् उद्भूतान-
भिभूतरूपमिति यावत् तदभावात् तादृशरूपत्वावच्छिन्नाधि-
करणत्वाभावान्न वायोः उपलब्धिः प्रत्यक्षमित्यर्थः। न च सम्बन्धस-

उ० रूपात्यन्ताभावसत्त्वात् चाक्षुषे च रश्मौ रूपसंस्कारः रूपोद्भवो नास्ति मध्यन्दिनोल्काप्रकाशे च रूपसंस्कारो रूपानभिभवो नास्ति इति न तेषां प्रत्यक्षता, एवं ग्रीष्मोष्मभर्ज्जनकपालानलकनकादिषु रूपसंस्कार उन्नेयः। वृत्तिकृतस्तु रूपञ्च रूपसंस्कारश्चेत्येकरूपपदलोपः तेन रूपाभावाद्वायोरनुपलब्धिः, रूपसंस्काराभावाच्चक्षुरादीनामनुपलब्धिरित्याहुः॥ ७॥

एवं परमाणुनित्यताप्रकरणानन्तरं परमाणुलिङ्गतयोपोद्घातसङ्गत्या वहिर्द्रव्यप्रत्यक्षता प्रकरणं समाप्य उपोद्घातेन गुणप्रत्यक्षताप्रकरणं वर्त्तयिष्यन्नाह।

---

वि० त्तायाः सम्बन्धिसत्तानियामकत्वात् कथं न वायौ रूपाधिकरणत्वमिति वाच्यं वायौ रूपं नास्तीति प्रत्यक्षसिद्धेन रूपाभावेन विरोधित्वात् वायू रूपवानिति प्रत्ययासत्त्वेन तदधिकरणतायां साधकाभावाच्च, यत्र तु न बाधकं किन्तु साधकान्तरं तत्रैव सम्बन्धसत्ता सम्बन्धिसत्तानियामिका इत्यभ्युपगमस्यावश्यकत्वात्, द्रव्यत्वस्य सत्त्वकथनन्तु रूपसम्बन्धसत्त्वज्ञापनार्थम्, महत्परिमाणसत्त्वाभिधानन्तु प्रत्यक्षकारणसम्पत्त्यर्थम्, उद्भूतत्वविशेषणं भर्ज्जनकपालादिस्थवह्निग्रीष्मोष्मचक्षुराद्युपलब्धिवारणार्थम्, अनभिभूतत्वविशेषणम् मध्यन्दिनोल्काप्रकाशादिप्रत्यक्षवारणार्थमिति संक्षेपः॥ ७॥

ननु परमाण्वादीनां प्रत्यक्षं न भवतु तद्रूपस्य तु प्रत्यक्षं कथं न भवति वहिर्द्रव्यप्रत्यक्ष एव महत्परिमाणोद्भूतानभिभूतरूपयोर्हेतुत्वादन्यथा घटरूपादीनामपि प्रत्यक्षं न स्यादित्यतो गुणप्रत्यक्षताप्रकरणमारभते।

सू० अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥

उ० रूपगतोविशेषोरूपविशेषः तच्चोद्भूतत्वमनभिभूतत्वं रूपत्वञ्च तस्माद्रूपस्योपलब्धिः। नन्वेवं परमाणोर्द्व्यणुकस्य च रूपं गृह्येतेत्यत उक्तमनेकद्रव्यसमवायादिति अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्रसरेणुप्रभृति तत्समवायात्, घटादयोऽप्यवयवद्वयारब्धाः परम्परयाऽनेकद्रव्याश्रया एव, रसस्पर्शादौ रूपत्वविरहात् चाक्षुषत्वाभावः चाक्षुषे तेजसि च उद्भूतत्वविरहात्, उद्भवः रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः। नन्वेवं शुक्लत्वसुरभित्वकटुत्वादिभिरपि परापरभावानुपपत्तिरेव तत्तद्व्याप्यतन्नानात्वकल्पने तु कल्पनागौरवम् उद्भवपदस्य नानार्थत्वञ्चेति चेन्न वाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात्, अनुद्भवाभाव एव उद्भव इति केचित् तच्चिन्त्यम् अनुद्भवस्याप्येवं व्यवस्थापयितुमशक्यत्वात् अतो-

वि० अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यम् अनेकाश्रितमित्यर्थः तत्समवायात् अनेकसमवेतसमवेतत्वादिति यावत् तादृशसमवेतत्वञ्च जन्यमहत्त्वप्रयोजकमिति महत्परिमाणमेवात्र विवक्षितम्, रूपविशेषउद्भूतानभिभूतरूपम्, तस्मात् यद्यप्यर्थो-ऽन्यत्वं तथाच रूपप्रत्यक्षे महत्परिमाणमुद्भूतानभिभूतरूपञ्च सामानाधिकरण्यसम्बन्धेन कारणं तत्कार्य्यतावच्छेदकन्तु वहि-

सू॰ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्॥ ९॥

---

उ॰ न्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत् एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वापत्तेः। ऐन्द्रियकत्वावच्छेदकं किमिति चेत् तुल्यम्, विशेषगुणेष्वेकैवोद्भूतत्वं जातिः गुणगतजातौ परापरभावानुपपत्ति र्न दोषायेत्यपि वदन्ति॥ ८॥

स्पर्शातिरिक्तानां रूपसामानाधिकरण्यमेव बहिरिन्द्रियग्राह्यताप्रयोजकमिति रूपप्रत्यक्षसामग्रीमभिधाय तामन्यत्रातिदिशन्नाह।

तेनेति रूपप्रत्यक्षज्ञानेनेत्यर्थः यथा रूपविशेषात् रूपत्वानभिभूतत्वोद्भूतत्वाद्रूपोपलब्धिस्तथा रसविशेषात् रसत्वानभिभूतत्वोद्भूतत्वलक्षणात् रसोपलब्धिः एवमितरत्रापि योज्यम् अनेकद्रव्यसमवायस्यातिदेशः, घ्राणरसनत्वगिन्द्रियाणामनुद्भवाद्गन्धरसस्पर्शानामग्रहणम्, पाषाणादावनुद्भ-

---

वि॰ रिन्द्रियजन्यद्रव्यसमवेतप्रत्यक्षत्वम् तथाच परमाणुरूपादौ महत्त्वस्य ग्रीष्मोष्मादिरूपादौ उद्भूतानभिभूतरूपस्य सामानाधिकरण्यसम्बन्धेनासत्त्वात् न तेषां प्रत्यक्षमिति भावः॥ ८॥

परमाण्वादिगतगुणान्तराणामपि प्रत्यक्षमतएव न भवतीत्याह।

ेन रूपप्रत्यक्षीयहेतुकथनेन रसगन्धस्पर्शेषु ज्ञानं प्रत्यक्षं व्याख्यातमुक्तप्रायमित्यर्थः तथाच परमाणुद्व्यणुकगतानां रसगन्धस्पर्शानां महत्त्वाभावान्न प्रत्यक्षम्, यद्यपि रूपस्य चाक्षुषताव-

उ० वाह्नम्बरसयोः, तद्भस्मनि तयोरुपलम्भात्, तयोः पाषाणादावुपलम्भ एव नतु स्पष्ट इत्येके। विभक्तावयवाप्यद्रव्यरूपानुद्भवात्तदग्रहणम् एवं रसस्यापि, उष्णजले तेजोरूपस्यानुद्भवात् स्पर्शस्य चाभिभवात् विततकर्पूरचम्पकादौ रूपरसस्पर्शानामनुद्भवादनुपलम्भः। कनकादौ रूपमुद्भूतमेव शुक्लभास्वरत्वे परमभिभूते, रूपमप्यभिभूतमित्येके कनकग्रहणन्तु रूपान्तरसाहचर्य्यात्, अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणं नतु बलवत्सजातीयसम्बन्धमात्रम्, बलवत्सजातीयसम्बन्धस्याप्यग्रहणनिरूप्यतया अग्रहणस्यैवोपजीव्यत्वात् तथाग्रहणप्रयोजकत्वेन बलवत्सजातीय एवोपजीव्यः, अग्रहणस्य ग्रहप्रागभावस्य तदत्यन्ताभावस्य वा तदप्रयोज्यत्वात् ग्रहणध्वंसस्य च तथाभावात्, तथापि तर्हि बलवत्सजातीयग्रहणकृतमग्रहणमनुपपन्नमेवेति चेत् अस्त्वेवं तथापि सजातीयस्य बलवत्त्वे दुर्ब्बलत्वे वा तादृशसम्बन्धसत्त्वे वा ग्रहणाग्रहणे एव प्रयोजके इति स एवाभिभवपदार्थः॥ ९॥

---

वि० ष्वेदन्तु नोक्तप्रत्यक्षत्वं वायूपनीतसुरभिभागादेर्गन्धस्य वाय्वादेः स्पर्शस्य च प्रत्यक्षानुपपत्तेस्तथापि द्रव्यसमवेतचाक्षुषं प्रति उद्भूतानभिभूतं रूपं सामानाधिकरण्यसम्बन्धेन कारणम्, तथाविधरासनं प्रति उद्भूतानभिभूतरसः, तथाविधघ्राणजं प्रति उत्कटगन्धः, तादात्म्यसम्बन्धेन तथाविधस्पार्शनं प्रति उद्भूतानभिभूतस्पर्शः सामानाधिकरण्यसम्बन्धेन हेतुरिति विशेष्यैव कार्य्यकारणभावो वक्तव्यः॥ ९॥

सू० तस्याभावादव्यभिचारः॥ १०॥

---

उ० ननु गुरुत्वमप्यनेकद्रव्यसमवेतं रूपमहत्त्वसमानाधिकरणञ्चेति कथं न प्रत्यक्षमत आह।

तस्य रूपत्वादेः सामान्यस्य उद्भवस्य च गुरुत्वेऽभावान्न गुरुत्वं प्रत्यक्षम्। ननु माभूत् तत्र रूपत्वादिकं तथापि तत्प्रत्यक्षं स्यादत आह अव्यभिचार इति एकैकेन्द्रियग्राह्यत्वं प्रति रूपत्वादीनां पञ्चानां जातीनाम् अव्यभिचारोनियम एव यत्रैव रूपत्वादिपञ्चकान्यतमं तत्रैव वाह्यैकैकेन्द्रियग्राह्यत्वं तद्व्यतिरेकादित्यर्थः, सूत्रे तु गुरुत्वाधिकारस्यास्फुटत्वात् प्रशस्तदेवैरतीन्द्रियेषु मध्ये परिगणितमपि वल्लभाचार्य्यैः स्पार्शनमुक्तं गुरुत्वम्॥ १०॥

---

वि० ननु गुरुत्वादेः कथं न प्रत्यक्षं महत्त्वस्य उद्भूतरूपस्य च सामानाधिकरण्यसम्बन्धेन तत्र सत्त्वादित्यत आह।

अत्र तत्पदेन अप्रक्रान्तस्यापि कारणकलापस्य परामर्शः कार्य्योत्पत्तिप्रयोजकतया तस्य प्रसिद्धत्वात् तथाच तस्य कारणकलापस्य अभावात् असत्त्वात् अव्यभिचारः उद्भूतरूपादेः कार्य्यकारणभावकल्पनायां गुरुत्वादौ नान्वयव्यभिचार इत्यर्थः तथाच लौकिकविषयतासम्बन्धेन प्रत्यक्षसामान्यं प्रत्येवातीन्द्रियाणां गुरुत्वादीनां गुरुत्वत्वादिना प्रतिबन्धकतास्वीकारस्यावश्यकत्वेन तदन्योन्याभावस्य गुरुत्वादावसत्त्वेन सामग्र्यभावान्न गुरुत्वादेः प्रत्यक्षमितिभावः। वल्लभाचार्य्यैस्तु एतत्सूत्रमन्यथैव व्याख्यातं स्वीकृतञ्च गुरुत्वादेः स्पार्शनप्रत्यक्षमिति संक्षेपः॥ १०॥

सू० संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म्म च रूपिद्रव्यसमवायात् चाक्षुषाणि ॥ ११ ॥

---

उ० एवमेकैकेन्द्रियग्राह्यानभिधाय द्वीन्द्रियग्राह्यानाह।

एतेषां चाक्षुषत्वे स्पार्शनत्वे वा परस्परानपेक्षत्वसूचनायासमासः। यद्यपि महत्त्वापेक्षाऽस्ति तथापि न परिमाणत्वेन, चकारः स्नेहद्रवत्ववेगानामुपसंग्रहार्थः, चाक्षुषाणीति स्पार्शनत्वमप्युपलक्षयति यद्वा चकार एव चाक्षुषाणि चेत्यत्राऽपि योज्यः। सङ्ख्या इति बहुवचनम् एकत्वादिकाः सर्व्वा एव सङ्ख्याः संगृह्णाति, एकत्वं सामान्यमेव न तु गुण इति चेत् तद् यदि द्रव्यमात्रवृत्ति तदा द्रव्यत्वेन सहान्यूनानतिरिक्तवृत्तित्वम्, अथ गुणकर्म्मणोरपि वर्त्तते तदा सत्तया सहान्यूनानतिरिक्तवृत्तित्वम्, कथं तर्हि गुणादावप्येकत्वादिप्रत्यय इति चेत् आरोपितेनैकत्वेन, एकार्थसमवायप्रत्यासत्त्या सम्यगेवैकत्वप्रत्ययो वा। तदेतदेकत्वं नित्यद्रव्येषु नित्यम् अनित्येषु च कारणैकत्वासमवायिका-

---

वि० द्वीन्द्रियग्राह्यानाह।

चाक्षुषाणीत्यत्रापि पूर्व्वचकारो योजनीयः तेन सङ्ख्यादीनि कर्म्मपर्य्यन्तानि रूपवद्द्रव्यसमवेतानि चाक्षुषाणि स्पार्शनानि चेत्यर्थः। कर्म्मचेति चकारात् उद्भूतरूपवद्द्रव्याणां योग्यगतानां स्नेहवेगद्रवत्वानां जातीनाञ्च संग्रहः। रूपिपदं

सू० अरूपिष्वचाक्षुषाणि ॥ १२ ॥

उ० रणकम्, द्वित्वादिकन्तु अपेक्षाबुद्धिजन्यम् अपेक्षाबुद्धिश्च नानैकत्वसमूहालम्बनरूपा सजातीययो र्विजातीययोर्वा द्रव्ययोश्चक्षुषा सन्निकर्षे ॥ ११ ॥

एतावन्त्येव कर्म्मपर्य्यन्तानि अभिप्रेत्याह।

रूपरहितद्रव्येषु वर्त्तमानानि कर्म्मपर्य्यन्तानि सङ्ख्यादीन्यचाक्षुषाणि न स्पार्शनानीत्यपि द्रष्टव्यम्, अप्रत्यक्षाणीति नोक्तम्, तथासत्यात्मैकत्वमपि प्रत्यक्षं न स्यात् ॥ ॥ १२ ॥

रूपादीनामेकैकेन्द्रियग्राह्यत्वं सङ्ख्यादीनां द्वीन्द्रियग्राह्यत्वं सुखादीनां मानसत्वं तथाच सत्तागुणत्वयोः सामान्ययोः सर्व्वेन्द्रियग्राह्यत्वमायातमित्याह।

वि० योग्यपरं तेन परमाण्वादिगतानामेतेषामप्रत्यक्षत्वेऽपि नासङ्गतिः ॥ ११ ॥

अयोग्यसमवेतानामेतेषामचाक्षुषत्वमर्थायातमपि स्पष्टार्थमाह।

अरूपिषु अयोग्येषु एतानि अचाक्षुषाणि अस्पार्शनानि चेत्यर्थः आत्मैकत्वस्य मानसप्रत्यक्षोदयात् अप्रत्यक्षाणीति नोक्तम् ॥ ॥ १२ ॥

सत्तागुणत्वयोः सर्व्वेन्द्रियग्राह्यत्वमाह।

सू॰ एतेन गुणत्वे भावे च सर्व्वेन्द्रियं ज्ञानं व्याख्यातम्॥ १३॥

---

उ॰ व्यक्तिग्रहणयोग्यतैव जातिग्रहणयोग्यता व्यक्तयश्च यथायथं यदि सर्व्वेन्द्रियैर्गृह्यन्ते तदा जात्योरपि गुणत्वसत्तयोः सर्व्वेन्द्रियग्राह्यत्वं पर्य्यवसन्नमित्यर्थः॥ १३॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे चतुर्थाध्यायस्याद्यमाह्निकम्॥ *॥

---

वि॰ भावः सत्ता, सर्व्वेन्द्रियं सर्व्वेन्द्रियजन्यम्, ज्ञानं प्रत्यक्षं तथाच तयोः सर्व्वेन्द्रिययोग्यवृत्तित्वात् सर्व्वैरेवेन्द्रियैस्ते गृह्येते इति भावः॥ १३॥

इति श्रीजयनारायण-तर्कपञ्चानन-कृतायां कणादसूत्रविवृतौ चतुर्थाध्यायस्याद्यमाह्निकम्॥ *॥

---

सू॰ तत्पुनः पृथिव्यादिकार्य्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १ ॥

---

उ॰ स्पर्शवद्द्रव्यपरीक्षार्थे चतुर्थाध्याये मूलकारणपरमाणुपरीक्षानन्तरं कार्य्यद्वारा स्पर्शवन्त्येव द्रव्याणि परीक्षिक्षुराह।

तत्र शरीरत्वं प्रयत्नवदात्मसंयोगासमवायिकारणवत्क्रियावदन्त्यावयवित्वम् उपाधिभेदः, नतु शरीरत्वं जातिः पृथिवीत्वादिना परापरभावानुपपत्तेः, इन्द्रियत्वञ्च स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वम्, शब्देतरोद्भूतविशेषविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा, नक्तञ्चरनयनरश्मिस्तु तेजोन्तरमेव चक्षुष्ट्वेतु शब्दरूपे-

---

वि॰ परमाणुरूपमूलकारणपरीक्षां प्रथमाह्निके सम्पाद्य कार्य्यद्रव्यं विभजते।

अत्र शरीरत्वम् अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वृक्षत्वपृथिवीत्वद्रव्यत्वसत्त्वादिवारणाय प्रथमदलान्तम्, घटत्वादिवारणाय चेष्टावद्वृत्तीति, घटशरीरसंयोगादिवारणाय जातीति मनुष्यत्वचैत्रत्वादिजातिमादाय मानुषादिशरीरे लक्षणसमन्वयः वृक्षादावपि चेष्टाऽस्त्येव आध्यात्मिकवायुसम्बन्धात् अन्यथा भग्नक्षतसंरोहणादिकं न स्यात्, कल्पभेदेन नृसिंहशरीरस्य नानात्वात् नृसिंहत्वजातिमादाय तत्र लक्षणसमन्वयः नतु शरीरत्वं जातिः पृथिवीत्वादिना सङ्करात्, नापि चेष्टाश्रयत्वम्, निश्चेष्टशरीरेऽव्याप्तेः। इन्द्रियत्वमपि न जातिः, पृथिवीत्वादिना सङ्करप्रसङ्गात् किन्तु शब्देतरोद्भूतविशेषगुणानाश्र-

उ॰ तरोद्भूतविशेषगुणानाश्रयत्वे सतीति देयम्, नत्विन्द्रियत्वं जातिः, पृथिवीत्वादिना परापरभावानुपपत्तेः। विषयत्वञ्च यद्यपि प्रतीयमानभोगसाधनत्वम्, तच्च लौकिकसाक्षात्कारविषयत्वमेव द्रव्यगुणकर्म्मसामान्याभावसाधारणम्, तथापि सूत्रानुरोधात् लौकिकसाक्षात्कारविषयकार्य्यद्रव्यत्वं द्रष्टव्यम्, पृथिव्यादिकार्य्यद्रव्यं त्रिविधमिति हि सूत्रम्, तथाच विषयत्वमपि न जातिः ॥ १ ॥

इदानीं शरीरस्य त्रैभौतिकत्वचातुर्भौतिकत्वप्रवादं निराकर्त्तुमाह।

---

वि॰ यत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियमनःसंयोगचर्म्ममनःसंयोगात्ममनःसंयोगा ज्ञानकारणानीति चर्म्मण्यात्मनि चातिव्याप्तिवारणाय सत्यन्तम्, श्रोत्रेऽव्याप्तिवारणाय शब्देतरेति घ्राणादिनयनरश्मेश्चक्षुष्ट्वस्वीकारे तु रूपेतरेत्यपि वक्तव्यम् घ्राणादौ गन्धादिसत्त्वादुद्भूतेति शुक्लत्वादिव्याप्यम् अनुद्भूतत्वं जातिर्नानैव तदभावकूटवत्त्वमुद्भूतत्वं तच्च संयोगेऽप्यस्तीत्यसम्भववारणाय विशेषेति कालदिगादावतिव्याप्तिवारणाय ज्ञानकारणेति चक्षुरवयवविषयसंयोगस्यापि चक्षुर्विषयसंयोगद्वारा ज्ञानजनकत्वस्वीकारात् चक्षुरवयवादौ चक्षुःसंयुक्तकालविशेषणतायाः कालादौ रूपाभावचाक्षुषस्य जनकतया तद्घटकसंयोगस्यापि स्वाश्रयविशेषणतासम्बन्धेन चाक्षुषकारणत्वात् तमादाय कालादौ चातिव्याप्तिवारणाय मनःपदम्। विषयत्वञ्च साक्षात्परम्परया वोपभोगसाधनत्वे सति जन्यद्रव्यत्वम्, तस्य शरीरेन्द्रियवृत्तित्वेऽपि भिन्नबुद्धिवैषम्यार्थं तयोः पृथगुत्कीर्त्तनमिति संक्षेपः॥ १॥

सू० प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ २ ॥

---

उ० गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं यदि शरीरं भवेत् तदाऽप्रत्यक्षं भवेत् यथा प्रत्यक्षाप्रत्यक्षाणां वायुवनस्पतीनां संयोगोऽप्रत्यक्षस्तथा शरीरमप्यप्रत्यक्षं स्यादिति दृष्टान्तदारकं सूत्रं, पञ्चात्मकं न विद्यत इति शरीरमितिशेषः। क्लेदपाकादयस्तु उपष्टम्भकजलानलगता एव, चातुर्भौतिकोऽप्येवम्। नन्वस्तु त्रैभौतिकम्, त्रयाणां भूतानां प्रत्यक्षत्वादिति चेन्न विजातीयारम्भस्य प्रतिषेधात्। एकस्य गुणस्यावयविनि गुणानारम्भकत्वात् तद् यदि पृथिवीजलाभ्यामारम्भः स्यात् तदा तदारब्धमगन्धमरसञ्च स्यात् एवं पृथिव्यनलाभ्यामगन्धमरूपमरसञ्च स्यात् पृथिव्यनिलाभ्यामगन्धमरसमरूपमस्पर्शञ्च स्यादित्यायूह्यम् ॥ ॥ २ ॥

---

वि० शरीरस्य चातुर्भौतिकत्वं पाञ्चभौतिकत्वञ्च निराकुरुते।

"गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्" इति न्यायपूर्व्वपक्षसूत्रं मानुषादिशरीरेषु गन्धादीनां भूतपञ्चककार्य्याणां पञ्चानां सत्त्वात् तानि पाञ्चभौतिकान्येवेति केचिद्वदन्ति, तन्मतं खण्डयति, पञ्चात्मकं शरीरं न विद्यते प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् तदारब्धस्याप्यप्रत्यक्षतापत्तेः नहि वायोराकाशस्य वा प्रत्यक्षं कस्यचिद्भवति तस्माच्छरीरं न पाञ्चभौतिकमित्यर्थः, चातुर्भौतिकत्वमपि अनया युक्त्या खण्डनीयम् ॥ २ ॥

सू० गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम्॥ ३॥
अणुसंयोगस्त्वप्रतिषिद्धः॥ ४॥

---

उ० एतदेवाह।

पृथिव्यप्तेजसां प्रत्यक्षाणामेवारब्धं शरीरं प्रत्यक्षं स्यादपि, यदि तत्र गुणान्तरं कारणगुणपूर्व्वकं प्रादुर्भवेत्, न त्वेतदस्ति एकस्य गन्धादेरनारम्भकत्वस्योक्तत्वात् तथाच न त्र्यात्मकमपि शरीरं न रूपवद्भूतत्रयारब्धमपीत्यर्थः॥ ३॥

कथं तर्ह्येकस्मिन्नेव शरीरे पाकादीनामुपलम्भ इत्यत आह।

मिथः पञ्चानां भूतानां परस्परमुपष्टम्भकतया संयोगो न निषिध्यते, किन्तु विजातीययोरणो र्द्रव्यं प्रत्यसमवायि-

---

वि० ननु पृथिव्यादीनां त्रयाणां प्रत्यक्षत्वात् त्रैभौतिकत्वमेव मानुषादिशरीराणामङ्गीकार्य्यमित्यत आह।

चकारस्त्वर्थे मानुषादिशरीरं न त्र्यात्मकं पृथिव्यादित्रयारब्धम्, गुणान्तरस्य स्नेहस्य चित्ररूपस्य चित्रस्पर्शस्य चाप्रादुर्भावादनुत्पत्तेः, यथा स्नेहवदवयवारब्धस्यावयविनः स्नेहः कारणगुणपूर्व्वको दृश्यते, यथा वा नानावर्णावयवैरारब्धस्यावयविनश्चित्ररूपमुत्पद्यते तथा मानुषादिशरीरेऽपि कथं न भवति कारणस्याविशेषात्॥ ३॥

ननु कथं तर्हि शरीरे गन्धक्लेदपाका भूतत्रयजन्या अनुभूयन्त इत्याशङ्क्याह।

अणूनां पार्थिवजलीयतैजसानां परस्परं संयोगस्तु न प्रतिषिद्धः नास्माभिर्निषिध्यते किन्तु तादृशसंयोगस्यादसमवायि-

सू॰ तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥ ५ ॥

कारणं संयोगो नेष्यते, तथाच तदुपष्टम्भात् पाकादीनां शरीरे भवत्युपलम्भ इति तर्हि किम्प्रकृतिकमिदं मानुषशरीरमित्यत्र गौतमीयं सूत्रमुपतिष्ठते "पार्थिवं तद्विशेषगुणोपलब्धेः" पृथिवीविशेषगुणो गन्धो मानुषशरीरे आनाशमनपायी दृश्यते, पाकादयस्तु शुष्कशरीरे नोपलभ्यन्ते इति तेषामौपाधिकत्वं गन्धस्य स्वाभाविकत्वमिति पार्थिवत्वव्यवस्थितेः ॥ ४ ॥

शरीरं विभजते।

उ॰ तत्र पार्थिवाप्यादिशरीरेषु मध्ये पार्थिवं शरीरं द्विविधम्, के ते द्वे विधे इत्यत आह योनिजमयोनिजञ्चेति आप्यतैजसवायवीयशरीराणां वरुणादित्यवायुलोकेषु प्रसिद्धानामयो-

वि॰ कारणाद्द्रव्यान्तरमेवेत्यर्थः तथाच मानुषादिशरीरस्यापि जलाद्युपलम्भकत्वस्वीकारात् क्लेदपाकादीनां चासङ्गतिः, एवञ्च शरीरस्य त्र्यात्मकत्वे पृथिवीत्वजलत्वादिजातीनां परस्परसाङ्कर्य्यप्रसङ्गादिति भावः। न च साङ्कर्य्यभयात् किं पार्थिवत्वं स्वीकार्य्यम् उत जलीयत्वं वेत्यत्र किं विनिगमकमिति वाच्यं स्वाभाविकगन्धवत्त्वस्यैव पार्थिवत्वे विनिगमकत्वात् अनुभूयते हि शुष्कशरीरेऽपि गन्धः नतु क्लेदादिरिति गन्धस्य स्वाभाविकत्वम्, तथाच गौतमसूत्रम् "पार्थिवं तद्विशेषगुणोपलब्धेः" इति ॥ ४ ॥

पार्थिवं शरीरं विभजते।

योनिजमपि द्विविधं जरायुजमण्डजञ्च जरायुजं मनुष्यपश्वादीनाम् अण्डजं पक्षिसर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकं

उ॰ निजत्वमेव अयोनिजत्वं शुक्रशोणितसन्निपातानपेक्षत्वम्। अयोनिजञ्च देवानामृषीणाञ्च, श्रूयते हि 'ब्रह्मणो मानसा मन्वादय' इति। कारणमन्तरेण कथं कार्य्यमिति चेत् योनेः शरीरत्वावच्छेदेनाकारणत्वात् उष्मजक्रमिमशकादिशरीरे व्यभिचारात् संस्थानविशेषवत्त्वस्य चासिद्धेः देवर्षिशरीरापेक्षयाऽस्मदादिशरीराणामन्याकृशत्वात्, योनिजमपि द्विविधं जरायुजमण्डजञ्च, जरायुजं मानुषपशुमृगाणां गर्भाशयस्य जरायुत्वात् पक्षिसरीसृपाणामण्डजं परितः सर्पणशीलत्वात् सर्पकीटमत्स्यादयोऽपि सरीसृपा एव यद्यपि वृक्षादयोऽपि शरीरभेदा एव भोगाधिष्ठानत्वात् न खलु भोगाधिष्ठानत्वमन्तरेण जीवन-मरण-स्वप्न-जागरणभेषजप्रयोग-वीजसजातीयानुबन्धा नुकूलोपगम-प्रतिकूलापगमादयः सम्भवन्ति वृद्धिक्षतभग्नसंरोहणे च भोगोपपादके स्फुटे एव, आगमोऽप्यस्ति।

"नर्म्मदातीरसम्भूताः शरखार्ज्जुनपादपाः।
नर्म्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्"।

इत्यादिः।

---

वि॰ स्वेदजं दंशमशकादीनाम् उद्भिज्जं तरुगुल्मादीनाम्, मानसञ्च शरीरं ऋषीणाम् मन्वादीनाञ्च तैजसमेव नतु पार्थिवम्, वृक्षादीनां शरीरत्वे मानञ्च "शरीरजैः कर्म्मदोषै र्यांति स्थावरतां नरः" इति मनुवचनम्।

"गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्ज्जित्य वादतः।
श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः"॥

सू० अनियतदिग्देशपूर्व्वकत्वात् ॥ ६ ॥

---

उ० "श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः"।

इत्यादिश्च तथापि चेष्टावत्त्वमिन्द्रियवत्त्वञ्च नोद्भिदां स्फुटतरमतो न शरीरव्यवहारः ॥ ५ ॥

अयोनिजशरीरोत्पत्तिकारणमाह।

अनियतदिग्देशाः परमाणवो धर्म्मविशेषजनितकर्म्माणस्तत्पूर्व्वकत्वादयोनिजशरीराणाम् ॥ ६ ॥

---

वि० इत्यादिवचनञ्चेति संक्षेपः ॥ ५ ॥

ननु मन्वादीनामयोनिजं शरीरं कथमुत्पद्यते शुक्रशोणितारम्भकपरमाणूनामेव विशिष्टशरीरारम्भकत्वेन तत्र तदभावादित्याशङ्कायामाह।

अनियतौ दिग्देशौ येषां ते अनियतदिग्देशाः परमाणवस्तत्पूर्व्वकत्वात् तदधीनत्वात्, "सन्त्ययोनिजाः" इति दशमसूत्रेण पञ्चम्यन्तानां चतुर्णां सूत्राणामन्वयः। तथाच वरुणलोकादौ अयोनिजा आप्या तैजसा वायवीया मानसाश्च देहाः सन्ति तेषां शुक्रशोणिताद्यनपेक्षोत्पत्तिकानामारम्भकाः परमाणवः कुत आगच्छन्ति योनिजेषु शुक्रशोणितपरमाणव एवारम्भका दृष्टा इत्याशङ्कानिरासार्थमुक्तमिदम्, पार्थिवा जलीया तैजसा वायवीयाश्च परमाणवः सर्व्वासु दिक्षु सर्व्वेषु देशेषु च सन्ति तेषां दिग्देशनियमाभावात् अयोनिजशरीरोत्पत्तौ न परमाणुदुर्भिक्षम्, नहि शुक्रशोणितपरमाणुभिन्नाः परमाणवो न देहारम्भकाः दंशमशकतद्गुआदिदेहानुत्पत्तिप्रसङ्गादित्यर्थः ॥ ६ ॥

सू० धर्म्मविशेषाच्च ॥ ७ ॥
समाख्याभावाच्च ॥ ८ ॥

---

उ० ननु परमाणूनां कर्म्म विना कथं द्व्यणुकासमवायिकारणं संयोगमन्तरेण द्व्यणुकोत्पत्तिरत आह।

अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म्म तेन च कर्म्मणा सम्भूय परमाणवो द्व्यणुकादिप्रक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्ते इत्यर्थः, उपलक्षणञ्चैतत् अधर्म्मविशेषाच्च क्षुद्रजन्तूनामुष्मजानां मशकादीनां यातनामयानि शरीराण्युत्पद्यन्ते इत्यपि द्रष्टव्यम् ॥ ७ ॥

देवर्षीणामयोनिजे शरीरे प्रमाणान्तरमाह।

समाख्या अन्वर्था संज्ञा श्रुतिस्मृतीतिहासपुराणादिषु

---

वि० नन्वयोनिजशरीरारम्भकपरमाणूनां द्व्यणुकारम्भकसंयोगेषु असमवायिकारणानां तादृशपरमाणुकर्म्मणां कथमुत्पत्तिस्तदसमवायिकारणस्याभावादत आह।

धर्म्मविशेषात् वक्ष्यमाणप्राणिनां पुण्यविशेषादेव तेषामयोनिजानि शरीराण्युत्पद्यन्ते, तादृशादृष्टवदात्मसंयोगेन परमाणूनां क्रिया भवन्ति, ततः परमाणूनां द्व्यणुकारम्भकाः संयोगा जायन्ते, ततो द्व्यणुकादिक्रमेणायोनिजानि शरीराण्युत्पद्यन्ते इत्यर्थः ॥ ७ ॥

नन्वयोनिजशरीराणां संज्ञा कथम्भवति पित्रादीनामभावात् अनुभूयन्ते हि लोके चैत्रमैत्रादिसंज्ञाः पित्रादिनिवेशिता इत्याशङ्कायामाह।

समाख्या संज्ञा तस्या भावात् सत्त्वात् वीजिपित्रादिकं विने-

सू० संज्ञाया आदित्वात् ॥ ९ ॥

---

उ० प्रसिद्धा, तथाहि दुर्व्वासःप्रभृतयो मानसाः अहङ्कारेभ्यः समभवदङ्गिरा इत्यादिका, तथाऽपि श्रूयते सन्त्ययोनिजानि शरीराणि देवर्षीणामिति ॥ ८ ॥

प्रमाणान्तरमाह।

सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकी तया श्रूयते अस्त्ययोनिजं शरीरमिति नहि तदा ब्रह्मणो मातापितरौ स्तः याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः ॥ ९ ॥

उपसंहरति।

---

वि० वेतिशेषः। नहि सर्व्वाः संज्ञाः पित्रादिनैव निवेशिताः घटपटादिसंज्ञानान्तथात्वाभावात् तथाच येनेश्वरेण घटपटाद्यचेतनेषु संज्ञा निवेशितास्तेनैव मनुमरीच्यादिसंज्ञा अयोनिजेषु शरीरेषु निवेशिता इति भावः ॥ ८ ॥

ननु ईश्वरे प्रमाणाभावात् कथं घटपटादिसंज्ञानां तत्कृतत्वमित्यत आह।

संज्ञाया आदित्वात् कारणत्वात् ईश्वरस्येतिशेषः तथाच "संज्ञाकर्म्मत्वस्मद्विशिष्टानां लिङ्गम्" इति सूत्रेण संज्ञाकर्तृत्वेनेश्वरसिद्धेरुक्तत्वादीश्वरस्य संज्ञाकर्तृत्वं निराबाधमेवेति भावः ॥ ९ ॥

इदानीं चतुर्णामुक्तानां सूत्राणां साध्यं निर्द्दिशति।

सू० सम्प्ययोनिजाः ॥ १० ॥
वेदलिङ्गाच्च ॥ ११ ॥

---

उ० शरीरविशेषा इति शेषः ॥ १० ॥

उपसंहृतेऽतिदार्ढ्यार्थं प्रमाणान्तरमाह।

वेदो मन्त्रः स च लिङ्ग्यते ज्ञाप्यतेऽनेनेति वेदलिङ्गं ब्राह्मणम्, ततोऽप्ययोनिजं शरीरं प्रतिपद्यते इत्यर्थः। तथाहि ब्राह्मणम् "प्रजापतिः प्रजा अनेका असृजत् स तपोऽतप्यत प्रजाः सृजेयमिति स मुखतो ब्राह्मणमसृजत् बाहुभ्यां राजन्यमूरुभ्यां वैश्यम् पद्भ्यां शूद्रम्" इति, वेदोऽपि "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इत्यादिः, तदेवं योनिजमयोनिजञ्च पार्थिवशरीरमुक्तम्, आप्यं तैजसं वायवीयञ्चायोनिजमेव शुक्रशोणितयो र्नियमेन पार्थिवत्वात् पार्थिवेन च पायसी-

---

वि० मनुमरीच्यादीनां देहविशेषा इतिशेषः ॥ १० ॥

अयोनिजशरीरविशेषसत्त्वे वेदा अपि प्रमाणतामासादयन्तीत्याह।

वेदरूपं यल्लिङ्गं ज्ञापकं तस्मात् तथा "ब्राह्मणोऽस्य मुखमासीत्" स मुखतो ब्राह्मणमसृजत्" इत्यादिकेभ्यो वेदेभ्य एव अयोनिजाः शरीरविशेषाः सन्तीति ज्ञायते। परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगसाधनत्वम्। पार्थिवम् इन्द्रियं घ्राणं तच्च गन्धस्य गन्धगतजातीनाञ्च ग्राहकम्, घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिवत् वायूपनीतसुरभिभागवद्वा, रसनेन्द्रियं जलीयं परकीयरूपाद्यव्यञ्जकत्वे सति परकीयरसव्यञ्जक-

उ० योनारम्भात् इन्द्रियन्तु पार्थिवं घ्राणं सर्व्वप्राणभृत् साधारणं जलाद्यनभिभूतैः पार्थिवभागैरारब्धं घ्राणम्, घ्राणं पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् मृगमदगन्धव्यञ्जककुक्कुटोषारवत्, एवं रसनमाप्यं रूपाद्यव्यञ्जकत्वे सति रसस्यैव व्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकसलिलवत्, एवञ्चक्षुस्तैजसं रसाद्यव्यञ्जकत्वे सति रूपस्यैव व्यञ्जकत्वादालोकवत्, त्वगिन्द्रियं वायवीयं गन्धाद्यव्यञ्जकत्वे सति स्पर्शस्यैव व्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनवातवत्। विषयस्तु पार्थिवो मृत्पाषाणस्थावरलक्षणः तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः, अद्रिमणिहीरकगैरिकादयः पाषाणाः, स्थावरास्तृणौषधिवृक्षगुल्मलतावतानवनस्पतयः। आप्यास्तु विषयाः सरित्समुद्रहिमकरकादयः। तैजसस्तु

---

वि० त्वात् सक्तुरसाभिव्यञ्जकोदकवत् एतच्च रसस्य तद्गतजातीनाञ्च ग्राहकं द्रव्यग्रहणे घ्राणरसनयो र्न सामर्थ्यम्, चक्षुरिन्द्रियं तैजसं गन्धाद्यव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् दीपप्रभावत्, इदञ्च इन्द्रियं संयोगरूपसन्निकर्षेण उद्भूतरूपवन्ति महत्त्वविशिष्टानि च द्रव्याणि गृह्णाति, संयुक्तसमवायरूपसन्निकर्षेण तादृशद्रव्यवृत्तीनि रूपसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगस्नेहद्रवत्वकर्म्मसामान्यानि च गृह्णाति, संयुक्तसमवेतसमवायरूपसन्निकर्षेण योग्यवृत्तिवृत्तीनि सामान्यानि गृह्णाति, संयुक्तविशेषणतासंयुक्तसमवेतविशेषणतादिभि र्योग्यप्रतियोगिकान् संसर्गाभावान् योग्यगतान् अयोग्यप्रतियोगिकानप्यन्योन्याभावान् गृह्णाति, काणादमते समवायस्य प्रत्यक्षं न भवति। त्वगिन्द्रियं देहव्यापि उद्भूतस्पर्शग्राहकं तद्गतसामान्यग्राहकञ्च

उ॰ विषयो भौमदिव्योदर्य्याकरजभेदाच्चतुर्व्विधः। भौमं काष्ठेन्धनप्रभवम्, दिव्यम् अबिन्धनं विद्युदादि, उदर्य्यम् अन्नादिरसार्व्वनचमं जाठरम्, आकरजञ्च हिरण्यादि, वायवीयस्तु विषयः उपलभ्यमानस्पर्शाश्रयोवायुः, वायोश्चतुर्थः कार्य्यः प्राणाख्यः शरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदादपानादिसंज्ञां लभत इति॥ ११॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे चतुर्थाध्यायः समाप्तः॥*॥

---

वि॰ एवं रूपभिन्नान् रूपमात्रगतसामान्यभिन्नांश्च चक्षुर्ग्राह्यान् गृह्णाति, वायुमपि गृह्णातीति नव्याः। सन्निकर्षस्तु पूर्व्ववत्, तदेतदिन्द्रियं वायवीयं रूपाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवदित्यादिरनुमानप्रकारः। सर्व्वेष्वेवानुमानेषु आत्ममनःप्रभृतिषु व्यभिचारवारणाय सत्यन्तम्, एवं सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणं देयम्, कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिन्द्रियं तच्च समवायेन शब्दान् समवेतसमवायेन तद्गतानि सामान्यानि च गृह्णाति, यदिन्द्रियं यद्ग्राहकं तत्प्रतियोगिकसंसर्गाभावानां तद्गतानामन्योन्याभावानाञ्च ग्राहकमपि तदिन्द्रियं भवति इति बाह्येन्द्रियाणि पञ्च, मनस्तु अन्तरिन्द्रियं तच्च संयोगेन आत्मानं विशेषगुणोपरक्तमेव गृह्णाति, संयुक्तसमवायेन बुद्धिसुखदुःखेच्छाद्वेषयत्नान् आत्मत्वजातिञ्च गृह्णाति *संयुक्तसमवेतसमवायेन बुद्ध्यादिगतानि सामान्यानि गृह्णातीत्यन्यत्र विस्तरः॥ ११॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-कृतायां कणादसूत्रविवृतौ चतुर्थाध्यायस्य द्वितीयमाह्निकम्॥*॥

समाप्तश्चायं चतुर्थाध्यायः॥

---

* आत्मैकत्वमपि गृह्णातीति केचित्।

सू॰ आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म्म ॥ १ ॥

उ॰ कर्म्मपरीक्षा पञ्चमाध्यायार्थः। प्रयत्ननिष्पाद्य-कर्म्मपरीक्षा प्रथमाह्निकार्थः। तत्राप्युत्क्षेपणप्रकरणम्, अप्रयत्नसिद्धोत्क्षेपणप्रकरणम्, पुण्यहेतुकर्म्मप्रकरणम्, पुण्यपापोदासीनकर्म्मप्रकरणञ्च। चेष्टाविशेषमधिकृत्याह।

संयोगश्च प्रयत्नश्च संयोगप्रयत्नौ आत्मनः संयोगप्रयत्नौ ताभ्यां हस्ते समवायिकारणे कर्म्म, तस्य च कर्म्मणः प्रयत्नवदात्मसंयोगोऽसमवायिकारणम्, प्रयत्नश्च निमित्तकारणम्, इयमेव चेष्टा, प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियायाश्चेष्टात्वात् स्वासमवेतस्वातिरिक्तस्पर्शवदन्यप्रयत्नजन्यक्रियाया वा ॥ १ ॥

वि॰ "सरस्वती मम महती विवर्द्धताम्,
तथा मतिःस्फुरतु गभीरगाहिनी।
कृपावती भवतु भवप्रिया सदा,
ददातु नः शुभनिवहं भवोऽभवः"॥

कर्म्मपरीक्षामारभमाण आह।

आत्मनः संयोगेन प्रयत्नेन च शरीरे तदवयवे च चेष्टारूपं कर्म्म भवतीत्यर्थः हस्ते इत्युपलक्षणम् अत्र चेष्टारूपकर्म्मणि शरीरतदवयवादिकं समवायिकारणम्, आत्मसंयोगोऽसमवायिकारणम्, प्रयत्नो निमित्तकारणम्। तदुक्तम्।

"आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः।
कृतिजन्या भवेच्चेष्टा तज्जन्यैव क्रिया भवेत्"॥

इति ॥ १ ॥

सू० तथा हस्तसंयोगाच्च मुषले कर्म्म ॥ २ ॥
अभिघातजे मुषलादौ कर्म्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ ॥

---

उ० हस्तोत्क्षेपणमुक्त्वा तदधीनं मुषलोत्क्षेपणमाह।

चकारेण गुरुत्वं निमित्तकारणान्तरं समुच्चिनोति तथेति तादृशमुत्क्षेपणरूपमेवेत्यर्थः। यद्वा तथाहस्तसंयोगादुत्क्षेपणवद्धस्तसंयोगादित्यर्थः अत्र च प्रयत्नवदात्मसंयुक्तेन हस्तेन मुषलस्य संयोगोऽसमवायिकारणम्, मुषलं समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे ॥ २ ॥

उदूखलाभिहतस्य मुषलस्याकस्मादू यदुत्पतनं जायते तत्र कारणमाह।

अत्र यद्यपि मुषलेन उत्पतता हस्तस्य संयोगोऽप्यस्ति तथाऽपि स संयोगोऽन्यथासिद्धः किन्तु उदूखलाभिघात एव

---

वि० चेष्टाजन्यां क्रियामाह।

तथाहस्तसंयोगात् प्रयत्नवदात्मसंयुक्तचेष्टावद्धस्तसंयोगात् मुषले कर्म्म भवतीतिशेषः चकारेणानुक्तस्य गुरुत्वादेः संग्रहः। तथाच मुषलकर्म्मणि मुषलं समवायिकारणम्, तादृशहस्तसंयोगोऽसमवायिकारणम्, आत्मप्रयत्नहस्तचेष्टादीनि निमित्तकारणानीत्यर्थः। २।

हस्तचेष्टादिकं विनाऽपि मुषले उत्पतनाख्यं कर्म्म भवतीत्याह।

उदूखलाद्यभिघातजन्ये मुषलस्योत्पतनाख्ये कर्म्मणि हस्त-

सू॰ तथात्मसंयोगो हस्तकर्म्मणि ॥ ४ ॥

---

उ॰ असमवायिकारणम्, कुत एवमित्यत आह व्यतिरेकादिति प्रयत्नस्य व्यभिचारादित्यर्थः। यदि तदा प्रयत्नः स्यात् मुषलस्यैवाकस्मिकमुत्पतनं न भवेत् विधारकेण प्रयत्नेन मुषलस्य धारणमेव भवेत् चेष्टाधीनं मुषलस्य पुनरुत्पतनं वा भवेत् इति भावः ॥ ३ ॥

मुषलेन सहोत्पततोहस्तस्य कर्म्मणि कारणविशेषमभिधातुं प्रयत्नवदात्मसंयोगस्यासमवायिकारणत्वं निराकर्त्तुमाह ।

मुषलेन सहोत्पततोहस्तस्य कर्म्मणि आत्मसंयोगः प्रय-

---

वि॰ संयोगोऽकारणं नासमवायिकारणम्, संयोग इत्युपलक्षणं प्रयत्नश्चेष्टाच न निमित्तकारणमित्यपि बोध्यम्। अत्र हेतुमाह व्यतिरेकादिति विलक्षणहस्तसंयोगप्रयत्नचेष्टाव्यतिरेकेऽपि जायमानत्वात् दृढतरहस्तसंयोगप्रयत्नविशेषविलक्षणहस्तचेष्टानां सत्त्वे प्रत्युत मुषलस्योत्पतनमेव न भवतीति तेषां प्रतिबन्धकत्वमेव नतु कारणत्वं प्रयत्नजन्यं मुषलस्योदूखलादुत्पतनन्तु आकस्मिकोत्पतनात् विलक्षणमेवेतिभावः ॥ ३ ॥

उदूखलाभिहतमुषलेन सह हस्तस्य यदाकस्मिकमुत्पतनं तत्र प्रयत्नवदात्मसंयोगो न कारणमित्याह ।

हस्तकर्म्मणि उदूखलप्रतिहतमुषलसंयुक्तस्य हस्तस्य उत्पतनाख्ये कर्म्मणि आत्मसंयोगः प्रयत्नवदात्मसंयोगस्तथा नासम-

सू० अभिघातान्मुषलसंयोगाद्धस्ते कर्म्म ॥ ५ ॥

---

उ० त्नवदात्मसंयोगस्तथा अकारणमित्यर्थः अकारणमिति पूर्व्व-सूत्रस्थं तथेत्यतिदिश्यते ॥ ४ ॥

कुतस्तर्हि हस्ते तदोत्पतनमत आह ।

यथा मुषले उत्पतति मुषलमुखस्थं लोष्टमुत्पतति तथा हस्तोऽपि तदोत्पतति अत्राभिघातशब्देन अभिघातजनितः संस्कार उच्यते उपचारात्, उत्पततो मुषलस्य पटुतरेण कर्म्मणा अभिघातसहकृतेन स्वाश्रये मुषले संस्कारो जनित-स्तत्कृतं संस्कारमपेच्य हस्तमुषलसंयोगादसमवायिकार-णाद्धस्तेऽप्युत्पतनं नतु तदुत्पतनं प्रयत्नवदात्मसंयोगासम-वायिकारणकम्, अवशोहि हस्तो मुषलेन सहोत्पततीति-भावः ॥ ५ ॥

---

वि० वायिकारणमित्यर्थः तथा शब्देन पूर्व्वसूत्रे प्रक्रान्तस्य अकारणस्य परामर्षात्, इदमुपलक्षणं प्रयत्नोऽपि नासाधारणनिमित्तमित्यपि बोध्यम् ॥ ४ ॥

किन्तर्हि तादृशकर्म्मकारणमित्यत आह ।

अभिघातादिति प्रयोज्यत्वं पञ्चम्यर्थः तच्च स्वजन्यमुषलगत-वेगजन्यत्वम् अन्वयश्चास्य कर्म्मणि तथाच उदूखलाभिघातान्मुषले वेगो जायते वेगवन्मुषलसंयोगाच्च हस्तेऽपि वेगो भवतीति तेन हस्तोत्पतनम्, एवञ्च वेगवन्मुषलसंयोगो वेगश्च द्वयमेव हस्तो-त्पतनस्य कारणं नतु प्रयत्नवदात्मसंयोगो वेतिभावः ॥ ५ ॥

सू० आत्मकर्म्म हस्तसंयोगाच्च ॥ ६ ॥

---

उ० ननु शरीरे शरीरावयवे वा यत्कर्म्मोत्पद्यते तत्र प्रयत्नवदात्मसंयोगः कारणं प्रकृते कथं न तथेत्यत आह।

आत्मशब्दः शरीरावयवपर उपचारात् अन्यथानुपपत्तिरेवोपचारवीजम्, तथा चात्मनः शरीरावयवस्यापि हस्तस्य यत् कर्म्म तत् हस्तमुषलसंयोगात्, चकाराच्च वेगसमुच्चयः, हस्तकर्म्मणि हस्तसंयोगस्तावदसमवायिकारणं तत्र व्यभिचारो नास्ति स च क्वचित् प्रयत्नवदात्मसंयोगः क्वचिद्वेगवन्मुषलादिहस्तसंयोगो यथा वातूलस्य शरीरावयवकर्म्मेतिभावः ॥ ६ ॥

प्रयत्नानधीनकर्म्मप्रकरणमारभते।

---

वि० ननु शरीरतदवयवकर्म्मसु प्रयत्नवदात्मसंयोगस्यासमवायिकारणतानियमो भज्येतेत्यत आह।

आत्मशब्दस्यात्र चेष्टाश्रयोऽर्थः।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्म्म च"

इतिकोषात् वर्म्मपदमपि चेष्टावत्त्वेन शरीरतदवयवपरं तथा च शरीरतदवयवकर्म्म प्रयत्नवदात्मसंयोगात् वेगवद्द्रव्यसंयोगाच्च भवति, हस्तेन संयोगो हस्तस्य संयोगो वा हस्तसंयोगः हस्तपदं चेष्टावत्परं चेष्टावद्वेगवद्द्रव्ययोः संयोग इति फलितार्थः तथा च व्यभिचारादुक्तनियम अप्रामाणिक इति भावः ॥ ६ ॥

प्रयत्नवदात्मसंयोगं विनाऽपि गुरुत्वहेतोः पतनाख्यकर्म्मणो निष्पत्तेर्नोक्तनियमः प्रामाणिक इत्याह।

सू॰ संयोगाभावे गुरुत्वात् पतनम्॥ ७॥

---

उ॰ संयोगपदेन प्रतिबन्धकमात्रमुपलक्षयति तेन प्रतिबन्धकाभावे गुरुत्वादसमवायिकारणात् पतनम् अधःसंयोगफलिका क्रिया जायते, तत्र गुरुत्ववति फलादौ प्रतिबन्धकः संयोगः, विहङ्गमादौ तु विधारकः प्रयत्नः पतनप्रतिबन्धकः, काण्डादौ क्षिप्ते संस्कार एव पतनप्रतिबन्धकः, एतेषामभावे गुरुत्वाधीनं पतनमित्यर्थः। अभिध्यानादिना विषादेरशरीरस्थापने अदृष्टवदात्मसंयोगो मन्त्रादिरेव वा प्रतिबन्धकस्तेषामपि संयोगपदेन संग्रहः॥ ७॥

ननु गुरुत्वाद् यदि पतनं तदा लोष्टादेरुत्क्षिप्तस्य क्वचिदूर्द्ध्वं क्वचिच्च तिर्य्यग्गमनं कथम्भवेदित्यत आह।

---

वि॰ वृक्षाद्युच्चदेशारूढस्य देहस्य अवलम्बनशाखादिभङ्गेन दैवात् स्खलनादिना वा यत् पतनं भवति तत्र गुरुत्वमेव कारणं नतु प्रयत्नवदात्मसंयोगः तस्य पतनाप्रयोजकत्वात् क्वचित् प्रतिबन्धकत्वाच्च अतएव विहायसि विहरतां विहङ्गमादीनां प्रयत्नवदात्मसंयोगादेव प्रतिबन्धान्न पतनम् एवं प्रयत्नवदीश्वरसंयोगात् प्रतिबन्धादेव भूरादिलोकानां न पतनम्, यत्र तु प्रतिबन्धकसंयोगादिकं नास्ति तत्र पतनकर्म्मणि गुरुत्वमसमवायिकारणं भवताऽपि स्वीकार्य्यमित्युक्तनियमे व्यभिचारः स्फुट एवेति भावः॥ ७॥

ननु गुरुत्वस्यापि पतने कारणत्वं न सम्भवति गुरुत्ववतोऽपि लोष्टादेरुत्क्षिप्तस्योर्द्ध्वगमनदर्शनात् एवञ्च वृक्षादितः स्खलितदेहादेः कथं लोष्टादिवत् तिर्य्यग्गमनमूर्द्ध्वगमनं वा न भवतीत्यत आह।

सू० नोदनविशेषाभावान्नोर्द्धं न तिर्य्यग्गमनम् ॥ ॥८॥

प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥ नोदनविशेषादुदसनविशेषः ॥ १० ॥

---

उ० गुरुत्ववतोऽपि लोष्टकाण्डादे र्यदूर्द्धं तिर्य्यक् च गमनं तन्नोदनविशेषात् तीव्रतरान्नोदनात् तथा च फलपत्रिवान्तादौ संयोगप्रयत्नसंस्काराभावे यत् पतनं तत्र नोदनविशेषो नास्ति तेन न तिर्य्यङ्वोर्द्धं गमनमितिभावः ॥ ८ ॥

ननु नोदनविशेष एव कुत उत्पद्यते तत्राह।

तिर्य्यक् ऊर्द्धं दूरम् आसन्नं वा क्षिपामीतीच्छाकारणकः प्रयत्नविशेषः तज्जनितो नोदनविशेषस्ततो गुरुत्ववतो

---

वि० स्खलितस्य देहादे र्नोर्द्धगमनं न वा तिर्य्यग्गमनम्। नोदनविशेषस्य वाय्वादेस्तिर्य्यग्गमनप्रयोजकसजातीयस्य लोष्टादेरूर्द्धगमनप्रयोजकसजातीयस्य वा नोदनस्याभावात् तथाचोर्द्धगमनादिहेतुभूतस्य नोदनविशेषस्यासत्त्वात् तत्कार्य्यमूर्द्धगमनादिकं न भवति, यत्र तु तादृशनोदनादिकं वर्त्तते भवत्येव तत्रोर्द्धगमनादिकमितिभावः ॥ ८ ॥

ननु स्खलितदेहादौ नोदनविशेष एव कथं न जायते नोदनविशेषस्योर्द्धगमनादौ हेतुत्वं वा कथमङ्गीक्रियते इत्याशङ्कायां सूत्रद्वयमुपतिष्ठते।

प्रयत्नविशेषात् ऊर्द्धमुत्क्षिपामीत्यादीच्छाजनितात् विलक्षणप्रयत्नात् नोदनविशेषो जायते इति तादृशप्रयत्नाभावात् स्खल-

सू० हस्तकर्म्मणा दारककर्म्म व्याख्यातम्॥ ११ ॥

---

उ० द्रव्यस्य लोष्टादेरूर्द्ध्वं तिर्य्यक् च गमनमुपपद्यते उदसनं दूरोत्क्षेपणम्॥ ९ ॥ १० ॥

उदूखलाभिघातात् मुषलेन सह हस्ते यत्कर्म्म उत्पन्नं तत्तावत् प्रयत्नपूर्व्वकं न भवति नापि पुण्यपापहेतुरतस्तत्तुल्यतां बालकस्य क्रीडाकरचरणादिचालनं यत्तच्चातिदिशति ।

बालकस्य यद्यपि करचरणादिचालनं प्रयत्नपूर्व्वकमेव तथापि हिताहितप्राप्तिफलकं न भवति न वा पुण्यपापहेतुरित्यतिदेशार्थः ॥ ११ ॥

---

वि० नादिस्थले न नोदनविशेष इत्यर्थः । ९ । नोदनविशेषात् पूर्व्वोक्तप्रयत्नजनितविजातीयनोदनात् उदसनम् ऊर्द्ध्वोत्क्षेपणम् ऊर्द्ध्वगमनं भवतीतिशेषः तथाचान्वयव्यतिरेकाभ्यां नोदनविशेषस्य ऊर्द्ध्वगमनहेतुत्वं सिद्ध्यतीति उदसनमित्युपलक्षणं तिर्य्यग्गमनादिकमपि बोध्यम् । १० ।

ननु क्रोडस्थितस्य बालकस्य करचरणादिक्रिया तिर्य्यगूर्द्ध्वगमनरूपा कथमुत्पद्यते तत्कारणस्य नोदनविशेषस्य तत्रासत्त्वादित्यत आह ।

लोष्टोत्क्षेपणकालीनेन हस्तकर्म्मणा उत्क्षेपणाद्यात्मकेन दारकस्य बालकस्य कर्म्म करचरणाद्युत्क्षेपणं व्याख्यातम् उपपादितं तथाच उदसनमात्रे न नोदनविशेषो हेतुः किन्तु उदसनविशेष एवेति न बालकस्य करचरणाद्युत्क्षेपणानुपपत्तिः अन्यथा लोष्टाद्युत्क्षेप्तुः कराद्युत्क्षेपणानुपपत्तेरित्यर्थः । ११ ।

सू॰ तथा दग्धस्य विस्फोटने ॥ १२ ॥

यत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥

---

उ॰ इदानीं प्रयत्नपूर्व्वकेऽपि कर्म्मणि यत्र पुण्यपापहेतुत्वं तत्र दारककर्म्मतुल्यतामतिदिशन्नाह।

आततायिना केनाप्यगारे दाह्यमाने तत्र दग्धस्य पुरुषस्य विस्फोटे वह्निक्षते जाते सति तस्याततायिनो बधानुकूलेन प्रयत्नेन हस्तादौ यत्कर्म्म जनितं तन्न पुण्यहेतुर्न वा पापहेतुः यथाहुः।

"नाततायिबधे दोषो हन्तु र्भवति कश्चन।

प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति" ॥

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।

क्षेत्रदारापहारी च षडेते आततायिनः" ॥ १२ ॥

इदानीं यत्नं विना यानि कर्म्माणि भवन्ति तान्याह।

प्रसुप्तस्येति चैतन्याभावदशामुपलक्षयति तेन मूर्च्छितस्य जीवतोऽचैतन्येऽपि वायुकृतं चलनं द्रष्टव्यमत्र ॥ १३ ॥

---

वि॰ ऊर्द्धमुत्क्षिपामीत्यादीच्छाजनितप्रयत्नविशेषानधीननोदनादपि क्वचित् उत्क्षेपणादिकम्भवतीत्याह।

दग्धस्य शरीरस्य हस्तादे र्विस्फोटने तदवयवानां तिर्य्यगूर्द्धगमने तथा न प्रयत्नविशेषजनितनोदनं हेतुरित्यर्थः ॥ १२ ॥

प्रयत्नानधीनं कर्म्मान्तरमपि दर्शयति।

ऊर्द्धं क्षिपामीत्यादीच्छाजनितप्रयत्नाभावेऽपि प्रसुप्तस्य सप्तप्रय-

सू० तृणे कर्म्म वायुसंयोगात् ॥ १४ ॥

मणिगमनं सूच्यभिसर्पणमदृष्टकारणम् ॥ १५ ॥

---

उ० शरीरकर्म्माणि व्याख्याय तदितराण्याह।

तृणपदेन वृक्षगुल्मलतावतानादिकं सर्व्वमुपलक्षयति ॥ ॥ १४ ॥

अदृष्टाधीनं कर्म्म परिगणयन्नाह।

मणिपदेन कांस्यादिकमुपलक्षयति तेनाभिमन्त्रितं मणिकांस्यादि तस्कराभिमुखं यद् गच्छति तत्र गमने मण्यादि समवायिकारणम्, अदृष्टवत्तस्करात्ममणिसंयोगोऽसमवायिकारणम्, तस्करस्य पापं निमित्तकारणम्। सूच्यभिसर्पणमिति सूचीपदेन लौहमात्रं तृणञ्चोपलक्षयति तथाचायस्कान्ताभिमुखं यत्सूच्यादेर्गमनं तृणकान्ताभि-

---

वि० वद्यान्वितस्य शरीरस्य चलनं तिर्य्यगूर्द्धाकुञ्चाक्षनादिकर्म्म उत्पद्यते इत्यर्थः तथाच प्रयत्नविशेषो न सर्व्वत्र हेतुरितिभावः ॥ १३ ॥

अन्यान्यप्येतादृशानि कर्म्माणि दर्शयति।

प्रयत्नविशेषाभावेऽपि वायुसंयोगात् तृणे कर्म्म उत्पद्यते तृणपदमन्येषामप्युपलक्षणम् ॥ १४ ॥

प्रयत्नविशेषानधीनानि अदृष्टविशेषाधीनानि कर्म्माणि प्रदर्शयति।

मणिपदेन अलपूर्णकांस्यनादिमयपात्राण्यभिप्रेतानि चौर्य्यधनलब्धये तादृशपात्रे मान्त्रिकैर्मन्त्रप्रयोगः क्रियते, तादृश-

उ० मुखं यत् द्रव्यस्य गमनं तच्च सूच्यादि समवायिकारणम्, यस्य हितमहितं वा तेन द्रव्यसूच्यादिगमनेन तददृष्टवदात्मसंयोगोऽसमवायिकारणम्, तददृष्टमेव निमित्तकारणम्, एवमन्यदप्यूह्यम्, तद्यथा वह्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनं सर्गादौ परमाणुकर्म्मादि ॥ १५ ॥

ननु शरविहङ्गमालातचक्रादीनामुपरमपर्य्यन्तमेकमेव कर्म्म नाना वेति संशये निर्णयहेतुमाह।

---

वि० पात्रन्तु भूमौ तिष्ठति तदुपरि चपरेण केनचिद्धिहस्तः स्थाप्यते मन्त्रसामर्थ्यात् तत्पात्रं तादृशहस्तसहितमेव चौर्य्यधनावस्थानस्थानाभिमुखं गच्छति तत्र स्थाने गत्वा स्थिरं भवतीति प्राचां किंवदन्ती, तादृशपात्रगमने न प्रयत्नविशेषो हेतुः किन्तु पूर्व्वस्वामिनः सुकृतं चोरस्य दुष्कृतं वा निमित्तकारणम्, तादृशादृष्टवदात्मना तादृशपात्रस्य संयोगोऽसमवायिकारणम्, तादृशपात्रन्तु समवायिकारणम्, एवं अयस्कान्तसन्निधाने सति सूचीनां लोहशलाकानां यदयस्कान्ताभिमुखगमनं भवति तत्रापि अदृष्टमेव हेतुः, ननु कस्यादृष्टेन सूच्यादीनां गमनमितिचेत् तद्गमनेन यस्य हितमहितंवा भवति तददृष्टस्यैव तत्र हेतुत्वम्, सूचीत्युपलक्षणम् अयस्कान्ताकृष्टलोहमात्रमभिप्रेतम्, एवमन्तमस्थाकृष्टानां द्रव्याणां गमने वह्नेरूर्द्ध्वज्वलने वायोस्तिर्य्यग्गमने सर्गाद्यकालीनपरमाणुकर्म्मणि चादृष्टकारणकत्वमूहनीयमिति संक्षेपः ॥ १५ ॥

विक्षिप्तशरादौ यत्कर्म्म जायते तत् शरपतनपर्य्यन्तमेकं नाना वेत्यत्राह।

सू॰ इषावयुगपत्संयोगविशेषाः कर्म्मान्यत्वे हेतुः॥ ॥१६॥

---

उ॰ इषाविति षष्ठ्यर्थे सप्तमी, इदमत्राकूतं वेगेन गच्छतां शरादीनां कुड्यादिसंयोगानन्तरं शरादौ सत्येव गत्युपरमो दृश्यते अत्राश्रयनाशस्तावन्न तन्नाशकः आश्रयस्य विद्यमानत्वात् विरोधिगुणान्तरञ्च नोपलभ्यते तेन स्वजन्यः संयोग एव कर्म्मनाशक इत्युन्नीयते स च संयोगश्चतुर्थक्षणे जातः पञ्चमक्षणे कर्म्म नाशयति तथाहि कर्म्मोत्पत्तिरथविभागः अथ पूर्व्वसंयोगनाशः उत्तरसंयोगः कर्म्मनाशः तेनायुगपत्संयोगविशेषाः कर्म्मनानात्वज्ञापका इत्यर्थः संयोगविशेषा इति संयोगे विशेषः स्वजन्यत्वमेव अन्यथा संयोगमात्रस्य कर्म्मनाशकत्वे कर्म्म क्वचिदपि न तिष्ठेत्॥ १६ ॥

---

वि॰ इषौ धनुर्मुक्तशरे अयुगपत् नानासमयोत्पन्ना ये संयोगविशेषा उत्तरसंयोगा जायन्ते त एव कर्म्मान्यत्वे शरगतकर्म्मणां नानात्वे हेतुरित्येकवचनमार्षं हेतव इति विवक्षणीयम्, तथाच कर्म्मणः स्वजन्यस्वचतुर्थक्षणोत्पन्नोत्तरसंयोगनाश्यत्वनियमात् पञ्चमादिक्षणेष्ववस्थानासम्भवेन शरस्याद्यगमनमारभ्य पतनपर्य्यन्तमेकस्य कर्म्मणोऽवस्थानासम्भवात् भिन्नभिन्नानि स्वस्वजन्योत्तरसंयोगनाश्यानि कर्म्माणि जायन्ते इत्यवश्यमङ्गीकार्य्यमिति भावः॥ ॥१६॥

सू० नोदनादाद्यमिषोः कर्म्म तत्कर्म्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च॥ १७॥

---

उ० नोदननिष्पाद्यकर्म्मप्रकरणानन्तरं संस्कारनिष्पाद्यकर्म्मप्रकरणमारभते।

पुरुषप्रयत्नेनाकृष्टया पतञ्चिकया नुन्नस्येषोराद्यं कर्म्म जायते तत्र नोदनमसमवायिकारणम्, इषुः समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे, तेन चाद्येन कर्म्मणा समानाधिकरणो वेगाख्यः संस्कारो जन्यते स च वेगेन गच्छतीति प्रत्यक्षसिद्ध एव तेन संस्कारेण तत्रैषौ कर्म्म जायते तत्रासमवायिकारणं संस्कारः, समवायिकारणमिषुः, निमित्तकारणन्तु तीव्रो नोदनविशेषः, एवञ्च यावदिषुपतनमनुवर्त्तमानेन संस्कारेण उत्तरोत्तरः कर्म्मसन्तानो जायते स्वजन्योत्तरसंयोगेन कर्म्मणि नष्टे संस्कारेण कर्म्मान्तरजन-

---

वि० ननु विच्छिन्नशरादेराद्यं यत् कर्म्म तज्जनकस्य धनुषा नोदनस्य तेनैव कर्म्मणा स्वतृतीयक्षणे नाशोत्पादात् नोदनाभावेन पञ्चमादिक्षणे कथं कर्म्मान्तराण्युत्पद्यन्ते इत्यत आह।

नोदनात् आकृष्टया पतञ्चिकया सह इषोर्नोदनाख्यसंयोगात्, इषोः शरस्य, आद्यं प्राथमिकम्, कर्म्म समवस्यम्, तत्कर्म्मकारिताच्च आद्यकर्म्मजनितात्तु, संस्काराद्वेगाख्यात्, उत्तरं द्वितीयम्, तथा तत्संस्कारात्,उत्तरमुत्तरञ्च तृतीयचतुर्थादिकञ्च, कर्म्म जायते

सू० संस्काराभावे गुरुत्वात् पतनम् ॥ १८ ॥

---

उ० नात् एक एव संस्कारः कर्म्मसन्तानजनकः नतु कर्म्मसन्तानवत् संस्कारसन्तानोऽप्यभ्युपगन्तुमुचितो गौरवादिति दर्शयितुमाह तथोत्तरमुत्तरञ्चेति तत्कर्म्मकारिताच्च संस्कारादित्येकवचनञ्च, न्यायनयेतु कर्म्मसन्तानवत् संस्कारसन्तानस्वीकारे गौरवम्, यत्तु युगपत्प्रक्षिप्तशरयोरेकस्य तीव्रो वेगोऽपरस्य तु मन्दस्तत्र नोदनतीव्रत्वमन्दत्वे निमित्तम् ॥ ॥ १७ ॥

ननु संस्कार एक एव चेत् कर्म्मसन्तानजनकस्तदा कदाचिदपि शरपातो न स्यात् कर्म्मजनकस्य संस्कारस्य सत्त्वादित्यत आह।

गुरुत्वन्तावत् पतनकारणमनुवर्त्तमानमेव तच्च गुरुत्वं

---

वि० इत्यर्थः तथाच प्राथमिके कर्म्मणि नोदनमसमवायिकारणम्, द्वितीयादौ तु वेग एवेति न द्वितीयादिकर्म्मोत्पादानुपपत्तिरितिभावः। अत्र पतनपर्य्यन्तमिषोरेक एव वेगो नतु नाना इति सूचयितुं संस्कारादित्येकवचनम् उत्तरमित्यस्य निरभिधानञ्च, नहि कर्म्मसन्तान इव वेगसन्तानेऽपि किञ्चिन्मानमस्ति येन स स्वीकरणीय इति। १७ ॥

नन्वेवं शरश्चिरमेव गच्छेत् कदाचिदपि न पतेदित्यत आह।

संस्कारस्याद्यकर्म्मजनितस्य वेगस्य अभावे नाशे सति गुरुत्वात् कारणादेव पतनं शरादौ जायते इत्यर्थः, यादृशवेगवि-

उ० संस्कारेण प्रतिरुद्धं पतनं नाजीजनत् अथ प्रतिबन्धकाभावे तदेव गुरुत्वं पतनं करोतीत्यर्थः ॥ १८ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे पञ्चमाध्यायस्य प्रथममाह्निकम् ॥ * ॥

---

वि० शरो यावन्तं कालन्तिष्ठति तावानेव कालोऽन्तिमच्छायावच्छिन्नत्वादग्रं वेगं नाशयति क्वचित्तु द्रव्यान्तरसंयोगोऽपि वेगनाशकः तथाच प्रतिबन्धकस्य वेगस्य सत्त्वादेव पूर्व्वं शरादेर्न पतनं किन्तु गतिसन्तान एवाभूत् उत्तरकालन्तु गमनकर्म्मणः कारणविनाशान्न गमनं किन्तु प्रतिबन्धकाभावात् पतनमेव भवतीति न किञ्चिदनुपपन्नम् ॥ १८ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्यकृतायां कणादसूत्रविवृतौ पञ्चमाध्यायस्य प्रथमाह्निकम् ॥ * ॥

---

सू० नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म्म ॥ १ ॥

उ० नोदनादिनिष्पाद्य कर्म्मपरीक्षाप्रकरणम्। तत्राह।

नोदनं संयोगविशेषः येन संयोगेन जनितं कर्म्म संयोगिनोः परस्परं विभागहेतु र्न भवति यः संयोगः शब्द-निमित्तकारणं न भवति वा। यः संयोगः शब्दनिमित्त-कारणं भवति यज्जनितं कर्म्म संयोगिनोः परस्परविभाग-हेतुश्च भवति स संयोगविशेषोऽभिघातः। ताभ्यामपि प्रत्येकं कर्म्म जन्यते पङ्काख्यायां पृथिव्याञ्चरणेन नोदनात् चरणाभिघाताच्च कर्म्म जायते तत्र पङ्कः समवायिकारणम्, नोदनाभिघातौ यथायथमसमवायिकारणम्, गुरुत्ववेग-प्रयत्ना यथासम्भवं निमित्तकारणम्। संयुक्तसंयोगादिति नोदनादभिघाताद्वा पङ्के कर्म्म तत्पङ्कस्थिते घटादावपि तत्समकालमेव कर्म्मदर्शनात् ॥ १ ॥

वि० नोदनाद्यधीन कर्म्मपरीक्षामारभते।

पृथिव्यां वंशादौ कदाचिद्वज्ञ्यादिनोदनात् कर्म्म जायते कदा-चिच्च कुठाराद्यभिघातात् एवं संयुक्तसंयोगात् चलदश्वादिसं-युक्तरज्जुसंयोगात् रथादौ कर्म्म जायते तत्र प्रथमे वंशादिकर्म्मणि वज्ञ्यादिनोदनमसमवायिकारणम्, वंशादिः समवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, द्वितीये कुठाराद्यभिघातोऽसम-वायिकारणं तृतीयेऽश्वसंयुक्तरज्जुसंयोगोऽसमवायिकारणमिति॥ ॥ १ ॥

सू० तद्विशेषेणादृष्टकारितम् ॥ २ ॥
अपां संयोगाभावे गुरुत्वात् पतनम् ॥ ३ ॥

---

उ० ननु भूकम्पादौ नोदनाभिघातावन्तरेण जायमाने किमसमवायिकारणमत आह।

तदिति पृथिवीकर्म्म परामृशति पृथिव्यामेव कर्म्म यदि विशेषेण आश्रयेण भवति तदाऽदृष्टकारितम्, तेन भूकम्पेन यस्य दुःखं सुखं वा भवति अदृष्टवत्तदात्मसंयोगस्तत्रासमवायिकारणम्, भूः समवायिकारणम्, अदृष्टं निमित्तकारणम्, यद्वा तदा नोदनाभिघातौ परामृशति विशेषो व्यतिरेकः तथाच नोदनाभिघातव्यतिरेकेण यत् पृथिव्यां कर्म्म तददृष्टकारितमित्यर्थः ॥ २ ॥

इदानीं द्रवद्रव्यसमवेतकर्म्मपरीक्षाप्रकरणम्, तत्राह।

अपां यत् पतनं वर्षणरूपं तद्गुरुत्वासमवायिकारण-

---

वि० नोदनादिव्यतिरेकेऽपि यद्भूकम्पादिकं जायते तत्र किमसमवायिकारणमित्याकाङ्क्षायामाह।

तेषां नोदनाभिघातसंयुक्तसंयोगानां विशेषेण व्यतिरेकेण जातं यत् भूकम्पादिकं कर्म्म तत् अदृष्टकारितं अदृष्टवदात्मसंयोगासमवायिकारणकमित्यर्थः भूकम्पेन यस्य सुखं दुःखं वा भवति तददृष्टस्य तत्रासाधारणकारणत्वादितिभावः॥ २॥

जलादिकर्म्मपरीक्षामारभते।

अपां धूमज्योतिःसलिलमरुत्संघातात्मकमेघगतानां जलानां संयोगाभावे पतनप्रतिबन्धकसंयोगस्य नाशे सति गुरुत्वादसम-

सू० द्रवत्वात् स्यन्दनम् ॥ ४॥
नाड्यो* वायुसंयोगादारोहणम् ॥ ५ ॥

उ० कम्, तत् संयोगस्य मेघसंयोगस्याभावे सति भवति तेन संयोगाभावस्तन्निमित्तकारणमित्यर्थः ॥ ३ ॥

तेषामेव वृष्टिविन्दूनामन्योन्यसंयोगजनकं कर्म्म कथमत आह ।

चितौ पतितानामपां विन्दूनां परस्परं संयोगेन महच्चलावयवि स्रोतोरूपं यज्जायते तस्य यत् स्यन्दनं दूरसंसरणं तत् द्रवत्वादसमवायिकारणादुत्पद्यते गुरुत्वान्निमित्तकारणादप्सु समवायिकारणेषु ॥ ४ ॥

ननु यदि भूमिष्ठानामपाम् ऊर्द्धं गमनं भवति तदा गुरुत्वात् पतनवर्षणं सम्भाव्यते तदेव तु कुत इत्यत आह ।

कारयन्तीतिशेषः । यदपामूर्द्धमारोहणं तत् नाड्यः

वि० वायिकारणात् पतनम् अधःसंयोगानुकूलं कर्म्म भवतीत्यर्थः ॥ ३ ॥

ननु भूमौ पतितानां जलविन्दूनां मिलनेन स्रोतोरूपेण यद्दूरदेशगमनरूपं स्यन्दनं जायते तत्र किमसमवायिकारणमित्याकाङ्क्षायामाह ।

जलादीनां यत् स्यन्दनाख्यं कर्म्म तत्र द्रवत्वमेवासमवायिकारणमित्यर्थः ॥ ४ ॥

ननु मेघसम्पादकं जलानामूर्द्धगमनं कथं भवतीत्यत आह ।

नाड्यः सूर्य्यखरकरा वायुसंयोगात् आरोहणम् अपामित्यनुव-

* नाद्य इति क्वचित् पाठः।

सू॰ नोदनापीडनात् संयुक्तसंयोगाच्च ॥ ६ ॥

---

उ॰ सूर्य्यरश्मयो वायुसंयोगात् कारयन्ति ग्रीष्मे वाय्वभिहताः सूर्य्यरश्मयएव आरोहयन्त्यप इत्यर्थः। क्वचित् पाठो नाड्यवायुसंयोगादिति स च नाड्यो नाडीसम्बन्धी यो वायुसंयोग इत्युपपादनीयः ॥ ५ ॥

ननु सूर्य्यरश्मीनां कथमयं महिमा यत् भूमिष्ठा अप ऊर्द्ध्वं नयन्तीत्यत आह ।

नोदनेन बलवद्वायुनोदनेन आपीडनादास्कन्दनात् वायुसंयुक्तारश्मयस्तत्संयुक्ता आप ऊर्द्ध्वं धावन्ति यथा स्थालीस्था अपः क्वथ्यमानाः वायुनुन्नवह्निरश्मय ऊर्द्ध्वं नयन्ति, चकार इवार्थस्तत्र च उपमानं स्थालीस्था एवापो द्रष्टव्याः ॥ ६ ॥

---

वि॰ गते जनयन्तीतिशेषः वायुसंयुक्ताः ये तीक्ष्णाः सूर्य्यकरास्त एव भूमिगतानां जलानामूर्द्ध्वगमनं जनयन्तीत्यर्थः। नाड्यवायुसंयोगादिति पाठोऽपि क्वचिद्दृश्यते तत्र नाड्यः नाड्यां भवो यो वायुसंयोगः नाडीवाय्वोः संयोग इति यावत् तस्मादपाम् आरोहणं भवतीत्यर्थः ॥ ५ ॥

ननु सूरकराणां कथमीदृशसामर्थ्यमत्राह ।

नोदनेन वेगवद्वायुनोदनेन आपीडनात् सम्बन्धात् तथाच वेगवद्वायुसंयोगादेव सूर्य्यकराणामूर्द्ध्वगमनसामर्थ्यम्, ननु सूर्य्यकरस्थो यो वायुसंयोगः स सूर्य्यकरस्यैवोर्द्ध्वगमनेऽसमवायिकारणं नतु जलानां व्यधिकरणत्वादत आह संयुक्तसंयो-

सू॰ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥

---

उ॰ ननु मूले सिक्तानामपां वृक्षाभ्यन्तरेणोर्द्ध्वगमनम् अभितः, तत्र च नोदनाभिघातौ नवादित्यरश्मयः प्रभवन्ति तत्कथं तदित्यत आह ।

अभितः सर्पणमभिसर्पणं तदभिसर्पणं मूले निषिक्तानामपां वृक्षे तददृष्टकारितं पत्रकाण्डफलपुष्पादिवृद्धिकृतं सुखं दुःखं वा येषामात्मनाम्, अदृष्टवत्तदात्मसंयोगादसमवायिकारणात् अदृष्टान्निमित्तादप्सु समवायिकारणेषु तत् कर्म्म भवति येन कर्म्मणा आप ऊर्द्ध्वं गत्वा वृक्षं वर्द्धयन्तीत्यर्थः ॥ ७ ॥

नन्वपां सांसिद्धिकद्रवत्वं लक्षणमुक्तं तादृशानामेवापामूर्द्ध्वमधस्तिर्य्यक् च गमनमुपपादितं हिमकरकादीनाञ्च

---

वि॰ गात्रेति वायुसंयुक्ताः ये सूर्य्यकरास्तत्संयोगादित्यर्थः तथाच जलानामूर्द्ध्वगमने वायुसंयुक्तसूर्य्यकरसंयोग एवासमवायिकारणं सूर्य्यकरादिगतवायुसंयोगस्तु निमित्तकारणमिति न किञ्चिदनुपपन्नम् ॥ ६ ॥

ननु वृक्षादेर्मूलस्थानां जलानां कथं वृक्षाभ्यन्तरेणोर्द्ध्वगमनम् उक्तहेतोस्तत्राभावादत आह ।

वृक्षवर्द्धनेन यस्य सुखं दुःखं वा भवति अदृष्टवत्तदात्मसंयोग एव मूलस्थजलानां वृक्षाभ्यन्तरेणोर्द्ध्वगमनेऽसमवायिकारणं तदृष्टादृष्टं निमित्तकारणमित्यर्थः ॥ ७ ॥

सू० अपां संघातो विलयनञ्च तेजःसंयोगात् ॥ ८ ॥

---

उ० शैत्यादप्स्वविवादसिद्धम्, तत्कथं तेषां संघातः काठिन्यम्, कथञ्च विलयनमित्यत आह।

दिव्येन तेजसा प्रतिबन्धादाप्याः परमाणवो द्व्यणुकमारभमाणा द्व्यणुकेषु द्रवत्वं नारभन्ते ततो द्रवत्वशून्यैरवयवैर्द्व्यणुकादिप्रक्रमेण द्रवत्वशून्या हिमकरकादय आरभ्यन्ते तेन तेषां काठिन्यमुपलभ्यते। नन्वेवं हिमकरकादीनामाप्यत्वे किं प्रमाणमत उक्तं विलयनञ्च तेजःसंयोगादिति तेजःसंयोगेन बलवता हिमकरकारम्भकपरमाणूनां क्रिया क्रियातो विभागस्तत आरम्भकसंयोगनाशपरम्परया हिमकरकादिमहावयविनाशस्ततश्च द्रवत्वप्रतिबन्धकतेजःसंयोगविगमात् त एव परमाणवः द्व्यणुकेषु द्रवत्वमार-

---

वि० ननु हिमकरकादीनां कथं प्रतिबद्धद्रवत्वं कथं वा तद्विलयनमित्यत आह।

अपां संघातः विलक्षणसंयोगो हिमकरकादिगत तेजःसंयोगात् विलक्षणदिव्यतेजःसंयोगात् भवति, एवं विलयनं शिथिलाख्यसंयोगोऽपि तेजःसंयोगात् पूर्व्वोक्ततेजोभिन्नतेजःसंयोगाद्भवति, दिव्यतेजःसंयुक्तजलपरमाणुभ्यां यद्द्व्यणुकमारभ्यते तत्रानुद्भूतं द्रवत्वं जायते उष्मणा विलयनस्थले दिव्यतेजःसंयोगरहितत्वादेवोद्भूतद्रवत्वं द्व्यणुकादौ जायते, हिमकरकादौ काठिन्यप्रतीतिस्तु भ्रमरूपा कठिनस्पर्शस्य पृथिवीमात्रवृत्तित्वात् हिमकरकादौ यदनुद्भूतद्रवत्वं तत्रादृष्टविशेषोऽपि हेतुरिति, केचित्तु

सू० तत्र* विस्फूर्ज्जथुर्लिङ्गम् ॥ ९ ॥

उ० भन्ते ततो द्रवत्ववतां हिमकरकादीनां विलयनं तत्र च बलवत्तेजोनुप्रवेशो निमित्तम् ॥ ८ ॥

ननु बलवद्दिव्यतेजोनुप्रवेशस्तत्र इत्यत्र किं प्रमाणमित्यत आह ।

तत्र दिव्यासु अप्सु दिव्यानां तेजसामनुप्रवेशे विस्फूर्ज्जथुर्लिङ्गं वज्रनिर्घोष एव लिङ्गमित्यर्थः आत्यन्तिकविद्युत्प्रकाशस्तावत्प्रत्यक्ष एव तदनुपदश्च स्फूर्ज्जथुः सोऽपि प्रत्यक्ष एव तेनानुमीयते यस्मान्मेघात् करकाः प्रादुर्भवन्ति तत्र दिव्यन्तेजोविद्युद्रूपमनुप्रविष्टं तदुपष्टम्भेन करकारम्भिकाणामपां द्रव्यत्वप्रतिबन्ध इति ॥ ९ ॥

वि० हिमकरकादिस्थले दिव्यतेजःसंयोगेन प्रतिबन्धाद्द्रवत्वं नोत्पद्यत इत्याहुः ॥ ८ ॥

ननु जले दिव्यतेजःसंयोगे किं मानमित्यत आह ।

विस्फूर्ज्जथुर्वज्रनिर्घोषः, तत्र दिव्यतेजःसंयोगे लिङ्गम्, आदौ विद्युत्प्रकाशस्ततो विस्फूर्ज्जथुस्तत्समकालमेव करकापतनं भवति अतो दिव्यतेजःसंयोगेन करका जाता इत्यनुमीयत इति, केचित्तु बलवद्दिव्यतेजसाऽनुद्भूतरूपवत्तेजोविशेषो यदा जलान्निःसार्य्यते तदैव जलस्य द्रवत्वं नश्यति तादृशतेजोविशेषस्तु हिमकरकादिभिन्नेषु जलेषु सर्व्वदैवास्ति अनुद्भूतरूपवत्त्वात्तु तस्य न प्रत्यक्षमित्याहुः ॥ ९ ॥

* तत्रावस्फूर्ज्जथुरिति क्वचित् पाठः ।

सू॰ वैदिकञ्च ॥ १० ॥

अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ ११ ॥

---

उ॰ अत्रैव प्रमाणान्तरमाह।

अपां मध्ये तेजोऽनुप्रवेश आगमसिद्ध एवेत्यर्थः तथाहि "आपस्ता अग्निं गर्भमादधीरन् या अग्निं गर्भं दधिरे-सुवर्णं" इत्यादि ॥ १० ॥

ननु विस्फूर्ज्जथुः कथमुत्पद्यते संयोगविभागौ शब्दयोगी तौ च नानुभूयेते इत्यत आह।

विस्फूर्ज्जथुरितिशेषः अद्भिः स्तनयित्नोः संयोगविभागौ निमित्तकारणीभूय स्तनयित्नोरेवाकाशेन संयोगादसमवायिकारणादाकाशे समवायिकारणे शब्दं गर्ज्जितं जनयतः। क्वचिच्च वायुबलाहकसंयोगविभागौ निमित्तकारणे बलाहकवियत्संयोगविभागावसमवायिकारणे, कर्म्मकार-

---

वि॰ दिव्यतेजःसंयोगे प्रमाणान्तरं दर्शयति।

वैदिकञ्च वाक्यं दिव्यतेजःसंयोगे लिङ्गं प्रमाणं, तदाकारञ्च "आपस्ता अग्निं गर्भमादधीरन् या अग्निं गर्भं दधिरे सुवर्णं" इत्यादि। १०।

ननु शब्दकारणस्याभिघातस्य विभागविशेषस्यचाननुभवात् विस्फूर्ज्जथुः कथमुत्पद्यते इत्यत्राह।

अपां जलानां संयोगात् अर्थाद्वायुना अभिघातात्, स्तनयित्नो र्मेघाच्च विभागात् विस्फूर्ज्जथु र्भवतीत्यर्थः। ११।

सू॰ पृथिवीकर्म्मणा तेजःकर्म्म वायुकर्म्म च व्याख्यातम् ॥ १२ ॥

---

उ॰ वाधिकारेऽपि प्रासङ्गिकमिदमुक्तम्, यद्वा मेघाकाशसंयोगे विभागे वा शब्दासमवायिकारणे कारणम् अपामेव नोदनाभिघातजनितं कर्म्मेति सूचितं कर्म्मण एवाधिकारप्राप्तत्वात् ॥ ११ ॥

भूकम्पं प्रत्यदृष्टवदात्मसंयोगः कारणमुक्तं तथैवाकस्मिकदिग्दाहहेतोस्तेजसः आकस्मिकवृक्षादिक्षोभहेतोश्च प्रभञ्जनस्य कर्म्म यत् संजायते तत्राप्यदृष्टवदात्मसंयोगोऽसमवायिकारणम्, वायुतेजसी समवायिकारणम्, अदृष्टं निमित्तकारणमित्यर्थः, कर्म्मशब्दस्य द्व्यावृत्ति र्मेघोल्कादिकर्म्मसूचनार्था ॥ १२ ॥

अदृष्टवदात्मसंयोगासमवायिकारणकं कर्म्मान्तरमाह।

---

वि॰ प्रसङ्गात् करकादिकमुक्त्वा पुनरदृष्टवदात्मसंयोगाधीनं कर्म्म प्रदर्शयति।

भूकम्पादेरदृष्टविशेषाधीनत्वकथनेन दिग्दाहादिजनकस्य तेजःकर्म्मणः वृक्षादिक्षोभजनकस्य वायुकर्म्मणश्च तदधीनत्वं व्याख्यातमित्यर्थः ॥ १२ ॥

एतादृशं कर्म्मान्तरं दर्शयति।

सू॰ अग्नेरूर्द्धज्वलनं वायोस्तिर्य्यक्पवनमणूनां मनसश्चाद्यं कर्म्मादृष्टकारितम्॥ १३॥

हस्तकर्म्मणा मनसः कर्म्म व्याख्यातम्॥ १४॥

---

उ॰ आद्यमिति सर्गाद्यकालीनमित्यर्थः, तदा नोदनाभिघातादीनामभावात् अदृष्टवदात्मसंयोग एव तत्रासमवायिकारणम् आद्यमूर्द्धज्वलनम् आद्यं तिर्य्यक्पवनमिति, इतरेषां ज्वलनपवनकर्म्मणां वेगासमवायिकारणकत्वमेव मन्तुमुचितं दृष्टे कारणे सत्यदृष्टकल्पनानवकाशात्॥ १३॥

अनाद्यं कर्म्माधिकृत्याह।

मुषलोत्क्षेपणादौ यथा प्रयत्नवदात्मसंयोगासमवायिकारणकं हस्तकर्म्म तथाऽभिमतविषयग्राहिणीन्द्रिये सन्निकर्षार्थं यन्मनसः कर्म्म तदपि प्रयत्नवदात्मसंयोगासमवायिकारणकमेव यद्यपीन्द्रियं मनो न साक्षात्प्रयत्नविषयस्तथापि मनोवहनाडीगोचरेण प्रयत्नेन मनसि कर्म्मोत्पत्तिर्द्रष्टव्या, नाड्यास्तु त्वगिन्द्रियग्राह्यत्वमङ्गीकर्त्तव्यम् अन्य-

---

व॰ पवनं गमनम्, आद्यमिति ज्वलनपवनयोरप्यन्वितम्, सर्गाद्यकालीनमिति तदर्थः, अदृष्टकारितमदृष्टवदात्मसंयोगासमवायिकारणकमित्यर्थः तदानीं कारणान्तरस्याभावादितिभावः॥१३॥

कर्म्मान्तरं दर्शयति।

अनाद्यानि मनःकर्म्माणि प्रयत्नाधीनान्येव यथा मुषलाद्युत्क्षेपणादौ हस्तकर्म्माणि, मनसोऽतीन्द्रियत्वेऽपि तद्वहनाड्याश्च-

---

* तिर्य्यग्गमनमिति क्वचित् पाठः।

सू० आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ १५ ॥

---

उ० या प्राणवहनाडीगोचरेण प्रयत्नेनाशितपीताद्यभ्यवहरणमपि न सम्भवेत् ॥ १४ ॥

ननु मनसि कर्म्म उत्पद्यत इत्यत्रैव न प्रमाणमत आह।

सुखदुःखे इत्युपलक्षणं ज्ञानप्रयत्नाद्यपि द्रष्टव्यं मनसो-वैभवं पूर्व्वमेव निराकृतम्, अणुत्वञ्च साधितम्, युगपज्ज्ञाना-नुत्पत्तिश्च मनसो लिङ्गमित्युक्तं तेन तत्तदिन्द्रियप्रदेशेन मनःसंयोगमन्तरेण सुखदुःखे न स्यातामेव यदि मनसि कर्म्म न भवेत् न भवेच्च पादे मे सुखं शिरसि मे वेदनेत्याद्या-कारोऽनुभव इत्यर्थः। यद्यपि मनःसन्निकर्षाधीनः सर्व्वो-ऽप्यात्मविशेषगुणस्तथापि सुखदुःखे तीव्रसंवेगितयाऽतिस्फु-टत्वादुक्ते ॥ १५ ॥

नन्वेवं यदि चपलं मनस्तदा चित्तनिरोधाभावाद्योगं

---

वि० गिन्द्रियग्राह्यत्वात् तद्गोचरप्रयत्नेन मनसः कर्म्म सम्भवति प्राणवहनाडीगोचरप्रयत्नेन प्राणादिक्रियाविशेषवत् ॥ १४ ॥

ननु मनसि कर्म्मोत्पादे किं मानमत आह।

आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् सुखदुःखे भवतः तथात्मना मनसः सन्निकर्ष इन्द्रियैश्च मनसः सन्निकर्षः अर्थेन विषयेण सह इन्द्रियाणां सन्निकर्षो विवक्षितः तथाच मित्रं दृष्ट्वा सुखं वैरिणं दृष्ट्वाच दुःखं भवति तादृशदर्शनञ्च न चक्षुर्मनोयोगमात्ममनो-योगञ्चान्तरेण तादृशयोगोऽपि न मनःक्रियामन्तरेणेति सिद्धं मनसः कर्म्म, सुखदुःखे इत्युपलक्षणम् आत्मविशेषगुणसामान्य-न्तु विवक्षितं सर्व्वेषात्ममनःसंयोगस्यासमवायिकारणत्वादिति।

सू॰ तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः ॥ १६ ॥

---

उ॰ विना नात्मसाक्षात्कारो नवा तमन्तरेण मोक्ष इति शास्त्रारम्भवैफल्यमत आह ।

विषयेष्वलम्प्रत्ययवत उदासीनस्य वहिरिन्द्रियेभ्यो व्यावृत्तं मनो यदात्मस्थमात्ममात्रनिष्ठं भवति तदा तत्कर्मानुगुणप्रयत्नाभावात् कर्म्म मनसि नोत्पद्यते स्थिरतरं मनो भवति स एव योगः चित्तनिरोधलक्षणत्वाद् योगस्य, तदनारम्भ इति मनसः कर्म्मानारम्भ इत्यर्थः, यद्वा तत्पदेन सुखदुःखे एवाभिधीयेते प्रक्रान्तत्वात्, दुःखाभाव इति दुःखाभावसाधनत्वाद्योग एव दुःखाभावः "अन्नं वै प्राणः" इति वत्, यद्वा दुःखस्याभावो यत्रेति बहुव्रीहिः, शरीरस्येति शरीरावच्छिन्नस्यात्मनः, स योग इति प्रसिद्धिसिद्धतया तत्पदम्, अयं स योगः । यद्वात्मपदेनात्र प्राण उच्यते उपचारात्

---

वि॰ "चञ्चलं हि मनः कृष्ण प्रमाथिबलवद्दृढम्" इत्याद्यागमा अपि मनसः कर्म्मणि मानमिति । १५ ॥

ननु मनश्चेत् चञ्चलस्वभावं तदा तस्य निरोधो न सम्भवति तथाच योगमन्तरेणात्मसाक्षात्कारस्यासम्भवादपवर्गस्यासम्भवेन मननशास्त्रं निष्प्रयोजनमापद्येतेत्याशङ्कायामाह ।

आत्मस्थे मनसि षडङ्गयोगेन इन्द्रियादिकं परित्यज्य मनो यदा आत्ममात्रे तिष्ठति तदा तदनारम्भः तस्य मनःकर्म्मण अनारम्भः अनुत्पादः, तदा मनो निश्चलं भवति, तदवस्थायां शरीरस्य

उ० प्राणानुमेयत्वादात्मनः तथाच प्राणवहनाख्यं कर्म्मणा प्राणकर्म्मापि जायते यदा जीवनयोनियत्नवदात्मप्राणसंयोगासमवायिकारणकं प्राणकर्म्म, जीवनयोनिश्च यत्नोऽतीन्द्रियः प्राणसञ्चारानुमेयः कथमन्यथा सुषुप्त्यवस्थायामपि श्वासप्रश्वासगतागतमितिभावः ॥ १६ ॥

ननु प्राणस्य मनसश्च कर्म्म यदि प्रयत्ननिमित्तकं तदा प्राणमनसी यदा मरणावस्थायामपसर्पतः देहाद्बहिर्भवतः देहान्तरोत्पत्तौ तत्र पुनरुपसर्पतः प्रविशतः तत्र प्रयत्नाभावात्तदुभयमनुपपन्नम्, अशितपीतं भक्तपानीयादि तस्यापि शरीरावयवोपचयहेतु र्यः संयोगस्तज्जनकं यत् कर्म्म यच्च गर्भवासदशायां संयोगविभागजनकं कर्म्म तेषां कथमुत्पत्तिरत आह।

---

वि० दुःखाभावः शरीरावच्छेदेन दुःखं न जायते, स आत्मना वाह्यव्यावृत्तमनसः संयोगो योग उच्यते।

"वाताहतं तथाचित्तं तस्मात्तस्य न विश्वसेत्।
अतोऽनिलं निरुन्धीत चित्तस्य स्थैर्य्यहेतवे॥
मरुन्निरोधनार्थाय षडङ्गं योगमभ्यसेत्।
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा॥
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट्" ॥

इति स्कान्दपुराणवचनमपि तथा प्रमापयति।

तथाच तदनन्तरमात्मसाक्षात्कारोदयेन मिथ्याज्ञानादिनिवृत्तौ सत्यामपवर्गो निष्प्रत्यूह एवेति न मननशास्त्रं निष्फलमितिभावः ॥ १६ ॥

अदृष्टाधीनं कर्म्मान्तरं दर्शयति।

सू० अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥ १७ ॥

तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः॥ १८॥

---

उ० अत्र नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकनिर्द्देशः, संयोगपदञ्च तत्कारणे कर्म्मणि लाक्षणिकम्, अपसर्पणं देहारम्भककर्म्मक्षये देहादेव प्राणमनसोरुत्क्रमणम्, उपसर्पणञ्च देहान्तरोत्पत्तौ तत्र प्राणमनसोः प्रवेशनम्, अशितपीतादिसंयोगहेतुश्च कर्म्म, कार्य्यान्तरं गर्भशरीरं तत्संयोगहेतुश्च यत् कर्म्म तत् सर्व्वमदृष्टवदात्मसंयोगासमवायिकारणकम्, इतिकारेण धातुमलकर्म्मणामप्यदृष्टवदात्मसंयोगासमवायिकारणकत्वं सूचयति ॥ १७ ॥

ननु देहान्तरोत्पत्तेरावश्यकत्वेत्तदा कथं मोक्ष इत्यत आह।

इदमत्राकूतं योगबलेनात्मतत्त्वसाक्षात्कारे सति तेन च

---

वि० अपसर्पणं मरणावस्थायां देहान्मनस उत्क्रमणम्, उपसर्पणं देहान्तरोत्पत्तौ तत्र मनसः प्रवेशः, अशितपीतयोरन्नजलयोः संयोगाः कार्य्यान्तराणामिन्द्रियप्राणानां देहेन सह संयोगाश्च यस्मात् कर्म्मणो भवन्ति इति पूरणीयम् इति एतानि कर्म्माणि अदृष्टकारितानि अदृष्टवदात्मसंयोगासमवायिकारणकाणि। ॥ १७ ॥

ननु देहप्रवाहस्यानाद्यनन्तत्वादपवर्गस्यासम्भवत्वदवस्थ एवेत्यत आह।

तदभावे तस्यादृष्टस्याभावे सति प्रारब्धेतरादृष्टानामात्मना-

उ० तत्त्वज्ञानमिथ्याज्ञाने ध्वस्ते तन्निबन्धनानां रागद्वेषमोहानां दोषाणामपायात् प्रवृत्तेरपाये तन्निबन्धनस्य जन्मनोऽपाये तन्निबन्धनस्य दुःखस्यापाय इति तावदनुमतिः, तत्र योगिनो योगजधर्म्मबलेन तत्तद्देशकालतत्तत्तुरगमतङ्गजभुजङ्गविहङ्गमादिदेहोपभोग्यसुखदुःखासाधारणकारणधर्म्माधर्म्मनिकुरम्बमालोच्य तत्तत्कायव्यूहं निर्म्माय भोगेन पूर्व्वोत्पन्नधर्म्माधर्म्मयोः क्षयः निवृत्तदोषस्य धर्म्माधर्म्मान्तरानुत्पत्तावपूर्व्वशरीरान्तरानुत्पत्तौ पूर्व्वशरीरेण सहात्मनो यः संयोगाभावः स एव मोक्षः तदभाव इति अनागतशरीरानुत्पादे संयोगाभाव इत्यर्थः। नन्वियमवस्था प्रलयसाधारणीत्यत आह अप्रादुर्भाव इति यदनन्तरं शरीरादेः पुनः प्रादुर्भावो न भवतीत्यर्थः, स मोक्ष इति तस्यामवस्थायां यो दुःखध्वंसः स मोक्ष इत्यर्थः॥ १८॥

ननु तमसोऽपि द्रव्यस्य कर्म्म दृश्यते चलति छायेतिप्रत्ययात् तत्र न प्रयत्नो न वा नोदनाभिघातौ न वा

---

वि० साक्षात्कारेण प्रारब्धानाञ्च भोगेन क्षये सतीति यावत्, संयोगाभावः देहप्रवाहसम्बन्धस्य विच्छेदस्तदनन्तरञ्च अप्रादुर्भावः अर्थाद्दुःखस्यानुत्पत्तिर्देहरूपस्याहष्टरूपस्य च कारणस्य विरहादिति तदात्मैव मोक्षः अपवर्गः सम्भवतीति नापवर्गस्य प्रमविषयत्वमानवेतिभावः॥ १८॥

नन्वन्धकारस्यापि कर्म्मानुभूयते नीलं तमश्चलतीतिप्रतीतेस्तत्र

सू० द्रव्यगुणकर्म्मनिष्पत्तिवैधर्म्म्यादभावस्तमः॥१९॥

उ० गुरुत्वद्रवत्वे न वा संस्कारस्तथाच निमित्तान्तरं वक्तव्यं तच्च नानुभूयमानमित्यत आह।

एतेन नवैव द्रव्याणीत्यवधारणमप्युपपादितं द्रव्यनिष्पत्तिस्तावत् स्पर्शवद्द्रव्याधीना न च तमसि स्पर्शोऽनुभूयते, न चानुद्भूत एव स्पर्शः रूपोद्भवे स्पर्शोद्भवस्यावश्यकत्वात्। पृथिव्यामयं नियमः तमस्तु दशमं द्रव्यमिति चेन्न द्रव्यान्तरस्य नीलरूपानधिकरणत्वात् नीलरूपस्य च गुरुत्वनान्तरीयकत्वात् रसगन्धनान्तरीयकत्वात्। यथाकाशं शब्दमात्रविशेषगुणं तथा तमोऽपि नीलरूपमात्रविशेषगुणं स्यादिति चेन्न चाक्षुषत्वविरोधात् यदि हि नीलरूपवन्नीलं रूपमेव वा तमः स्यात् वाह्यालोकप्रग्रहमन्तरेण चक्षुषा न गृह्येत ॥ १९ ॥

---

वि० च कर्म्मणि किमसमवायिकारणं कर्म्मासमवायिकारणत्वेनोक्तानां नोदनादीनामन्यतमस्य तत्राभावादित्याशङ्कायामाह।

तमोऽभाव एव नतु भावः द्रव्यगुणकर्म्मनिष्पत्तिवैधर्म्म्यात् निष्पन्नानां जन्यानां द्रव्यगुणकर्म्मणां वैधर्म्म्यादित्यर्थः इदमिह इति न्यायात्, जन्यद्रव्यं हि अवयवारब्धं भवति तमस्तु नावयवारब्धमालोकापसरणे सहसैवानुभूयमानत्वात् स्पार्शनाभावाच्च पृथिव्यामुद्भूतरूपस्योद्भूतस्पर्शव्याप्यत्वेनोद्भूतरूपस्य तमसि स्वीकर्त्तुमनुद्भूतस्पर्शस्वीकारस्यासम्भवात् गन्धशून्यत्वाच्च न तमः पृथिवी नापि जलादावस्यान्तर्भावः नीलरूपवत्त्वस्वीकारात् अतएव न गुणे न वा कर्म्मण्यस्यान्तर्भावः आलोकनिरपेक्षचाक्षुषविषय

सू॰ तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥

दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥

---

उ॰ तर्हि गतिप्रतीतिः किन्निबन्धनेत्यत आह।

गच्छता द्रव्यान्तरेणावृते तेजसि पूर्व्वदेशानुपलम्भादग्रिमदेशे चोपलम्भात्तेजोऽभावस्य गच्छद्द्रव्यसाधर्म्याद्गतिभ्रमो नतु वास्तवी तत्र गतिरित्यर्थः अन्वयव्यतिरेकाभ्यां तथा प्रतीतेः, उद्भूतरूपवद्यावत्तेजःसंसर्गाभावस्तमः ॥ २० ॥

एवं दिक्सूत्रकं प्रासङ्गिकं तमःप्रकरणं समाप्य कर्म्मशून्यताप्रकरणमाह।

चकारादात्मसंग्रहः क्रियावता वैधर्म्यं दिगादीनाममूर्त्तत्वं मूर्त्त्यनुविधानात् क्रियायाः ॥ २१ ॥

---

वि॰ त्वाच, तर्हि द्रव्यान्तरं भवतु, आवश्यकतेजोऽभावेनैव तमःप्रतीत्युपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वादिति ॥ १९ ॥

ननु तमसोऽभावरूपत्वे कथं चलतीति प्रतीतिरित्यत आह।

द्रव्यान्तरेण तेजस आवरणादाच्छादनात्, यतः स्थानादालोकोऽपसरति तत्रैव तमश्चलतीतिप्रतीतिर्भवति तादृशप्रतीतिश्चालोकापसरणौपाधिकी भ्रान्तिरेव नहि भ्रमाद्वस्तुसिद्धिरिति अभावस्तम इति सङ्क्षेपः ॥ २० ॥

कर्म्मशून्यताप्रकरणमारभते।

क्रियावद्वैधर्म्यं परममहत्परिमाणमपकृष्टपरिमाणराहित्यं

सू० एतेन कर्म्माणि गुणाश्च व्याख्याताः ॥ २२ ॥
निष्क्रियाणां समवायः कर्म्मभ्योनिषिद्धः ॥ २३ ॥

---

उ० गुणकर्म्मणोर्निष्क्रियत्वमाह।

एतेनेति· क्रियावद्वैधर्म्म्येणेत्यर्थः क्रियावद्वैधर्म्म्यममूर्त्तत्वं गुणकर्म्मणोरपीति ते अपि निष्क्रियत्वेन व्याख्याते इत्यर्थः ॥ २२ ॥

ननु गुणकर्म्मणी यदि निष्क्रिये तदा ताभ्यां द्रव्यस्य कथं सम्बन्धः, संयोगसम्बन्धः सम्भाव्येत स च कर्म्माधीन एवेत्यत आह।

निष्क्रियाणां गुणकर्म्मणां समवाय एव सम्बन्धः स च कर्म्मभ्यो निषिद्धः तस्य सम्बन्धस्य उत्पत्तिरेव नास्ति दूरे तु कर्म्माधीनतेत्यर्थः ॥ २३ ॥

---

वि० वा, चकार आत्मसमुच्चायकः, एतानि द्रव्याणि निष्क्रियाणीत्यर्थः ॥ २१ ॥

निष्क्रियान्तरमाह।

एतेन क्रियावद्वैधर्म्म्येण चपलत्वपरिमाणशून्यत्वेन निर्व्वेगत्वेन वा, व्याख्याताः निष्क्रियत्वेन कथिताः, चकारात् सामान्यादिसंग्रहः ॥ २२ ॥

ननु गुणकर्म्मणो निष्क्रियत्वे तयोः सम्बन्धः कथं द्रव्ये भवति सम्बन्धस्य कर्म्माधीनत्वात् दृश्यते हि संयोगादेः कर्म्मणा द्वैधादौ सम्बन्धोत्पत्तिरित्यत आह।

निष्क्रियाणां गुणादीनां द्रव्ये समवायः सम्बन्धः सतु नित्य एवातः कर्म्मभ्यो निषिद्धः न जात इत्यर्थः ॥ २३ ॥

सू॰ कारणन्त्वसमवायिनो गुणाः ॥ २४ ॥

---

उ॰ ननु यद्यमूर्त्तत्वात् गुणाः कर्म्मसमवायिकारणं न भवन्ति तदा गुणे गुणाः कर्म्माणि च कथमुत्पद्यन्ते नहि समवायिकारणातिरिक्तत्वरूपेणापि कारणता संभवतीत्यत आह।

गुणा असमवायिकारणं नतु समवायिकारणमपि येन कर्म्माधाराः स्युः, सा चासमवायिकारणता क्वचित् कार्य्यैकार्थसमवायात् यथात्ममनःसंयोगस्यात्मविशेषगुणेषु संयोगविभागशब्दानां शब्दे, क्वचित् कारणैकार्थसमवायात् यथा कपालादिरूपादीनां घटादिरूपादिषु ॥ २४ ॥

---

वि॰ ननु गुणस्य कर्म्मशून्यत्वे तस्य कर्म्मकारणता कथं सम्भवति नहि पटशून्यस्य कपालस्य पटकारणता केनापि सम्भावितेत्यत आह।

गुणास्तु असमवायिनः कारणं तैस्तत्वादेकत्वं कारणानीत्यर्थः, तथाच गुणानां कर्म्मणि समवायिकारणताविरहेऽपि असमवायिकारणता निराबाधैव यथाऽवयवसंयोगानामवयव्यनाधारत्वेऽपि तदसमवायिकारणता यथावाऽवयवरूपादीनामवयविरूपाद्यनाधारत्वेऽपि तदसमवायिकारणता तथा गुणानां कर्म्मानाधारत्वेऽपि तदसमवायिकारणता न विरुद्धा समवायिकारणे समवायस्वसमवायिसमवायान्यतरसम्बन्धेन वृत्तित्वे सति कारणत्वस्यैवासमवायिकारणलक्षणत्वादितिभावः ॥ २४ ॥

सू॰ गुणैर्दिग् व्याख्याता ॥ २५ ॥
कारणेन कालः ॥ २६ ॥

---

उ॰ ननु इह कर्म्मोत्पद्यते इदानीं कर्म्मोत्पद्यते इत्यादिप्रतीतिबलात् दिक्कालावपि कर्म्मसमवायिकारणे एव कथमन्यथा तत्र तयोराधारतेत्यत आह।

यथा गुरुत्वादयो गुणा न कर्म्मसमवायिकारणममूर्त्तत्वात् तथा दिगपि न कर्म्मसमवायिकारणममूर्त्तत्वादेवेत्यर्थः, आधारता तु समवायितामन्तरेणापि, कुण्डे बदराणि, कुण्डे दधि, वने सिंहनाद इत्यादिवदुपपद्यत इति भावः ॥ २५ ॥

उक्तेनैवाभिप्रायेणाह।

निष्क्रियत्वेन व्याख्यात इति परिणम्यानुषङ्गः, कारणेनेति भावप्रधानो निर्द्देशः तेन निमित्तकारणत्वेनाधारमात्रं कर्म्मणः कालो नतु समवायीत्यर्थः ॥ २६ ॥

---

वि ननु प्राच्यां गच्छति इदानीं गच्छतीति प्रतीतौ कर्म्माधारतया दिक्कालयोर्भानात् कथं तौ निष्क्रियावत आह।

यथा गुणेषु क्रिया नास्ति अमूर्त्तत्वात् तथा दिश्यपि नास्ति प्राच्यां गच्छतीति प्रतीतेः प्राच्यां रौतीतिवत् दिक्कृतविशेषणता-सम्बन्धावच्छिन्नाधारतावगाहित्वादित्यर्थः ॥ २५ ॥

उक्तयुक्त्या कालस्यापि न कर्म्मसमवायित्वमित्याह।

कारणेन निमित्तकारणेन अभेदे तृतीया धान्येन धनवानित्यादिवत्, काल इति गुणैर्निष्क्रियत्वेन व्याख्यात इति लिङ्गवि-

उ० इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे पञ्चमाध्यायस्य द्वितीयाह्निकम् ॥ ※ ॥

समाप्तश्चायं पञ्चमाध्यायः।

---

वि० परिमाणेनानुषङ्गो बोध्यः तथाच यथा गुणानां निष्क्रियत्वमपकृष्टपरिमाणशून्यत्वात् तथा कालस्यापि इदानीं गच्छतीत्यादिप्रतीतिस्तु इदानीं रवीतीत्यादिप्रतीतिवत् कालिकसम्बन्धावच्छिन्नाधाराधेयभावमवगाहते नतु समवायसम्बन्धावच्छिन्नमिति सकलमकलङ्कम्॥ २६॥

इति श्री जयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-कृतायां कणादसूत्रविवृतौ पञ्चमाध्यायस्य द्वितीयमाह्निकम्॥ ※ ॥

समाप्तश्चायं पञ्चमाध्यायः।



सू॰ बुद्धिपूर्व्वा वाक्यकृतिर्वेदे ॥ १ ॥

---

उ॰ संसारमूलकारणयोर्धर्म्माधर्म्मयोः परीक्षा षष्ठाध्यायार्थः। धर्म्माधर्म्मौ च "स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" इत्यादिविधिनिषेधबलकल्पनीयौ विधिनिषेधवाक्ययोः प्रामाण्ये सति स्यातां, तत्प्रामाण्यञ्च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्व्वकत्वादुपपद्यते स्वतः प्रामाण्यस्य निषेधादतः प्रथमं वेदप्रामाण्यप्रयोजकगुणसाधनमुपक्रमते।

वाक्यकृतिर्वाक्यरचना सा बुद्धिपूर्व्वा वक्तृयथार्थवाक्यार्थज्ञानपूर्व्वा वाक्यरचनात्वात् नदीतीरे पञ्चफलानि सन्तीत्यस्मदादिवाक्यरचनावत्, वेद इति वाक्यसमुदाय इत्यर्थः तच्च समुदायिनां वाक्यानां कृतिः पक्षः, न चास्मदादिबुद्धिपूर्व्वकत्वेनान्यथासिद्धिः, "स्वर्गकामो यजेत" इत्यादा-

---

वि॰ सन्मनःकुमुदग्लानिग्लानिकृत् श्यामलः शशी।
उदेतु कोऽपि हृदयाकाशे मम तमोहरन्॥

"अथातोधर्म्मं व्याख्यास्यामः" इति सूत्रेण प्रतिज्ञातं परीक्षाख्यं धर्म्मस्य निरूपणमिदानीमारभमाणो धर्म्मस्य वेदप्रमाणकतया वेदस्य प्रामाण्योपपादकं गुणजन्यत्वं साधयति।

वेदे इति सप्तम्यर्थोघटकत्वं तस्य वाक्यकृतावन्वयः वाक्यरूपा या कृतिः कार्य्यमित्यर्थः एतेन मीमांसकाभिमतं शब्दनित्यत्वं निराकृतम्, वेदघटकं यद्वाक्यरूपं कार्य्यं तद्बुद्धिपूर्व्वं स्वार्थविषयकवक्तृयथार्थज्ञानरूपगुणजन्यं प्रमाणशब्दत्वात् महाभारताद्यन्तर्गतवाक्यवदित्ययमनुमानाकारः वेदत्वञ्च शब्दतदुपजीवि-

सू॰ ब्राह्मणे संज्ञाकर्म्म सिद्धिलिङ्गम् ॥ २ ॥
बुद्धिपूर्व्वा ददातिः ॥ ३ ॥

---

उ॰ विष्टसाधनतायाः कार्य्यताया वा अस्मदादिबुद्ध्यगोचरत्वात्, तेन स्वतन्त्रपुरुषपूर्व्वकत्वं वेदे सिध्यति, वेदत्वञ्च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् ॥ १ ॥

प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्व्वकत्वमाह।

ब्राह्मणमिह वेदभागस्तच यत् संज्ञाकर्म्म नामकरणं तत् व्युत्पादकस्य बुद्धिमाक्षिपति यथा लोके लम्बकर्ण-दीर्घनास-लम्बग्रीवादिनामकरणम् ॥ २ ॥

प्रकारान्तरमाह।

उ॰ "स्वर्गकामो गां दद्यात्" इत्यादौ यद्दानप्रतिपादनं

---

वि॰ प्रमाणातिरिक्तप्रमाणागम्यार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् ऋग्यजुःसामाथर्व्वान्यतमत्वं वा ॥ १ ॥

इतोऽपि बुद्धिपूर्व्वकाणि वेदवाक्यानीत्याह।

ब्राह्मणे वेदभागविशेषे यत् संज्ञाकर्म्म संज्ञारूपं कार्य्यं तत् सिद्धिलिङ्गं संज्ञाकर्त्तुर्वाक्यार्थबोधस्य लिङ्गम्, यथा लोके लम्बकर्णादिनामकरणं कर्त्तुस्तदर्थबोधस्य लिङ्गमिति ॥ २ ॥

प्रकारान्तरेण दर्शयति।

"अमावास्यायां पितृभ्यो दद्यात्" इत्यादौ यद्दानप्रतिपादनं तद्दानेष्टसाधनताज्ञानाधीनमिति ददातिरिति धातुबोधकस्य तदर्थपरत्वम् ॥ ३ ॥

सू॰ तथा प्रतिग्रहः ॥ ४ ॥

आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥ ५ ॥

---

उ॰ तद्दानेष्टसाधनताज्ञानजन्यं ददातिरिति धातुनिर्द्देशो धात्वर्थं दानमुपलक्षयति ॥ ३ ॥

प्रमाणान्तरमाह।

प्रतिग्रहप्रतिपादिका अपि श्रुतयो बुद्धिपूर्व्विकाः प्रतिग्रहपदं स्वविषयां श्रुतिमुपलक्षयति तेन भूम्यादिप्रतिग्रहप्रतिपादिकाः श्रुतयः प्रतिग्रहीतुः श्रेयःसाधनतापराः कृष्णसारचर्म्मादिप्रतिग्रहप्रतिपादिकाः श्रुतयः प्रतिग्रहीतुरनिष्टसाधनताबोधिकाः नचेष्टानिष्टसाधनते अर्व्वाचीनपुरुषबुद्धिगोचरौ भवितुमर्हतः ॥ ४ ॥

इदानीं "शास्त्रदेशितं फलमनुष्ठातरि" इति जैमिनीयं सूत्रं संवादयन्नाह।

आत्मान्तरगुणानां यागहिंसादिपुण्यपापानाम् आ-

---

वि॰ अन्यदपि दर्शयति।

प्रतिग्रहपदेन तद्घटितवाक्यमुपलक्षयति "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्ज्जयेत्" इत्यादिवाक्यं वक्तृतदर्थज्ञानं साधयति यद्यपि प्रथमसूत्रेणैतत् सर्व्वं गतार्थं तथापि कतिपयधर्म्मप्रदर्शनार्थमेतावानारम्भः ॥ ४ ॥

धर्म्मादेः सामानाधिकरण्येन स्वर्गादिसाधनत्वं दर्शयति।

आत्मान्तरस्य गुणानां पुण्यपापानामात्मान्तरे अकारणत्वात् स्वर्गादिफलस्येति शेषः "शास्त्रदेशितं फलमनुष्ठातरि" इति

उ० त्मान्तरे यौ सुखदुःखात्मकौ गुणौ तयोरकारणत्वात् एवञ्च प्रत्यात्मनियताभ्यामेव धर्म्माधर्म्माभ्यां सुखदुःखे न व्यधिकरणाभ्यामन्यथा येन यागहिंसादिकं न कृतं तस्य तत्फलं स्यादिति कृतहानिरकृताभ्यागमश्च प्रसज्येत, ननु नायं नियमः पुत्रेष्टिपितृयज्ञादौ व्यभिचारात् तथाहि पुत्रेण कृतस्य श्राद्धादेः पितरि फलश्रवणात् पित्रा च कृतायाः पुत्रेष्टेः पुत्रे फलश्रवणात्, न च स्वर्गभागिपितृकत्वस्य तेजस्विपुत्रकत्वस्य च फलस्य पुत्रपितृगामितया सामानाधिकरण्यमेवेति वाच्यं श्रुतिविरोधात् पितृतृप्त्यादेः पुत्रतेजस्वितादेरेव फलस्य श्रवणात् फलान्तरस्य च गौरवपराहतत्वात्, अस्तु तर्ह्यपूर्व्वं फलं कर्त्तरि, स्वर्गस्तु पितरीति चेन्न व्यापारस्य फलसामानाधिकरण्यनियमात् अन्यथा श्राद्धानन्तरं मुक्ते पुत्रे पितुः स्वर्गो न स्यात्, नस्यादिति चेन्न मुक्ते पितरि साङ्गादपि श्राद्धात् फलं न स्यादिति तुल्यत्वात् नैवं "शास्त्रदेशितं फलमनुष्ठातरि" इत्यस्यौत्सर्गिकत्वात् क्वचिद्बलवता

---

वि० जैमिनीयतन्त्रोक्तं सूत्रमेवं पूरणीयमन्यथा पञ्चम्या अन्वयानुपपत्तेरिति तथाच यागहिंसादिकार्य्ययोर्धर्म्माधर्म्मौ प्रति फलीभूतसुखदुःखे प्रति च स्वानुकूलकृतिमत्त्वसम्बन्धेन हेतुता धर्म्माधर्म्मयोश्च सुखदुःखे प्रति समवायेनैवेतिभावः, न च गयाश्राद्धादितः पितृगतं पुत्रेष्ट्यादितः पुत्रगतं फलं न स्यात् तयोः कर्म्मकर्तृत्वाभावादिति वाच्यं कारकतावच्छेदकसंसर्गघटककृतिमत्त्वस्य फलभागितयोद्देश्यत्वसम्बन्धेन विवक्षितत्वात् निष्कामकृतकर्म्मणोऽपि

उ॰ बाधकेनापोद्यत्वात् प्रकृते च पितृपुत्रगतफलश्रवणस्यैव बाधकत्वात्, तथा सत्यतिप्रसङ्ग इति चेन्न तादृशश्रुतेरेवातिप्रसङ्गनिवारकत्वात्। यत्तु महादानादौ स्वर्गमात्रमेव फलं तच्च यदुद्देशेन क्रियते तद्गतमपि फलं जनयतीति तत्तुच्छं तत्रोत्सर्गे बाधकाभावात् बाधकाभावसहितोत्सर्गस्य नियमत्वात् राजादीनामुपवासाद्यनुष्ठानानापत्तेः परद्वारैव तत्तत्कर्म्मणां स्वगतफलमुद्दिश्यानुष्ठानसम्भवात्, सम्यग्गृहस्थाश्रमपरिपालनस्य ब्रह्मलोकावाप्तिरूपे च फले नियम एव प्रातिस्विकफलाभिप्रायेण ह्युत्सर्गाभिधानात्, वृत्तिकारास्तु “शास्त्रदेशितम्” इत्यादिर्नियम एव पित्रादीनान्तु यत्फलं तच्छ्राद्धादौ भोजितानां ब्राह्मणानामाशीर्म्मन्त्रानुभावात्, “कृतार्थास्ते पितरो भूयासुः” इति पितृयज्ञे पुत्रेष्टौ तु तदनुष्ठानाद्दत्विजामाशीर्दानात् “तेजस्वी वर्चस्व्यन्नादस्ते पुत्रो भूयात्” इत्यादेः, आङ्गिकमन्त्रपाठादिव सर्पदष्टस्य विषापहरणमित्याहुः ॥ ५ ॥

---

वि॰ मोक्षरूपफलभागितया उद्देश्यत्वं कर्त्तरि निष्प्रत्यूहमेव, श्राद्धपुत्रेष्ट्यादिस्थले फलभागिनयोरुद्देश्यत्वं न कर्त्तुः किन्तु पितापुत्रयोरिति न काऽप्यनुपपत्तिरेवमन्यथाप्यूह्यम्। केचित्तु “शास्त्रदेशितं फलमनुष्ठातरि” इत्युत्सर्गः श्राद्धादिफलबोधकवाक्यन्तु तदपवादकमित्याहुः, वृत्तिकृतस्तु पितृतृप्त्यादिफलं न श्राद्धादेः किन्तु तत्र भोजनादिना तुष्टानां ब्राह्मणानामाशीर्व्वचनस्यैव, विषहारकमन्त्रस्य विषहरणवत्, श्राद्धादेः फलन्तु भोज्यभोजनदानत्यादिरूपं कर्त्तुरेव तस्य निष्कामत्वे मोक्षस्यैव फलत्वमित्याहुः कर्त्तु-

सू० तद्दुष्टभोजने न विद्यते ॥ ६ ॥
दुष्टं हिंसायाम् ॥ ७ ॥

---

उ० अदुष्टानां यथाशास्त्रमनुवर्त्तमानानां भोजनात्तृप्तानामाशीर्दानात् तत्फलं नतु दुष्टानां पात्रत्वेन निषिद्धानामपि कुण्डगोलकप्रभृतीनामित्याह।

तदित्याशीर्दानफलं परामृशति दुष्टा ब्राह्मणाः पात्रानधिकारिणो यत्र श्राद्धे भोज्यन्ते तत्र पितरि तत्फलं न विद्यते न भवतीत्यर्थः श्राद्धफलमेव वा न भवति पितरीत्यर्थः ॥ ६ ॥

के ते दुष्टा इति दुष्टलक्षणमाह।

हिंसायामिति निषिद्धकर्म्ममात्रोपलक्षणम्, तेन निषिद्धे कर्म्मणि प्रवृत्तं पुरुषं दुष्टं विजानीयादित्यर्थः ॥ ७ ॥

---

वि० मुक्तत्व इव उद्देश्यस्य मुक्तत्वेऽपि कर्म्म फलं न जनयतीति विभावनीयम् ॥ ५ ॥

सम्यगनुष्ठितश्राद्धादिकर्म्मभ्य एव धर्म्मरूपं फलं भवति नान्यथेत्याह।

तत् साङ्गश्राद्धादिफलं निमन्त्रितदुष्टब्राह्मणभोजनस्थले न भवति तत्र कर्म्मणो यथाविध्यनिष्पत्तेरित्यर्थः ॥ ६ ॥

दुष्टाः के इत्याकाङ्क्षायामाह।

हिंसापदं निषिद्धकर्म्ममात्रपरम् तथाच निषिद्धकर्म्मणि आसक्तं ब्राह्मणं दुष्टं विद्यादित्यर्थः ॥ ७ ॥

सू० तस्य समभिव्याहारतोदोषः ॥ ८ ॥
तददुष्टे न विद्यते ॥ ९ ॥

---

उ० न केवलं दुष्टब्राह्मणस्य श्राद्धे निमन्त्रितस्य भोजनेन फलाभावः किन्तु पापमपि भवतीत्याह।

तस्य निषिद्धे कर्म्मणि प्रवृत्तस्य ब्राह्मणस्य समभिव्याहारात् एकपङ्क्तिभोजनसहशयनसहाध्ययनादिलक्षणात् दोषः पापमित्यर्थः॥ ८॥

ननु किमदुष्टसमभिव्याहारादपि दोष एव, नेत्याह।

तत् पापमदुष्टे यथाशास्त्रं व्यवहरमाणे ब्राह्मणे श्राद्धे भोजिते न विद्यते न भवतीत्यर्थः॥ ९॥

ननु सत्पात्राप्रतिलम्भे यत्र श्राद्धदानादौ प्रथमं दुष्टा-

---

वि० तादृशब्राह्मणसंसर्गात् पापमपि भवतीत्याह।

तस्य निषिद्धकर्म्मासक्तब्राह्मणस्य समभिव्याहारतः संसर्गात् दोषः पापं भवतीत्यर्थः संसर्गश्च यौनमौखश्रौतादिर्नानाविधः तस्य लघुत्वे पापस्य लघुत्वं गुरुत्वे तु पापस्य गुरुत्वमिति विशेषः॥ ॥ ८॥

निर्दोषब्राह्मणसंसर्गे तु न दोष इत्यर्थायातमपि स्पष्टार्थमाह।

तदिति बुद्धिस्थं पापं परामृशति निर्दोषब्राह्मणसंसर्गे तु पापं न भवतीत्यर्थः। ९॥

सू० पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥
समे हीने वा प्रवृत्तिः ॥ ११ ॥

---

उ० एव निमन्त्रिताः क्रमेणतु सत्पात्रप्रतिलम्भे किं विधेयमित्यत्राह।

श्राद्धे प्रतिग्रहे वा विशिष्टा यथाशास्त्रमनुवर्त्तमाना यदि लभ्यन्ते तदा निमन्त्रितानपि निन्द्यान् परिहृत्य तानेव भोजयेत् "न निमन्त्रितान् प्रत्याचक्षीत" इति तु सत्पात्रपरम्, निन्द्यांस्तु निमन्त्रितान् द्रविणदानादिना सन्तोषयेत्॥१०॥

यत्र स्वापेक्षया विशिष्टा न लभ्यन्ते श्राद्धदानादौ तत्राह।

समे स्वसदृशे, हीने स्वापेक्षया गुणादिना न्यूने, अदुष्टे पात्रे श्राद्धदानादौ प्रवृत्तिस्तेषामेवाशीर्द्दानात् पितरि सुखमित्यर्थः। निषिद्धानां परं त्यागो नत्वदुष्टानां समहीनानामपीतिभावः ॥ ११ ॥

---

वि० ननु यत्र दुष्टब्राह्मणेन श्राद्धादिकं सम्पादितं तत्र किं कर्त्तव्यमित्यत्राह।

पुन र्विशिष्टे अदुष्टब्राह्मणादिद्वारा श्राद्धादिसम्पादने प्रवृत्तिर्विधेया पूर्व्वकृतं श्राद्धन्तु पङ्कमेवेतिभावः। १० ।

ननु यत्र स्वापेक्षया उत्कृष्टो ब्राह्मणो न लभ्यते तत्र किं कर्त्तव्यमित्यत्राह।

समे श्राद्धकर्त्तृतुल्ये, हीने स्वापेक्षया न्यूने वा अदुष्टे ब्राह्मणे प्रवृत्तिः तेन श्राद्धं सम्पादनीयम्, दुष्टास्तु सर्व्वथैव त्याज्या इति भावः।११।

सू॰ एनेन हीनसमविशिष्टधार्म्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥

---

उ॰ श्राद्धे दानादौ च सम्प्रदानसादृगुण्येन धर्म्मोत्पत्तिमभिधाय तादृशादपादानादपि धर्म्मोत्पत्तिमतिदिशति।

यथोत्तरं धर्म्मोत्कर्षः, हीनादपि भूम्यादिप्रतिग्रहे, समादपि, स्वापेक्षया विशिष्टादपि, धार्म्मिकात् धर्म्म इत्यर्थः परस्वादानं परस्मात् स्वस्य धनस्यादानं प्रतिग्रहः। वृत्तिकारास्तु परस्वादानं चौर्य्यादिना परस्वग्रहणं व्याख्यातं तथाच श्रुतिः "शूद्रात् सप्तमे वैश्यादष्टमे क्षत्रियात् पञ्चदशे ब्राह्मणात् प्राणसंशये" इति, क्षुधापीडितमात्मानं कुटुम्बं वा रक्षितुं सप्त दिनान्याहारमप्राप्य शूद्रभक्ष्यापहारः कार्य्यः, एवं दश दिनान्याहारमप्राप्य वैश्यात्, पञ्चदश दिनान्याहारमप्राप्य क्षत्रियात्, प्राणसंशये ब्राह्मणात् भक्ष्यापहरणं न दोषायेत्याहुः ॥ १२ ॥

---

वि॰ श्राद्धदानादौ अपादानस्य सादृगुण्यादपि सम्प्रदानस्य धर्म्मविशेषो भवतीत्याह।

एतेन दानश्रणीयन्यायेन परस्वादानं प्रतिग्रहोऽपि व्याख्यातम् उक्तप्रायमेव तथाच न्यूनसमविशिष्टेभ्यः प्रतिग्रहः कर्त्तव्यस्तत्रापि फलतारतम्यं नतु कदाचिद्दुष्टादिति समुदितार्थः। परस्मात् स्वस्य धनस्यादानं परस्वादानं नतु चौर्य्यादिना परधनस्य ग्रहणं तस्य निषिद्धत्वात्, वृत्तिकारैस्तु प्राणसंशयादिसमये चौर्य्यस्यापि कर्त्तव्यताबोधकमिदं सूत्रमित्युक्तमिति ॥ १२ ॥

सू० तथा विरुद्धानां त्यागः ॥ १३ ॥
हीने परे त्यागः ॥ १४ ॥
समे आत्मत्यागः परत्यागोवा ॥ १५ ॥

---

उ० न केवलं प्राणसंशये परस्वादानं न निषिद्धं किन्तु तस्यां दशायामपहर्त्तुं ये न प्रयच्छन्ति तेषां बधोऽपि कार्य्यो न तावता धर्म्महानिरधर्म्मप्रादुर्भावोवेत्याह।

तस्यां दशायां विरुद्धानां विपरीतमाचरतां त्यागो बधः कार्य्य इत्यर्थः। तदुक्तम्,
"कर्म्मणा येन केनापि मृदुना दारुणेन वा।
उद्धरेद्दीनमात्मानं समर्थोधर्म्ममाचरेत्" इति॥ १३ ॥

ननु चाविशेषेणैव परस्य बधः, नेत्याह।

यदि स्वस्माद्धीनः परो भवति योऽपहर्त्तुं न ददाति तस्य शूद्रादेस्त्यागो बधः॥ १४ ॥

सममधिकृत्याह।

यदि स्वसदृशो ब्राह्मण एव विरोधी भवति तदात्मन

---

वि० कानिचिन्निन्दितकर्म्माण्यपि पापं नोत्पादयन्तीत्याह।

विरुद्धानां हन्तुमुद्यतानां त्यागो बधस्तथा न निषिद्ध इत्यर्थः
"आततायिनमायान्तं हन्यादेवाविचारयन्" इति वचनात्॥ १३॥

तत्रापि विशेषमाह।

हीने स्वापेक्षया हीनवर्णे परे शत्रौ त्यागो बध इत्यर्थः॥ १४॥
अहीने शत्रौ किं कर्त्तव्यमित्यत्राह।

समे स्वसमानवर्णे समगुणे च परे इत्यनुषञ्जनीयम् आत्मत्यागः

सू० विशिष्टे आत्मत्याग इति ॥ १६ ॥

---

उ० एवोपवासादिना त्यागोऽवसादः कर्त्तव्यः, यदि स्वस्य कुटुम्बस्य वा रक्षाप्रकारो न दृश्यते विरोधी च समो भवति तदा तस्यैव त्यागो बध इत्यर्थः ॥ १५ ॥

तत् किं स्वापेक्षया यदि विशिष्टो भवति विरोधी तदा तस्यापि बध एव कार्य्यः, नेत्याह।

स्वापेक्षया विशिष्टे वेदाध्ययनादिना उत्कृष्टे विरोधिनि आत्मन एव त्यागो विधेयः प्राणसंशये सत्यप्यात्ममरणमे-

---

वि० आत्मावसादः कर्त्तव्यः तत्रापि तादृशपरो यदि पुत्रादिसहितं तं हन्तुमुद्यतस्तदा समस्यापि बधः कार्य्य इति। यद्वा

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा।
क्षेत्रदारापहारी च षडेते आततायिनः"॥

इति वचनोक्तानामाततायिनां धनक्षेत्राद्यपहारकेषु आत्मत्यागः आत्मधनादित्यागः अग्निदादीनां हन्तुमुद्यतानां पुनर्बध इत्यर्थः॥ ॥ १५ ॥

स्वापेक्षया उत्तमवर्णे गुणाधिके आततायिनि किं कर्त्तव्यमित्यत आह।

विशिष्टे स्वापेक्षया उत्तमवर्णे गुणाधिके च वैरिणि आत्मत्यागः आत्मावसाद एव कार्य्यो नतु विद्यागुणसम्पन्नब्राह्मणस्य वैरिणोबध इत्यर्थः। न च

"गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्"॥

इति वचनेन विरोध इति वाच्यं तस्य कैमुतिकन्यायोपलम्भ-

उ॰ वाभिप्रेयात् नतु ब्राह्मणं हन्यादित्यर्थः। इत्याह्निक-
परिसमाप्तौ ॥ १६ ॥

इति शाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्य प्रथ-
माह्निकम्॥ * ॥

---

वि॰ ष्ठतया मिताक्षराकारै र्व्याख्यातत्वात्, अतएव "पापमेवाश्र-
येदस्मान् हत्वैतानाततायिनः" इति भगवद्गीतावचनमपि
संगच्छते, पूर्व्वसूत्रे समे इति हयो र्ब्राह्मणत्वे हतिबोध्यं तत्रापि
परत्यागो वेति पारिभाषिकवधपरम्

"वपनं द्रविणादानं स्थानान्निर्यापणं तथा।
एषहि ब्रह्मबन्धूनां बधोनान्योऽस्ति दैहिकः" ॥

इतिवचनादधिकमन्यत्रानुसन्धेयम् आह्निकसमाप्तिसूचनायेति-
कारः॥ १६ ॥

इति श्री जयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-कृतायां कणा-
दसूत्रविवृतौ षष्ठाध्यायस्य प्रथमाह्निकम्॥ * ॥

सू॰ दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युद-
याय॥ १॥

---

उ॰ एवं पूर्व्वाह्निके वैदिकी प्रमा गुणजन्येति तदुत्पत्तौ गुणाभिधानम्, "शास्त्रदेशितं फलमनुष्ठातरि" इति विवेचनम्, निषिद्धाचरणेऽपि प्रत्यवायानुत्पत्तिः कस्याञ्चिद्दशायामित्यस्य विवेचनञ्च वृत्तमधुना "यतोऽभ्युदयनिःश्रेयससिद्धिः" इति द्वितीयं सूत्रं व्याचिख्यासुर्विशेषतोधर्मोत्पत्तिपरीक्षायां वर्त्तिष्यमाणायामाह।

दृष्टप्रयोजनानि कृषिवाणिज्यराजसेवादीनि, अदृष्टप्रयोजनानि यागदानब्रह्मचर्य्यादीनि, एतेषां कर्म्मणां मध्ये यत्र दृष्टं प्रयोजनं नोपलभ्यते तत्रादृष्टं प्रयोजनं कल्पनीयम्, तच्चाभ्युदयाय तत्त्वज्ञानाय। यद्वा अभ्युदयायेति चतुर्थी प्रथमार्थे तेन फलमभ्युदय इत्यर्थः, अदृष्टं फलमपूर्व्वमेव तद्यदि योगजं तदाऽभ्युदय आत्मसाक्षात्कारः

---

वि॰ इदानीं विशेषतो धर्म्मपरीक्षार्थं कर्म्मफलं विवेचयति।

दृष्टादृष्टानि प्रयोजनानि येषां कर्म्मणां तन्मध्ये दृष्टाभावे दृष्टप्रयोजनाभावे अभ्युदयाय स्वर्गाय स्वर्गफलकं यत् प्रयोजनं धर्म्मरूपं तदेव कल्पनीयम्। दृष्टप्रयोजनानि कर्षणवीजवपनदोहनपचनादीनि, अदृष्टप्रयोजनानि यागदानहोमार्चनादीनि, यागादीनां दृष्टप्रयोजनासम्भवात्। नच यागादौ दृष्टं दुःखमेव फलम्, तस्य प्रयोजनत्वाभावेन यागादेरननुष्ठानापत्तेः, नापि पूजाख्यातिरूपं दृष्टं फलम्, तदप्रेप्सुभिरपि यागाद्याचरणात्,

सू॰ अभिषेचनोपवासब्रह्मचर्य्यगुरुकुलवासवानप्र-

उ॰ यदि यागदानादिजं तदाऽभ्युदयः स्वर्गः, तत्रापि यथा दोग्धि पचतीत्यादिक्रिया सद्यःफलिका, वपति कर्षतीत्यादिक्रियाच विलम्बभाविफला, तथा यजति ददाति ब्रह्मचर्य्यं चरतीत्यादिक्रिया तावत् सद्यःफलिका न भवति तादृशस्य फलस्यानुपलम्भेः। न च धार्म्मिकतया ख्यानालाभादिकमेव फलम्, प्रच्छन्नं ब्रह्मचर्य्यादि चरतां तत्फलानुद्देशात् तस्माच्चिरभाविस्वर्गादिकमेव फलं तच्चाशुतरविनाशिन्याः क्रियायाः न साक्षादित्यान्तरालिकं क्रियाफलयोः समानाधिकरणमपूर्व्वं पर्य्यवस्यति ॥ १ ॥

अदृष्टफलानि कर्म्माणि परिसंख्यष्टे।

अदृष्टायेत्यदृष्टलक्षणाय फलाय अदृष्टद्वारा स्वर्गापव-

---

वि॰ नापि यागादीनां निष्फलत्वम्, सर्व्वेषां परलोकार्थिनां तेषु प्रवृत्त्यनुपपत्तेः। न च केनचित् स्वर्गफलकतया यागादिकं प्रकल्प्य परप्रतारणार्थं स्वयमनुष्ठाय धर्ष्षिताः लोका यागादिषु प्रवर्त्तन्ते वस्तुतो यागादिकर्म्माणि निष्फलान्येवेति वाच्यं परप्रतारणार्थं बहुवित्तव्ययायाससाध्ययागाद्यनुष्ठानस्यासम्भवात् क एवं लोकोत्तरः यः परप्रतारणामात्रार्थं बहुवित्तव्ययायासोपवासादिनात्मानमवसादयेत् तस्मात् स्वर्गादिफलमवश्यं यागादेरङ्गीकार्य्यम्, तज्जनकत्वञ्चाशुविनाशिनां कर्म्मणां न सम्भवतीति तद्द्वारीभूतं सुकृतापूर्व्वमवश्यं कल्पनीयमिति संक्षेपः ॥ १ ॥

तत्रादृष्टफलकानि कानिचित्कर्म्माणि प्रदर्शयति।

एतानि कर्म्माणि अदृष्टाय अदृष्टजनकानि। तत्र अभिषे-

सू० स्वयमदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चा-
दृष्टाय ॥ २ ॥

उ० गंलचणाय फलाय वा एतेनादृष्टफलकश्रौतस्मार्त्तसकल-कर्म्मोपसंग्रहः, तत्राभिषेचनं स्नानं "गङ्गायां स्नायात्" इत्यादिविधिविधेयम्, उपवासः "एकादशीमुपवसेत्" इत्यादिविधिविधेयः, ब्रह्मचर्य्यं सामान्यत एव धर्म्मसाधनम्, गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनमहानाम्न्यादिव्रतार्थः, वानप्रस्थं वयःपरिणामे वनं प्रस्थितानां यत् कर्म्म, यज्ञो राजसूयवाजपेयादिः, दानं "गां दद्यात्" इत्यादिविधिविधेयम्, प्रोक्षणं "व्रीहीन् प्रोक्षति" इत्यादिविधिविधेयम्, दिक् "प्राचीनप्रवणे यजेत" "प्राङ्मुखोऽन्नादि भुञ्जीत" इत्यादिविधिविधेया, नक्षत्रं श्राद्धादौ मघादि, मन्त्रः आपोहिष्ठेत्यादिः,कालः "मासि मासि वोऽशनम्" अमावास्यायामपराह्णे दद्यात् "ग्रीष्मे पञ्चतपाः" "वसन्तेऽग्नीनादधीत" इत्यादिविधिविधेयः, नियमो वर्णाश्रमिणां यथाशास्त्रमनुष्ठानम्, तदेवं धर्म्मस्य आत्मा समवायिकारणम्,

वि० चनमभिषेकोऽराज्ञाम्, उपवासः शिवरात्र्युपवासादिः, ब्रह्मचर्य्यमष्टविधमैथुनादिवर्ज्जनम्, गुरुकुलवासो ब्रह्मचारिणां वेदाध्ययनाद्यर्थः, वानप्रस्थं वयःशेषे वनप्रस्थितानां पुटपाकादिकर्म्म यज्ञो राजसूयादिः, दानमाषाढ्यादौ, प्रोक्षणं व्रीहिपश्वादीनाम्, दिक् प्राङ्मुखभोजनादि, नक्षत्रं मघाश्राद्धादि, मन्त्रः प्रणवगायत्र्यादिजपः, कालः चातुर्मास्यव्रतादिः, नियमाः शौचसन्तोषतपःस्वाध्या-

सू० चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥
भावदोषउपधाऽदोषोऽनपधा ॥ ४ ॥

---

उ० आत्ममनःसंयोगोऽसमवायिकारणम्, श्रद्धा स्वर्गादिलक्षण-प्रयोजनज्ञानञ्च निमित्तकारणमनुसन्धेयम् ॥ २ ॥

एवं धर्म्मसाधनमभिधाय अधर्म्मसाधनमपि समुच्चिन्व-न्नाह।

चतुर्णामाश्रमाणां समानं यद्धर्म्मसाधनं तत्तावत् पूर्व्वसूत्रेणैवोक्तमितिशेषः। उपधाः भावस्य श्रद्धायादोषाः अनुपधाः श्रद्धायाभावस्यादोषाः तेऽपि धर्म्माधर्म्मयोः साधनानि यथास्वमूहनीयानि उपधापदेनाधर्म्मसाधनानि सर्व्वाण्युपसंगृहीतानि ॥ ३ ॥

उपधानुपधे लक्षणतोविवेचयन्नाह।

भावः इच्छा रागः प्रमादोऽश्रद्धामदमानासूयाप्रभृ-तयो भावदोषा उपधापदेनोच्यन्ते, श्रद्धा मनःप्रसादोदे-

---

वि० येश्वरप्रणिधानानि, चकारादनुक्तानि श्रौतस्मार्त्तान्यपि ॥ २ ॥

प्रसङ्गादधर्म्मात्मकादृष्टसाधनमप्याह।

ब्रह्मचारिगृहिवानप्रस्थभिक्षुरूपेषु चतुर्षु आश्रमेषु विहितं यत्कर्म्म तत् चातुराश्रम्यं पूर्व्वमुक्तमितिशेषः। उपधा भावदोषाः अनुपधा भावादोषाश्च धर्म्माधर्म्मसाधनानीत्यर्थः ॥ ३ ॥

उपधादिलक्षणमाह।

कामक्रोधलोभमोहमदमात्सर्य्यादयो भावदोषा उपधाशब्द-

सू० यद्दिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचि ॥ ५ ॥

---

उ० शितकर्मानुष्ठानाध्यवसाय इतिकर्त्तव्यतापरिच्छेदस्यानुपधा, तदेतयोर्धर्माधर्मनिमित्तकारणत्वमुक्तम् ॥ ४ ॥

शुच्यशुचिनी चोपधानुपधे तत्र शुच्यशुचिनी विवेचयति ।

इष्टं श्रुत्या स्मृत्या च यद्रूपादिकं विहितं यस्य द्रव्यस्य तत्तथा तत्र रूपम् "अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति" "श्वेतं छागलमालभेत" इत्यादौ, प्रोक्षितं मन्त्रेणोदकसिक्तम्, अभ्युक्षितं विना मन्त्रमुदकसिक्तं चकारान्न्यायतो लब्धं तच्च "याजनाध्यापनप्रतिग्रहै र्ब्राह्मणो धनमर्ज्जयेदित्यादिनियमविधिबोधितम्" ॥ ५ ॥

अशुचिलक्षणमाह ।

---

वि० वाच्याः श्रद्धाऽप्रमादानालस्यमनःप्रसादादयोऽदोषा अनुपधाशब्दवाच्या इत्यर्थः ॥ ४ ॥

अनुपधाशब्देन शुच्यपि बोध्यते किं तत् शुचीत्याह ।

इष्टा श्रुतिस्मृतिविहिता रूपरसगन्धस्पर्शा यत्र द्रव्ये तत् यथा सोमक्रयादावारुण्यादि, प्रोक्षितं मन्त्रेण जलसिक्तम्, अभ्युक्षितं तूष्णीं जलसिक्तं चकारात् वाक्प्रशस्त याजनादिलब्धमूल्यक्रीतादीनां संग्रहः ॥ ५ ॥

एतद्विपरीतमशुचीत्याह ।

सू॰ अशुचीति शुचिप्रतिषेधः ॥ ६ ॥

अर्थान्तरञ्च ॥ ७ ॥

अयतस्य शुचिभोजनादभ्युदयो न विद्यते नि-

---

उ॰ यद्द्रव्यं शुचि तद्विपरीतमशुचीत्यर्थः अप्रशस्तरूपरस-गन्धस्पर्शममन्त्रप्रोक्षितमनभ्युक्षितं निषिद्धजलाभ्युक्षितं वा अन्यायागतम्, कृषिवाणिज्यागतं ब्राह्मणस्य द्रव्यमशुची-त्यर्थः ॥ ६ ॥

अशुच्यन्तरमाह ।

प्रशस्तरूपरसगन्धस्पर्शमपि प्रोक्षितमभ्युक्षितं न्याया-र्ज्जितञ्च यत्तचापि वाग्दुष्टं भावदुष्टञ्च यत्तदप्यशुची-त्यर्थः ॥ ७ ॥

इदानीं धर्माधर्मौ प्रति सहकार्य्यन्तरमाह ।

अयतस्य यमरहितस्यासंयतस्येति यावत् "हस्तौ पादौ

---

वि॰ शुचिप्रतिषेधः शुचिभिन्नमित्यर्थः, तच्च अविहितरूपादिमद-प्रोक्षितानभ्युक्षितान्यायोपार्ज्जितवित्तादि ॥ ६ ॥

अन्यदप्यशुचीत्याह ।

अर्थान्तरं वस्त्वन्तरं चकारः पूर्व्वोक्तसमुच्चायकः तथाच शुचि-द्रव्यमपि वाग्दुष्टं भावदुष्टञ्चेत्तदप्यशुचीत्यर्थः ॥ ७ ॥

शुचिद्रव्यभक्षणं यमसहकृतं धर्म्मं तदसहकृतञ्चाधर्म्मं जन-यतीत्याह ।

अयतस्य पाणिपादप्रक्षालनाचमनादिरहितस्य शुचिद्रव्य-

सू० यमाभावात् विद्यते वाऽर्थान्तरत्वाद्यमस्य ॥ ८ ॥
असति चाभावात् ॥ ९ ॥

---

उ० प्रक्षाल्याचम्य वाग्यतो भुञ्जीत भोक्ष्यमाणः प्रयतोऽपि द्विराचामेत्” इत्यादिबोधितयमरहितस्य भोजनं नाभ्युदयाय किन्तु पापाय, कुत एवमित्यत आह नियमाभावात् नियमस्य सहकारिणोऽभावात्, नियमे सति यत्तदाह विद्यते वा यथोक्तयमसाहित्येन भोजने भवत्येवाभ्युदयः, कुत इत्यत आह अर्थान्तरत्वाद्यमस्य भोजनादर्थान्तरं यतो यमः, तथाच सहकारिकारणं विना न फलसिद्धिस्तस्मिन् सति फलसिद्धिरित्यर्थः ॥ ८ ॥

ननु यममात्रमेव तन्त्रं तर्हि भोजनमतन्त्रमेवेत्यत आह।

यमे सत्यपि शुचिभोजनेऽसति अभावादभ्युदयस्येति-शेषः तथाच यमोभोजनस्य द्वयमेव पुण्यकारणमित्यर्थः।

---

वि० भक्षणात् अभ्युदयस्तज्जनकशुद्धतापूर्व्वम् आयुर्घृतमितिवत् न विद्यते न भवति नियमाभावात् यमरूपसहकारिविरहात्, संयतस्य तु भवेदेव शुद्धतमित्याह विद्यते वेति भवत्येवेत्यर्थः “वा-स्याद्विकल्पोपमयोरेवार्थे वा समुच्चये” इत्यमरकोषात् यमस्या-र्थान्तरत्वात् सहकारित्वात् तथाच यमसहितं शुचिभोजनं धर्म्मं जनयति तद्रहितन्तु पापं जनयतीतिभावः ॥ ८ ॥

नन्वेवं यमसहितमशुचिभोजनं धर्म्मजनकं न वेत्यत आह।

असति अप्रशस्ते “सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च स-त्” इति कोषात् अशुचिभक्ष्यभक्षणे इति यावत् अभावात् अभ्यु-

सू० सुखाद्रागः ॥ १० ॥

---

उ० भोजनमित्युपलक्षणं यागदानस्नानहोमादीनामपि श्रौतस्मार्त्तकर्म्मणां यमनियमौ सहकारिणौ ॥ ९ ॥

एवं धर्म्माधर्म्मप्रादुर्भावं प्रति यमसहकारिणमभिधाय दोषं सहकारिणमभिधातुं दोषनिदानमाह ।

स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा संजायते अहिकण्टकादिजन्मनोदुःखात् तत्र तत्साधने वा द्वेष इत्यपि द्रष्टव्यम्, रागद्वेषमोहाः प्रवर्त्तकत्वेन दोषा इत्यभिधीयन्ते तथाच गौतमीयं सूत्रम् "प्रवर्त्तनालक्षणा दोषाः" इति ॥ १० ॥

---

वि० इयसाधनस्य धर्म्मस्याभावात् तथाच निन्दितत्वेनाशुचिद्रव्यभोजनं यमसहकृतमपि धर्म्मं न जनयति किन्त्वधर्म्ममेवेतिभावः ॥ ॥ ९ ॥

दोषस्यापि धर्म्माधर्म्मकारणत्वात् तत्कारणं दर्शयति।

सुखात् सुखभोगादनन्तरं तत्साधने स्रक्चन्दनवनितादौ राग इच्छा भवतीतिशेषः एवं दुःखभोगानन्तरमपि तत्साधनेऽहिकण्टकादौ द्वेषो जायते इति बोध्यं मोहोऽपि रागद्वेषकारणमिति रागद्वेषद्वारा मोहोऽपि प्रवर्त्तक इति रागद्वेषमोहास्त्रय एव दोषाः धर्म्माधर्म्मयोः सहकारिकारणानि तदुक्तं गौतमीये "प्रवर्त्तनालक्षणा दोषाः" इति "तत्त्रैराश्यं रागद्वेष-

सू० तन्मयत्वाच्च ॥ ११ ॥

अदृष्टाच्च ॥ १२ ॥

---

उ० ननु सुखदुःखे एव यदि रागद्वेषौ जनयतः तदा तयोर्नाशे कथं तौ स्यातामत आह।

रागद्वेषौ भवत इतिशेषः विषयाभ्यासजनितो दृढतरः संस्कारविशेषस्तन्मयत्वं यद्वशात् कामातुरस्य कामिनीमलभमानस्य सर्व्वत्र कामिनीदर्शनम्, एकदा भुजङ्गदष्टस्य तत्र दृढतरसंस्कारतः सर्व्वत्र भुजङ्गदर्शनम्, तदुक्तं "तन्मयत्वं तत्प्रकाशो वाह्याभ्यन्तरतस्तथा" इति ॥ ११ ॥

हेत्वन्तरं समुच्चिनोति।

रागद्वेषाविति शेषः यद्यप्यदृष्टं साधारणकारणं तथापि कचित्तौ प्रति असाधारणतामप्यनुभजति यथा तज्जन्मानानुभूतकामिनीसुखस्यापि यौवनोद्भेदे कामिनीरागः अननुभूतभुजङ्गदंशदुःखानामपि भुजङ्गेषु द्वेष इत्याद्युन्नेयम्। नच

---

वि० मोहार्थान्तरभावात्" इति "तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः" इति च ॥ १० ॥

प्रयोजकान्तरमाह।

तन्मयत्वात् विषयभोगाभ्यासजनितदृढतरसंस्काराच्च रागादयो भवन्तीत्यर्थः ॥ ११ ॥

कारणान्तरमपि दर्शयति।

अदृष्टविशेषात् जन्मान्तरकृतादृष्टविशेषात् कस्यचित् कस्मिंश्चिदनुरागोद्वेषो वा भवति यथा दमयन्त्यादेर्नलादौ, यथा वा

सू॰ जातिविशेषाच्च ॥ १३ ॥

---

उ॰ प्राग्भवीयः संस्कार एवात्र निबन्धनम्, तत्कल्पने तदुद्बोधकल्पने च प्रमाणाभावात् अदृष्टस्यावश्यकल्पनीयत्वात्॥ ॥ १२ ॥

सहकार्यन्तरमाह।

तथाहि मनुष्यजातीयानामन्नादौ रागः मृगजातीयानां तृणादौ, करभजातीयानां कण्टकादौ, तत्रापि तत्तज्जातिनिष्पादकमदृष्टमेव तत्त्वं द्वारमात्रन्तु जातिर्जन्मविशेषः एवं पारावतादीनामुत्करे रागः। तथा महिषजातीयानां तुरङ्गमे द्वेषः, सारमेयाणां शृगाले, नकुलानां भुजङ्गमे इत्याद्युन्नेयम्॥ १३ ॥

एवं धर्माधर्मनिमित्ततया रागद्वेषनिमित्तानि परिसङ्ख्याय सम्प्रति दोषाणां धर्माधर्मकारणत्वं प्रवृत्तिद्वारेत्याह।

---

वि॰ दुर्य्योधनादेर्भीमादौ तदुक्तं “जन्मान्तराधिगतकर्म्मविपाकजन्मैवोन्मीलति क्वचन कस्य च नानुरागः” इति। १२।

अन्यदप्याह।

जातिविशेषात् मनुष्यजातीयानामन्नादौ उष्ट्रादिजातीयानां कण्टकादौ रागः नकुलजातीयानां भुजङ्गमे महिषजातीयानां तुरङ्गमे द्वेषश्च जातिकृत एव, यद्यप्यत्रादृष्टमेव जातिद्वारा रागाद्युत्पादकं तथापि साक्षान्निष्पादकत्वं जातेरेवेति। १३।

रागादेर्धर्म्माधर्म्मोत्पादने बीजमाह।

सू० इच्छाद्वेषपूर्व्विका धर्म्माधर्म्मप्रवृत्तिः ॥ १४ ॥
तत्संयोगोविभागः ॥ १५ ॥

---

उ० विहिते कर्म्मणि रागनिबन्धना निषिद्धे कर्म्मणि हिंसादौ द्वेषनिबन्धना प्रवृत्तिः, रागनिबन्धना यागादौ प्रवृत्तिर्धर्म्मं प्रसूते द्वेषनिबन्धना हिंसादौ प्रवृत्तिरधर्म्मम्। तावेतौ रागद्वेषौ संसारमनुवर्त्तयतः तथाच गौतमीयं सूत्रम् "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" इति वागारम्भोवाचिकी प्रवृत्तिः सत्यं प्रियं हितमिति पुण्या, असत्यमप्रियमहितमिति पापा, बुद्धिः बुध्यते ज्ञायतेऽनेनेति मन उच्यते तेन मानसी प्रवृत्तिर्भूतदयादिः, शारीरी प्रवृत्तिर्दानं परित्रणमित्यादिका दशविधा पापा दशविधा पुण्याचेति ॥ १४॥

इदानीं धर्म्माधर्म्मयोः प्रयोजनं प्रेत्यभावमाह।

ताभ्यां धर्म्माधर्म्माभ्यां संयोगो जन्म अपूर्व्वाभिः शरीरे-

---

वि० धर्म्माधर्म्मौ तज्जनकयागहिंसादिकर्म्मणी उपचारात् तत्र या प्रवृत्तिः इच्छाद्वेषपूर्व्विका इच्छाद्वेषजन्या तथाच रागाद्यागादौ प्रवृत्तिस्ततो यागादिना धर्म्मो जायते तथा द्वेषाद्धिंसायां प्रवृत्तिस्ततोहिंसादिनाऽधर्म्मो भवतीति रागादेः प्रवृत्तिद्वारकमेव धर्म्मादिजनकत्वमिति औत्सर्गिकाभिप्रायेणेदं तेन रागद्वेषादिकं विनाऽपि आकस्मिकगङ्गाजलसंसर्गादिना धर्म्मादिजननेऽपि न क्षतिरिति ॥ १४ ॥

धर्म्माधर्म्मयोः कार्य्यं प्रेत्यभावमाह।

तत्संयोगः ताभ्यां जनितः संयोगः सम्बन्धः अर्थात् अपूर्व्वशरीर-

सू॰ आत्मकर्म्मसु मोक्षो व्याख्यातः ॥ १६ ॥

उ॰ न्द्रियवेदनाभिः सम्बन्धः संयोग इहोच्यते। विभागस्तु शरीरमनोविभागो मरणलक्षणः तथा चायं जन्ममरणप्रबन्धः संसारः प्रेत्यभावापरनामा धर्म्माधर्म्माभ्यामित्यर्थः अस्यैव च प्रेत्यभावस्याजरच्छरीभाव इति वैदिकी संज्ञा ॥ ॥ १५ ॥

तदेतस्य प्रेत्यभावस्य जन्ममरणप्रबन्धस्य यत्र च पर्य्यवसानं तं मोक्षं निरूपयितुमाह।

अयमेव शरीरमनोविभागः आत्मकर्म्मसु सत्सु मोक्षो भवतीत्यर्थः तत्रात्मकर्म्माणि तावत् श्रवणं मननं योगाभ्यासो निदिध्यासनमासनं प्राणायामः शमदमसम्पत्तिः आत्मपरात्मसाक्षात्कारो देहदेशान्तरोपभोग्यपूर्व्वोत्पन्नधर्म्माधर्म्मपरिज्ञानं तदुभोगानुरूपनानादेहनिर्म्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणदोषतुषारदमादपिमध-

विं॰ शरीरयोराद्यः संयोगः जन्मेति यावत् एवं विभागः शरीरचरमप्राणसंयोगध्वंसः मरणमिति यावत् तदपि धर्म्माधर्म्माधीनमेव तदेवं धर्म्माधर्म्माधीनो जन्ममरणप्रवाहो प्रेत्यभावः स एव पुंसां बन्धलक्षणः तस्य चाजरच्छरीभाव इति नामान्तरमागमे प्रसिद्धम्, तदुक्तं गौतमीये "पुनरुत्पत्तिः प्रेत्यभावः" इति ॥ १५ ॥

नन्वेवमनादिरयं प्रेत्यभावः पुरुषं किं न जहातीत्यत आह।

आत्मकर्म्मसु श्रवणमनननिदिध्यासनात्मसाक्षात्कारेषु सत्सु मोक्षो व्याख्यातः आगमेऽभिहितः। तत्र आत्मतत्त्वसाक्षात्का-

उ० धर्म्माधर्म्मयोरनुत्पादात् प्रवृत्त्यपाये जन्मापायाद्दुःखापाय-लक्षणोऽपवर्गस्तत्र षट्पदार्थीतत्त्वज्ञानमाद्यमात्मकर्म्म॥ १६॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे षष्ठाध्यायस्य द्वितीयमाह्निकम्॥ * ॥

समाप्तश्चायं षष्ठाध्यायः।

---

वि० देहापगते मोहात्मके देहाद्यात्माभेदविषयके मिथ्याज्ञाने राग-द्वेषलक्षणस्य दोषस्यापायो भवति ततः प्रवृत्ते धर्म्माधर्म्मात्मिकाया उच्छेदस्तदभावाच्चापूर्व्वशरीराद्यप्राप्तसंयोगरूपजन्मोच्छेदस्तत आत्यन्तिकतापत्रयविनाशो भवतीति स एव मोक्षस्तत्र मननशास्त्रमिदं परम्परयोपयुज्यते इति तथाच गौतमीयं सूत्रं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति, अधिकमन्यत्रानुसन्धेयम्॥ १६॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-कृतायां कणाद-सूत्रविवृतौ षष्ठाध्यायस्य द्वितीयमाह्निकम्॥ * ॥

समाप्तश्चायं षष्ठाध्यायः।



सू॰ उक्ता गुणाः ॥ १ ॥

---

उ॰ संसारमूलकारणतया सर्व्वोत्पत्तिमन्निमित्तकारणतया भोगसाधनतया चोत्पत्तितः प्रत्यात्मनियतत्वेन परादृष्टस्यापि परस्योपयोगित्वेन च धर्म्माधर्म्मौ परीक्ष्येदानीं गुणान् परीक्षिषुस्तेषामुद्देशं लक्षणञ्च स्मारयन्नाह ।

उद्दिष्टा लक्षिता गुणाश्चेत्यर्थः तत्र रूपादयः सप्तदश कण्ठरवेणोक्ताः चशब्दसमुच्चिताः सप्त, तेन चतुर्व्विंशतिरपि गुणा उक्ताः, तत्र नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा असमवायिकारणवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा कार्य्यासमानाधिकरणकर्म्मावृत्तिजातिमत्त्वं वा ॥ १ ॥

तत्र गुणत्वेन गुणपरीक्षा सप्तमाध्यायार्थः । तत्र प्रथमाह्निके नित्यतया गुणपरीक्षा, अनित्यतया गुणपरीक्षा, पाकजगुणपरीक्षा, *सङ्ख्याद्यनेकवृत्तिगुणपरीक्षा, परिमाणपरीक्षा चेति पञ्च प्रकरणानि, तत्र रूपादीनाञ्चतुर्णामनित्यत्वमाह ।

---

वि॰ यदीयसूत्रसंहतिं विवृण्वतामधीमताम् ।
शुभाय सन्तु सन्ततं कणादपादरेणवः ॥

सप्तमे गुणान् परीक्षिषुस्तदुद्देशलक्षणे स्मारयति । गुणा उक्ता उद्दिष्टा लक्षिताश्चेत्यर्थः ॥ १ ॥

---

* संख्याद्यनेक इति क्वचित् पाठः ।

सू॰ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वाद-नित्याश्च ॥ २ ॥

एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥

---

उ॰ पृथिव्यादीनां वाय्वन्तानामवयविनां रूपादयश्चत्वारो गुणा अनित्याः। यद्यप्यन्येऽपि गुणा अवयविषु वर्त्तमाना अनित्या एव, तथापि तेषामन्यतोऽपि विनाशः, रूपादयश्चत्वारो गुणा आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणान्तरात्, द्रव्यानित्यत्वादिति द्रव्यस्याश्रयभूतस्यानित्यत्वादाश्रितानामनित्यत्वमित्यर्थः ॥ २ ॥

रूपादीनामनित्यत्वे यद्याश्रयानित्यत्वं तन्त्रं तदा नित्याश्रयवृत्तीनां नित्यत्वमित्याक्षेपवललभ्यमित्याह।

रूपादीनामेव चतुर्णां नित्येष्वाश्रयेषु वर्त्तमानानां नित्यत्वमुक्तम् एतेनेति आश्रयानित्यत्वेनानित्यत्वाभिधा-

---

वि॰ रूपादीनाञ्चतुर्णां यथासम्भवमनित्यत्वमभिधत्ते।

पृथिव्या रूपरसगन्धस्पर्शाः, जलस्य रूपरसस्पर्शाः, तेजसो रूपस्पर्शौ, वायोः स्पर्शः, एतेषामनित्याश्रितानामनित्यत्वम् आश्रयनाशनाश्यत्वात्, चकारादेकत्वैकपृथक्त्वपरिमितिगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां संग्रहः, तेऽपि अनित्यगता अनित्या एवेत्यर्थः। २ ।

ननु नित्यगता रूपादयः किमनित्या नित्या वेत्यत आह।

एतेन आश्रयानित्यत्वहेतुकानित्यत्वकथनेन नित्येषु आश्रयेषु रूपादीनां नित्यत्वमुक्तमुक्तप्रायमर्थापत्तत्वादित्यर्थः। नि-

सू० अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥ ४ ॥

---

उ० नेनेत्यर्थः । वृत्तिकृतस्तु नित्येष्वनित्यत्वमुक्तमित्यकारप्रश्लेषस्तथा च पार्थिवपरमाणुष्वग्निसंयोगान्नाश इति व्याचख्युः ॥ २ ॥

तत् किं पार्थिवेऽपि नित्यवृत्तिरूपादीनां नित्यत्वमेवेत्यतो विभिनष्टि ।

आप्यपरमाणौ रूपरसस्पर्शा नित्याः, तैजसपरमाणौ रूपस्पर्शौ, वायुपरमाणौ स्पर्शो नित्यः, ननु नित्येऽपि वर्त्तमानानां रूपादीनामनित्यत्वे को विरोधः शब्दबुद्ध्यादीनामिवेत्यतस्तत्कारेण गुणान्तराप्रादुर्भावो हेत्वन्तरं सूचितम्, शब्दे हि तीव्रमन्दादिभावेन गुणान्तरप्रादुर्भावोऽनुभूयते, ज्ञानादौ च ज्ञानादिविरोधी संस्कारादिः, आप्यतैजसवायवीयपरमाणुषु रूपादिविरोधिगुणान्तरं न

---

वि० नेष्वनित्यत्वमिति वृत्तिकारसम्मतः पाठः, तन्मते नित्येषु पार्थिवपरमाणुषु रूपादीनामनित्यत्वमग्निसंयोगनाश्यत्वादित्यर्थः, किन्तु तादृशपाठे एतेनेति उक्तमिति च सङ्गतं न भवतीति ध्येयम् ॥ २ ॥

ननु पार्थिवपरमाणुगतानां रूपादीनामग्निसंयोगनाश्यत्वात् कथं नित्येष्विति सामान्यत उक्तमतो नित्यानि विशेषयति ।

न खलु नित्यपृथिवीगता रूपादयो नित्याः किन्तु नित्यजलतेजोवायुगता एव ते नित्याः पूर्व्वसूत्रे उक्ता इत्यर्थः ॥ ४ ॥

सू॰ अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥

---

उ॰ प्रादुर्भवति, यदि प्रादुर्भवेत्तदा तदारम्भेष्वपि घ्यणुकादि-प्रक्रमेणाप्यावयविष्वपि पूर्व्वविजातीयं रूपाद्यनुभूयेत नहि शुक्लरूपविजातीयं रूपं तोयतेजसो र्नवा शीतोष्ण-स्पर्शविजातीयो स्पर्शौ, उष्णं जलं शीतो वायुरित्यादि प्रतीतिस्तूपाधिनिबन्धनेतिभावः ॥ ४ ॥

पूर्व्वं पृथिवीमन्तर्भाव्यानित्येष्वनित्या इत्युक्तमिदानी-माप्यादिष्वेवाह।

अत्राद्यवयविरूपादय आश्रयनाशादेव नश्यन्ति नतु विरोधिगुणान्तरादपीत्यर्थः ॥ ५ ॥

ननु पृथिव्यामवयविरूपाद्यामपि रूपादयोऽग्निसंयो-गादेवोत्पद्यन्ते नश्यन्ति च, तत् कथमाश्रयनाशमात्रनाश्या-इत्यत आह।

---

वि॰ ननु रूपादिभिन्ना अनित्यगता गुणाः किं नित्यास्तथाच संयो-गादिकमपि नित्यं स्यादित्यत आह।

अनित्येषु ये गुणा वर्त्तन्ते ते सर्व्व एवानित्या आश्रयानित्य-त्वात्, तथाचानित्येषु नित्या गुणा न सन्त्येवेत्यर्थः ॥ ५ ॥

ननु रूपरसगन्धस्पर्शाः किमसमवायिकारणका इत्याकाङ्क्षा-यामाह।

सू० कारणगुणपूर्व्वकाः पृथिव्यां पाकजाः ॥ ६ ॥

---

उ० पाकजा इति रूपरसगन्धस्पर्शा इत्यर्थः कारणगुणपूर्व्वका इति रूपाश्रयस्य घटादेर्यत् समवायिकारणं कपालादि तद्गुणपूर्व्वकाः तथाच कपालरूपं कारणैकार्थसमवायप्रत्यासत्त्या घटरूपासमवायिकारणम्, एवं रसादावपि, रूपरसगन्धस्पर्शाः रूपत्वादिगुणत्वसाक्षाद्व्याप्यजातिमन्तः। ननु चक्षुर्ग्राह्यत्वमेव रूपत्वमुपाधिरिति चेत् इन्द्रियपातमात्रेण रूपमिति-प्रत्ययानुदयप्रसङ्गात् अननुसंहितोपाधेरुपहितप्रत्ययायोगादिति उपाधिश्चात्र चक्षुषश्चातीन्द्रियं ग्राह्यत्वस्य ग्रहणविषयत्वं तदप्यचाक्षुषं रूपत्वविशिष्टप्रतीतेश्च चाक्षुषत्वात्, चक्षुर्मात्रवहिरिन्द्रियग्राह्यगुणत्वं रूपत्वम्, अतीन्द्रियरूपाव्याप्तिरिति चेन्न चक्षुर्मात्र वहिरिन्द्रियग्राह्यजातिमत्त्वस्य विवक्षितत्वात् तादृशी च जातीरूपत्वं नीलत्वादिका चेति। नन्वेकैका एव नीलपीतादिव्यक्तयो नित्या नतु तत्र नीलत्वादिजातय एकव्यक्तिकत्वादिति चेन्न नीलतरनीलतमादिप्रत्ययानुदयप्रसङ्गात्, धावल्यादिसम्भेदाभावकृतस्तत्र तारतम्यव्यवहार इति चेन्न प्रमाणाभावात् श्यामं रूपं नष्टं रक्तमुत्पन्नमिति प्रती-

---

वि० रूपरसगन्धस्पर्शाः अवयविगता इति विवक्षणीयं कारणगुणपूर्व्वकाः स्वाश्रयस्य यानि कारणानि अवयवा इति यावत् तेषां ये गुणाः स्वसजातीयगुणाः तेभ्यः प्रादुर्भवन्तीत्यर्थः तथा चावयविवर्त्तिरूपरसगन्धस्पर्शानामसमवायिकारणानि अवयव-

उ० तेन, नच सा समवायोत्पत्तिविनाशकृतेतिवाच्यं समवायस्य तत्रानुल्लेखात् तस्य नित्यत्वाच्च घटादेरप्यनित्यतायामेवं सत्यनाश्वासापत्तेः समवायानित्यत्वेनैव तत्राप्यन्यथासिद्धेः सुवचत्वात्, ननु नीलपीतादयोगुणा द्रव्याभिन्ना एव धर्मधर्मिणोरभेदादितिचेन्न रूपं घटः स्पर्शोघट इत्यादिव्यवहारप्रसङ्गात्, ननु नेदमनिष्टं यतोभवत्येव शुक्लः पटो नीलः पट इत्यादिप्रतीतिरितिचेन्न मतुब्लोपादभेदोपचाराद्वा प्रतीत्युपपत्तेः, भेदे प्रमाणे सति कल्पनेयं यथाकथञ्चिदुपपद्यते इति चेन्न चन्दनस्य रूपं चन्दनस्य गन्ध इत्यादिव्यपदेशबलाद्भेदसिद्धेः पटस्य रूपाभेदे पटवद्रूपमपि त्वगिन्द्रियेण गृह्येत पटमानयेत्युक्ते यत्किञ्चिद्रूपमानयेत् रूपमानयेत्युक्ते यत्किञ्चिद्द्रव्यमानयेत्, अस्तु तर्हि भेदाभेदः अत्यन्तभेदेऽत्यन्ताभेदे च सामानाधिकरण्यानुपपत्तेरितिचेन्न अवच्छेदभेदं विना विरुद्धयोर्भेदाभेदयोरेकत्रासम्भवात्, अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति नित्याभाववृत्तिधर्मत्वादत्यन्ताभावत्ववदितिचेन्न एकत्र संयोगतदत्यन्ताभावयोः प्रतीतिबलादत्यन्ताभावस्याव्याप्यवृत्तित्वाभ्युपगमात् अन्योन्याभावेतु तथाप्रतीतेरभावात्। तदेतद्रूपं

---

वि० अता रूपरसगन्धस्पर्शास्तेषां समवायिकारणमात्रसमवेतत्वन्तु स्वसमवायिसमवायसम्बन्धेनेतिबोध्यम्, ननु श्यामघटादौ वह्निसंयोगानन्तरं कथं रक्ताद्युत्पत्तिरित्यत उक्तं पृथिव्यां पाकजा इति अपीतिशेषः तथाच पृथिव्यां रूपरसगन्धस्पर्शाः

उ॰ पृथिव्यां नानाप्रकारकम्, पार्थिवे तैजसे च शुक्लमेव, क्वचित् पटादौ च चित्रमपि रूपमधिकम् अन्यथा तदचाक्षुषत्वापातात् रूपवत एव चाक्षुषद्रव्यत्वात् नच विजातीयरूपे-रूपानारम्भः, नीलपीतादीनामारम्भे रूपत्वेनैव साजात्यस्यापेक्षितत्वात् अन्यथा तदचाक्षुषत्वानुपपत्तेरुक्तत्वात् नचावयवरूपोपग्रहेणैवावयविग्रहः अवयवानामपि चित्रतया नीरूपत्वप्रसङ्गात् यत्र वा पाकात् परमाणुषु चित्रं रूपं तत्रैव तत्परम्परारब्धपटादौ चित्ररूपोपपत्तेः, नच हरीतक्यां रसोऽपि चित्र इति वाच्यं हरीतक्या नीरसत्वेऽपि दोषाभावात्, षड्रसत्वव्यवहारस्तु तत्तद्रसगुणकारितया। एवं गन्धोऽपि न चित्रः सौरभासौरभवदवयवद्वयस्यानारम्भकत्वात्, कर्कट्यादौ क्वचिदवयवे तैक्ष्ण्यं क्वचिन्माधुर्य्यं तयाच कतमो रसः कर्कट्यामिति चेन्माधुर्य्यमेव, गुणविरोधेन कथं तथा स्यादिति चेत् तदवयवे तैक्ष्ण्याभावात्, तथाऽनुभवः कथमिति चेत् कर्कटीभक्षणक्षुभितरसनाग्रवर्त्तिपित्तद्रव्यस्य तिक्ततोपलम्भात् तत एव कदाचिन्मधुमपि तिक्तायते, हरीतक्यामपि कथमियं न गतिरिति चेन्न तदवयवेषु कषायमाधुर्य्यलवणादिनानारसानुभवादित्यलं पल्लवेन।

---

वि॰ पाकजा अपि, पाकस्तु रूपादिपरावृत्तिप्रयोजकविजातीयतेजःसंयोगः, सोऽपि रूपादेरसमवायिकारणम्भवति, तत्र च परमाणावेव पाकाद्रूपादिपरावृत्तिर्नावयविनीति पीलुपाकवादिनः, मन्यते विजातीयाग्निसंयोगादारम्भकसंयोगनाशेन द्व्यणुकपर्य्य-

उ० तत्र रूपं नयनसहकारि, नन्वेवं वायौ रूपाभावस्य तमसश्च कथं चाक्षुषतेतिचेन्न भावग्रह एव रूपस्य नयनसहकारित्वात् विषयालोकचक्षुषां त्रयाणामपि रूपाणि चाक्षुषप्रतीतिप्रयोजकानि। रसोऽपि रसत्वजातिमान् रसत्वं रसनेन्द्रियमात्रजन्यसाक्षात्कारविषयजातिः तादृशजातिमत्त्वञ्च रसत्वं सोऽयं जीवनपुष्टिबलारोग्यहेतुः रसनसहकारी, रसनेन्द्रियग्राह्यगुणत्वव्याप्यजातिमत्त्वं रसत्वं तथा सति नातीन्द्रियरसाव्याप्तिः। घ्राणमात्रग्राह्यो गुणो गन्धः घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वं गन्धत्वं स च सुरभिरसुरभिश्चेति द्विविधः, यद्वा पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम्। एवं स्पर्शोऽपि स्पर्शत्वजातिमान् गुणः त्वगिन्द्रियमात्रग्राह्यगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं स्पर्शत्वं द्रव्यचतुष्टयवृत्तिश्चायं अनुष्णाशीतशीतोष्णभेदात् त्रिविधः। इदानीं प्रसङ्गात् पाकजप्रक्रिया चिन्त्यते। तत्र कार्य्यकारणसमुदाय एव पच्यते इति पिठरपाकवादिनः, पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते तत्रैव पूर्व्वरूपनाशाग्रिमरूपाद्युत्पत्तिः कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यते इति पीलुपाकवादिनः, अत्रेदं

---

वि० न्तावयविनाशे सति परमाणौ रक्ताद्युत्पत्तिस्ततो विजातीयाग्नि-संयोगादारम्भकसंयोगानुगुणक्रियाद्युत्पत्त्यारम्भकसंयोगादिप्रक्रमेण पुनर्द्व्यणुकादिमहावयविपर्य्यन्तानामुत्पत्तिर्भवतीति। पिठरपाकवादिनस्तु अवयविनां सच्छिद्रतया विजातीयाग्निसंयोगात्

उ॰ तत्वम् आपाके निःछिद्रस्य घटादेरामद्रव्यस्य वह्निना नोदनादभिघाताद्वा तदारम्भकेषु परमाणुषु द्रव्यारम्भकसंयोगविरोधिविभागेनारम्भकसंयोगनाशे द्रव्यनाशावश्यम्भावात्, दृश्यते हि स्थाल्यामाहितानां तण्डुलादीनामप्यधःसन्तापनमात्रेण भञ्जनात्तदानीमेव नाशः, चीरनीरादीनाञ्चात्यन्तमुत्प्लवता, तथाचापाके वह्निज्वालाजालाभिहतानां द्रव्याणामवस्थानमिति महती प्रत्याशा, किञ्च यदि द्रव्यानाशस्तदा मध्यभागे पाकानुपपत्तिः नहि दृढतरावयवान्तरावरुद्धे मध्यभागे तेजःसंयोगसम्भावना येन तत्र श्यामादिनिवृत्तिः स्यात्, तथाच श्यामा अवयवाः अवयवी च रक्त इति महद्वैशसम्। ननु सच्छिद्राण्येवावयविद्रव्याणि कथमन्यथा कुम्भादावन्तर्निहितानां तैलघृतादीनां स्यन्दनं अपणञ्च, तथाच मध्यभागेऽपि तेजःसंयोगः स्यादेवेति चेन्न मूर्त्तानां समानदेशताविरोधात् अवयवान्तरसंयुक्ते मध्यभागे तेजःसंयोगासम्भवात्। ननु यदि द्रव्यनाशः कथं तर्हि स एवायं घट इति प्रत्यभिज्ञा, कथं वा सर्व्वास्ववस्थासु आपाकादौ घटादेस्तादृशस्यैव दर्शनं, घटादेरुपरि निहितानां शरावोदञ्चनादीनां तथैव दर्शनं

---

वि॰ तेषामपि रूपादिपरावृत्तिर्भवति नतु तत्रावयविनां नाशः प्रत्यभिज्ञाविरोधादित्याहुः। अत्र च पाकप्रक्रिया ग्रन्थगौरवभिया परित्यक्ताऽन्यत्रानुसन्धेया। ये तु नीलरूपादिव्यक्तय एकैका एव नित्या इत्याहुस्तन्मते नीलरूपं नष्टं श्यामरूपमुत्पन्नमित्यादि-

उ० घटादिस्फुटने हि तेषां पातः स्यात्, कथं वा यावन्त एवापाके निहितास्तावन्त एव पुनः प्राप्यन्ते परमाणुभि र्द्व्यणुकादिप्रक्रमेण न्यूनानामधिकानां वा तदानीमारम्भसम्भवात्, कथं वा तावत्परिमाणान्येव घटादीन्यापाकोत्तीर्णान्युपलभ्यन्ते, रेखोपरेखादिचिह्नविलोपो वा कथं न भवेत् तथाचावयविष्वेव पाक इति चेत् मैवं सूक्ष्मग्रेण घटादौ त्रिचतुरत्रसरेणुविभागे सति द्रव्यारम्भकसंयोगनाशे द्रव्यनाशे सर्व्वासामनुपपत्तीनामुभयसमाधेयत्वात् नहि तत्र द्रव्यं न नश्यतीति पिठरपाकवादिनोऽपि वक्तुमुत्सहन्ते। तत्रापि घटादयो न नश्यन्ति कतिपयावयवनाशेऽप्यवशिष्टावयवमाश्रित्य कार्य्यावस्थानसम्भवादन्यथा प्रत्यभिज्ञानाद्यनुपपत्तिरेवेति मीमांसकाः, ते तु तावदवयवावस्थानयोग्यस्य घटादेः स्वल्पेष्ववयवेषु कथं वृत्तिः स्यादिति प्रष्टव्याः, अविनष्ट एव पटे परिमाणसङ्कोचवदेतदुपपत्स्यते इति तेषामुत्तरमिति चेन्न कठिनतरावयवानां काष्ठपाषाणस्तम्भकुम्भादीनां सङ्कोचविकाशयोरदर्शनात्, घटादिनाशकाभिमतेन तत्परिमाणमेव नश्यतीति चेन्न परिमाणस्याश्रयनाशैकनाश्यत्वात् घटादिप्रत्यभिज्ञानवत् सूची-

---

वि० प्रतीतिव्यवहारयोरनुपपत्तिः समवायसम्बन्धस्य नियततया तद्विषयतया तयोरुपपत्त्यसम्भवात् अन्यथा घटादीनामपि नित्यत्वमेकत्वञ्चापद्येत, घटस्य रूपमिति भेदप्रत्ययात् गुणगुणिनोर्नाभेदः, नीलपीतादिनानावयवाद्यारब्धे घटादौ चित्ररूपमेव

उ० द्रव्यनाशे परिमाणस्यापि प्रत्यभिज्ञायमानत्वात् त्वन्मते तन्नाशस्याप्यनुपपत्तेरिति दिक्। येषां मते द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी तदप्रतिद्वन्द्वी च विभाग एकयैवावयवक्रियया जन्यते तेषां द्व्यणुकनाशमारभ्य नवमक्षणे द्व्यणुकान्तरे रक्ताद्युत्पत्तिरेकस्मिन्नेव परमाणौ क्रियाचिन्तनात् तथाहि वह्निना नोदनाद् द्व्यणुकारम्भके परमाणौ कर्म ततो विभागस्ततोद्रव्यारम्भकसंयोगनाशस्ततोद्व्यणुकनाशः नष्टे द्व्यणुके केवले परमाणावग्निसंयोगाच्छ्यामादिनिवृत्तिः श्यामादौ निवृत्ते अन्यस्मादग्निसंयोगाद्रक्ताद्युत्पत्तिः रक्तादावुत्पन्ने परमाणुक्रियानिवृत्तिस्तदनन्तरमदृष्टवदात्मसंयोगात् परमाणौ कर्म्म ततो विभागस्ततः पूर्व्वसंयोगनिवृत्तिस्ततः परमाण्वन्तरेण द्रव्यारम्भकः संयोगस्ततो द्व्यणुकोत्पत्तिरुत्पन्ने द्व्यणुके कारणगुणप्रक्रमेण रक्ताद्युत्पत्तिरिति नव क्षणाः यदि पूर्व्वक्रियानिवृत्तिक्षण एव क्रियान्तरमुत्पद्यते तदा, यदि तु पूर्व्वक्रियानिवृत्त्यनन्तरकाले क्रियान्तरमुत्पद्यते तदा दश क्षणाः, विभागजविभागाद्युपगमेऽपि यदि द्रव्यारम्भकसंयोगनाशविशिष्टं कालमपेक्ष्य विभागजोविभागस्तदा दशक्षणा यदि तु द्रव्यनाशविशिष्टं कालमपेक्ष्य विभा-

वि० जायते तादृशपटस्य नीलरूपत्वे तथात्वस्यानुपपत्तेः, मन्मते तु तत्र पटे तत्तदवयवावच्छेदेन नानैव रूपाणि भवन्ति। अत एव
"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः।
श्वेतः खुरविषाणाभ्यां स नीलोवृष उच्यते"॥

उ० गेन विभागान्तरं जन्यते तदैकादशक्षणा प्रक्रिया, तथाहि द्व्यणुकनाशविभागजविभागावित्येकः कालः, ततः पूर्व्वसंयोगनाशश्यामादिनिवृत्ती, उत्तरसंयोगरक्ताद्युत्पत्ती, उत्तरसंयोगेन विभागजविभागक्रियानिवृत्ती, ततो द्रव्यारम्भानुगुणा परमाणुक्रिया, क्रियातोविभागोविभागात् पूर्व्वसंयोगनिवृत्तिस्ततो द्रव्यारम्भकः संयोगस्ततोद्रव्योत्पत्तिः, उत्पन्ने द्रव्ये रक्ताद्युत्पत्तिरिति दश क्षणाः, यदा तु द्रव्यविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागो जन्यते तदैकक्षणवृद्धा एकादश क्षणाः तथाहि द्रव्यविनाशस्ततो विभागजविभागश्यामादिनिवृत्ती तत उत्तरसंयोगरक्ताद्युत्पत्ती ततो विभागजविभागकर्म्मणोर्निवृत्तिस्ततः परमाणौ द्रव्यारम्भानुगुणा क्रिया ततो विभागः पूर्व्वसंयोगनिवृत्तिः द्रव्यारम्भकसंयोगोत्पत्तिः द्व्यणुकोत्पत्तिः रक्ताद्युत्पत्तिस्तेत्येकादश क्षणा एकस्मिन्नेव परमाणौ क्रियाक्रियोपरमचिन्तनादेवम्, परमाण्वन्तरे यदि द्रव्यारम्भानुगुणा क्रिया चिन्त्यते तदा द्व्यणुकविनाशमारभ्य पञ्चमे षष्ठे सप्तमेऽष्टमे वा रक्ताद्युत्पत्तिरूहनीया विस्तरस्त्वेतत्कणादरहस्ये ॥ ॥ ६ ॥

---

वि० रूपादिकं सङ्गृह्यते इत्याहुः, रसगन्धयोस्तु न चित्रत्वं नानारसादिमदवयवारब्धानामवयविनां नीरसत्वादिस्वीकारेऽपि क्षत्यभावात्, चित्रस्पर्शस्तु रूपसमनीययुक्त्या स्वीकरणीय एवेति संक्षेपः ॥ ६ ॥

सू॰ एकद्रव्यत्वात् ॥ ७ ॥

---

उ॰ पार्थिवपरमाणुरूपादीनां तेजःसंयोगासमवायिकारणकत्वं साधयितुमाह।

पाकजानामितिशेषः, अत्र च गुणत्वे कार्य्यत्वे सतीति विवक्षितं तदयं प्रयोगः पार्थिवपरमाणुरूपादयः संयोगासमवायिकारणकाः कार्य्यगुणत्वे सति नित्यनिष्ठादृष्टगुणत्वात् शब्दवत् बुद्ध्यादिवच्च, संयोगजत्वमात्रं वा साध्यं तेन विभागजशब्दे न व्यभिचारः वायुसंयोगस्य शब्दमात्रे निमित्तकारणत्वात्, पार्थिवरूपादीनाञ्च तेजोऽन्वयव्यतिरेकदर्शनात् तेजःसंयोगासमवायिकारणकत्वं पक्षधर्मताबलात् सिध्यति ॥ ७ ॥

रूपरसगन्धस्पर्शानेकग्रन्थेन व्युत्पाद्य परिमाणस्य सर्व्वसिद्धत्वेन सङ्ख्यायाञ्च विप्रतिपत्तिबाहुल्यादुद्देशक्रममतिः-

---

वि॰ ननु कारणगुणानां कार्य्येऽसत्वात् कथं कार्य्यगुणजनकत्वं वैयधिकरण्यादित्याशङ्कायामाह।

एकं द्रव्यमधिकरणं यस्य तत्त्वात् सामानाधिकरण्यादित्यर्थः, तथाच कारणगुणानां साक्षात्समवायसम्बन्धेन कार्य्येऽसत्त्वेऽपि स्वसमवायिसमवायरूपसामानाधिकरण्यसम्बन्धेन कार्य्ये सत्त्वात्तद्गुणजनकत्वं नानुपपन्नमितिभावः ॥ ७ ॥

संख्यायां बहुवादिविप्रतिपत्तिकत्वेन क्रममुल्लङ्घ्य प्रथमं सूचीकटाहन्यायेन परिमाणपरीक्षामारभते।

सू॰ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते॥८॥

उ॰ क्रम्य सूचीकटाहन्यायेन प्रथमं परिमाणपरीक्षामारभमाण आह।

नित्ये इति विषयेण विषयिणं नित्यत्वप्रतिपादकं चतुर्थाध्यायमुपलक्षयति उपलब्ध्यनुपलब्धी इति यथायोगमन्वयः "येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः" इति न्यायेन, तथाचाणोरनुपलब्धिरिति लभ्यते तदेवं सूक्ष्मो नीलः कलस इति प्रात्यक्षिकप्रत्यये यथा नीलं रूपं विषयस्तथा परिमाणमपि तेन च परिमाणेन परमाणुपर्य्यन्तं परिमाणमुन्नीयते द्रव्यत्वाच्च किञ्च द्रव्यप्रत्यक्षतायां रूपवत् परिमाणमपि कारणं नहि महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति तथाच द्रव्यप्रत्यक्षकारणत्वेन स्वयञ्च प्रत्यक्षतया परिमाणं गुणोऽस्तीति निर्णीयते यदि हि घटादिस्वरूपं परिमाणं स्यात् तदा महदानयेत्युक्ते घटमात्रमानयेत् तथाच प्रैषसंप्रतिपत्ती विरुद्ध्येयाताम्, एवं घटपदात् परिमाणं प्रतीयेत परिमाणपदाद्वा घट इति, मानव्यवहारासाधारणकारणत्वं द्रव्यसाक्षात्कारकारणविषयनिष्ठ-

वि॰ उपलब्ध्यनुपलब्धी इति द्वन्द्वसमासेऽल्पस्वरत्वादुपलब्धिशब्दस्य पूर्व्वभावः तेन महत उपलब्धिः अणोश्चानुपलब्धिरिति द्वन्द्वक्रमेणैवान्वयः, नित्ये नित्यप्रतिपादके चतुर्थाध्याये व्याख्याते ऋषि-

उ० सामान्यगुणत्वं वा महत्त्वं मानव्यवहारोहस्तवितस्त्यादिव्यवहारो नतु पलसङ्ख्यादिव्यवहारः, तच्च परिमाणञ्चतुर्व्विधं महत्त्वमणुत्वं दीर्घत्वं ह्रस्वत्वञ्च, तत्र परममहत्त्वपरमदीर्घत्वे विभुचतुष्टयवर्त्तिनी परमाणुत्वपरमह्रस्वत्वे परमाणुवर्त्तिनी अवान्तराणुत्वावान्तरह्रस्वत्वे द्व्यणुकवर्त्तिनी त्रसरेणुमारभ्य महावयविपर्य्यन्तं महत्त्वदीर्घत्वे, एवञ्च सर्व्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति, बिल्वामलकादावणुत्वव्यवहारः समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारोभाक्तः, भक्तिश्चात्र प्रकर्षभावाभावः, आमलके यः प्रकर्षभावस्तस्याभावः कुवले, बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके, सच गौणमुख्योभयभागित्वाद्भक्तिपदवाच्यः, दीर्घत्वह्रस्वत्वे नित्ये न वर्त्तेते इत्येके, परिमाण एव ते न भवत इत्यपरे, महत्सु दीर्घमानीयतामितिवत् महत्सुवर्त्तुलं चिकोणञ्चानीयतामिति निर्धारणबलाद्वर्त्तुलत्वादीनामप्यापत्तेरिति तेषामाशयात् ॥ ८ ॥

इदानीं परिमाणकारणानि परिसङ्ख्यष्टे।

---

वि० ते इत्यर्थः, मानव्यवहारासाधारणकारणं परिमाणम्, तच्चाणु महत् दीर्घं ह्रस्वञ्चेति चतुर्व्विधम्, तत्राणुपरिमाणं परमाणौ द्व्यणुके च तिष्ठति, तत्रापि परमाणावणुपरिमाणं परमं विभुचतुष्टये महत्परिमाणं परमं त्रसरेण्वादिमहावयविपर्य्यन्तद्रव्येषु अवान्तरजन्यमहत्परिमाणम् ॥ ८ ॥

जन्यमहत्परिमाणस्यासमवायिकारणं दर्शयति।

सू॰ कारणबहुत्वाच्च ॥ ९ ॥

---

उ॰ चकारो महत्त्वप्रचयौ समुच्चिनोति, परिमाणमुत्पद्यते इति सूत्रशेषः, तत्र कारणबहुत्वं केवलं त्र्यणुके महत्त्वदीर्घत्वे जनयति महत्त्वप्रचययोस्तत्कारणेऽभावात् तच्च बहुत्वमीश्वरापेक्षाबुद्धिजन्यं तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्रहो नियामकः, एवं परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकं वक्ष्यते द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं बहुत्वप्रचययोस्तत्राभावात् यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणं बहुत्वस्याभावात् महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षं प्रत्यप्रयोजकत्वात् एवञ्च सति यदि महत्त्वं तत्र कारणं तदा न दोषः तदुक्तं "द्वाभ्यामेकेन सर्व्वैर्वा" इति। प्रचयश्च आरम्भकः संयोगः, स च स्वाभिमुखकिञ्चिदवयवासंयुक्तत्वे सति स्वाभिमुखकिञ्चिदवयवसंयोगलक्षणः, सवावयवसंयोगः स्वावयवप्रशि-

---

वि॰ कारणस्य स्वाश्रयसमवायिकारणस्य बहुत्वं तस्मादसमवायिकारणात् जन्यमहत्परिमाणं जायते इतिशेषः, चकारात् प्रचयमहत्परिमाणयोः संग्रहः त्र्यसरेणुमहत्परिमाणं प्रति द्व्यणुकगतं त्रित्वरूपं बहुत्वमसमवायिकारणं यत्र तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धं तत्र शिथिलाख्यसंयोगरूपः प्रचयस्तादृशावयविपरिमाणस्यासमवायिकारणम्,

सू० अतोविपरीतमणु ॥ १० ॥

---

उ० त्रित्वसंयोगापेक्षः परिमाणजनकः गुणकर्मारम्भे सापेक्ष-इतिवचनात् ॥ ९ ॥

महत्त्वदीर्घत्वे व्युत्पाद्याणुत्वं व्युत्पादयति।

अतः प्रत्यक्षसिद्धान्महतः परिमाणाद्यद्विपरीतं तदणुपरिमाणमित्यर्थः। वैपरीत्यञ्चाप्रत्यक्षत्वात् कारणवैपरीत्याच्च, महत्त्वे हि महत्त्वबहुत्वप्रचयानां कारणत्वम्, अणुत्वे च कारणगतस्य द्वित्वस्येश्वरापेक्षाबुद्धिजन्यस्य कारणत्वम्, एतेन दीर्घत्वविपरीतं ह्रस्वत्वमित्यपि द्रष्टव्यम्, वैपरीत्यञ्चात्रापि पूर्ब्ववत् ॥ १० ॥

---

वि० घटादिगतमहत्परिमाणे तु कपालादिगतं महत्परिमाणमसमवायिकारणमित्यर्थः ॥ ९ ॥

अणुपरिमाणमाह।

अतो महत्परिमाणाद्विपरीतं वैधर्म्म्यवदणुपरिमाणम्, वैधर्म्म्यञ्च लौकिकप्रत्यक्षाविषयत्वं कारणबहुत्वाद्यजन्यत्वञ्च तथाच परमाणौ द्व्यणुके चाणुपरिमाणं वर्त्तते तस्य प्रत्यक्षं न भवति, परमाणुपरिमाणन्तु नित्यं द्व्यणुकपरिमाणन्तु परमाणुगतद्वित्वसंख्याजन्यम्, एवमणुत्वरूपा परिमाणगता जातिरपि वैधर्म्म्यं बोध्यम् ॥ १० ॥

ननु बिल्वादामलकमणु गुञ्जाफलादामलकं महदित्यादिप्रत्ययात् महत्परिमाणेऽपि प्रत्यक्षविषयत्वमापेक्षिकमणुत्वञ्चास्तीति वैपरीत्यं कथमित्यत आह।

सू॰ अणु महदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥

---

उ॰ इदानीं कुवलामलकादावणुत्वव्यवहारो भाक्त इति दर्शयति ।

इतिशब्दो व्यवहारपरतां दर्शयति, तेन बिल्वापेक्षया कुवलमणु कुवलापेक्षयामलकं महत् आमलकापेक्षया बिल्वं महदिति तावद्व्यवहारोऽस्ति, तत्र महदिति तेषु व्यवहारो मुख्यः, कुत एवमत आह विशेषभावात् महत्त्वविशेषस्यैव तरतमादिभावेन भावात्, अणुव्यवहारस्तु तेषु भाक्तः, कुत एवमत आह विशेषाभावात् अणुत्वविशेषस्य तत्राभावात्, अणुत्वं हि कार्य्यं द्व्यणुकमात्रवृत्ति, नित्यं परमाणुवृत्ति, कुवलादौ तदभावात् यद्वा विशेषस्य महत्त्वकारणस्यैवावयवबहुत्वमहत्त्वप्रचयानां कुवलाद्यवयवेषु भा-

---

वि॰ अणु महदिति प्रत्ययव्यवहारौ, तस्मिन् व्यवह्रियमाणे परिमाणे, विशेषस्य अपकर्षस्य, भावात् सत्त्वात्, विशेषस्यापकर्षस्याभावादसत्त्वाद्भवत इत्यर्थः, अत्रापकर्षाभावेन उत्कर्षो विवक्षितस्तथाच बिल्वादामलकमणुरिति प्रत्ययो व्यवहारश्च बिल्वपरिमाणादपकृष्टपरिमाणं विषयीकृत्य भवति, न तु वास्तविकाणुपरिमाणम्, एवं गुञ्जाफलादामलकं महदित्यादिप्रत्ययो व्यवहारश्च गुञ्जाफलपरिमाणापेक्षयोत्कृष्टमहत्परिमाणं विषयीकरोति उत्कर्षापकर्षौ च स्वरूपसम्बन्धविशेषावतिरिक्तौ वेत्यन्यदेतत् ॥ ११ ॥

सू० एककालत्वात् ॥ १२ ॥

---

उ० वात् सद्भावात् विशेषाभावात् विशेषस्य अणुत्वकारणस्य महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावादस- द्भावादित्यर्थः ॥ ११ ॥

अणुत्वव्यवहारोभाक्त इत्यत्र हेतुमाह।

महत्त्वमणुत्वञ्च द्वयमप्येकस्मिन् कालेऽनुभूयते, ते च म- हत्त्वाणुत्वे परस्परविरोधिनी नैकत्राश्रये सह सम्भवतः, अतो महत्त्वकारणसद्भावान्महत्त्वप्रत्ययस्तत्र मुख्योऽणुत्वप्र- त्ययप्रयोगौ च भाक्ताविल्यर्थः ॥ १२ ॥

महत्त्वप्रत्ययस्य मुख्यत्वे हेतुमाह।

---

वि० ननु उत्कर्षापकर्षौ परस्परविरोधिनौ तत्कथमेकत्र तयोः समावेशः निम्बफलमपकृष्टं नारिकेलफलमुत्कृष्टमिति हि व्य- वह्रियते नहि निम्बफलमुत्कृष्टमित्यादिकः प्रत्ययो व्यवहारो वा प्रेक्षावतां येन तयोरविरोधः सम्भाव्येतेत्यत आह।

एककालत्वात् एककालीनत्वात् विशेषतदभावयोरुत्कर्षापक- र्षव्यवहारयोरितिशेषः। अयम्भावः उत्कर्षापकर्षौ न विरुद्धौ एकत्राश्रये एकदैव द्वयोर्व्यवहारात् नहि क्षत्रियो ब्राह्मणादप- कृष्टः वैश्यादुत्कृष्ट इत्यादिव्यवहारः शक्योऽपलपितुम्। निम्ब- फलादावपि स्वापेक्षया तिक्ततमादुत्कृष्टप्रत्ययो भवत्येवेति नो- त्कर्षापकर्षयोर्विरोधः ॥ १२।

ननूत्कर्षापकर्षयोर्द्रव्ये विरोधाभावेऽपि गुणादौ विरोधोऽस्त्वे- वेति कथमेकस्मिन् परिमाणे तयोः सम्भव इत्यत आह।

2 Q 2

सू० दृष्टान्ताच्च ॥ १३ ॥

अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्म्मगुणै
र्व्याख्यातः ॥ १४ ॥

---

उ० दृश्यते तथा वस्तुगत्या महत्स्वेव कुवलामलकविल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारेण भवितव्यमित्यर्थः यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु शुक्लशुक्लतर-शुक्लतमव्यवहारः ॥ १३ ॥

नन्वणु महत्परिमाणमितिव्यवहारबलान्महत्त्वेऽपि परिमाणे महत्त्वमणुत्वेऽप्यणुत्वमस्तीति ज्ञायते तत् कथं द्रव्यमात्रवृत्तित्वमनयोः कथं वा गुणे गुणवृत्तित्वविरोधोनापद्यत इत्यत आह।

यथा गुणकर्म्मणी नाणुत्वमहत्त्ववती तथाऽणुत्वमहत्त्वे

---

वि० शुक्लशुक्लतरशुक्लतमरक्तरक्ततररक्ततमादिरूपात् दृष्टान्तात् परिमाणेऽपि उत्कर्षापकर्षयोः सम्भवः नहि परिमाणस्योत्कर्षापकर्षावन्तरेण महन्महत्तरमहत्तमादिव्यवहारः कथमपि सङ्गच्छत इति ॥ १३ ॥

ननु, अणुमहत्परिमाणयोरपि अणुमहत्परिमाणान्तरमापेक्षिकमस्ति तदेव द्व्यणुकात्परिमण्डलमणु कपालाद्घटोमहान् विल्वादामलकमणु आमलकाद्विल्वं महदित्यादिप्रतीतेर्विषयइतिभ्रमं निराकुरुते।

कर्म्मगुणैरिति गुणपदं रूपादिगुणपरं नतु परिमाणपरं तथाच यथा रूपादौ रूपादयो न सन्ति एवं कर्म्मणि कर्म्माणि

सू० कर्म्मभिः कर्म्माणि गुणैश्च गुणा व्याख्याताः॥ १५॥

उ० अपि नाणुत्वमहत्त्ववती इत्यर्थः प्रयोगश्च भाक्तोद्रष्टव्यः ॥ १४ ॥

ननु यथा गुणा गुणवन्तः कथमन्यथा महान् शब्दः द्वौ शब्दौ एकः शब्दः चतुर्विंशति गुणा इत्यादिव्यवहारः, कर्म्माण्यपि च कर्म्मवन्ति प्रतीयन्ते कथमन्यथा शीघ्रं गच्छति द्रुतं गच्छतीति व्यवहारः तथाचाणुत्वमहत्त्वे अपि तद्वती स्यातामित्यत आह ।

कर्म्मभिः कर्म्माणि न तद्वन्ति गुणैश्च गुणा न तद्वन्तस्तथाऽणुत्वमहत्त्वेऽपि न तद्वती, व्यवहारस्तु सर्व्वत्र भाक्त इत्यर्थः ॥ १५ ॥

ननु महान्ति कर्म्माणि अणूनि कर्म्माणि महान्तोगुणाः अणवोगुणा इत्यादिव्यवहारादणुत्वमहत्त्ववन्ति कर्म्माणि तदुभयवन्तश्च गुणाः प्रसक्ता इत्यत आह ।

---

वि० न सन्ति तथा परिमाणेऽपि परिमाणान्तरं न सम्भवति कार्य्यमात्रं प्रति द्रव्यस्य समवायिकारणत्वादिति ॥ १४ ॥

ननु कर्म्मसु कर्म्माणि रूपादिषु रूपादयश्च न सन्तीति यदुक्तं तत्कुत इत्याशङ्कायामाह ।

कर्म्मभिरित्यनन्तरं शून्यानीति गुणैरित्यनन्तरं शून्याइति च पूरणीयम्, कर्म्माणि न कर्म्मवन्ति गुणाश्च न गुणवन्त इति पूर्व्वमेव प्रतिपादितमित्यर्थः ॥ १५ ॥

नन्वणूनि कर्म्माणि महान्ति कर्म्माणि अणवोगुणा महान्तोगुणा-

सू॰ अणुत्वमहत्त्वाभ्यां कर्म्मगुणाश्च व्याख्याताः॥ १६॥
एतेन दीर्घत्वह्रस्वत्वे व्याख्याते॥ १७॥

---

उ॰ यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा न कर्म्माणि तदुभयवन्ति नवा गुणास्तदुभयवन्त इत्यर्थः, प्रयोगस्तु पूर्व्ववद्भाक्त इतिभावः॥ १६॥

अणुत्वमहत्त्वप्रक्रियां दीर्घत्वह्रस्वत्वयोरतिदिशति।

ह्रस्वत्वदीर्घत्वे अपि न ह्रस्वत्वदीर्घत्ववती महत्त्वोत्पादकमेव दीर्घत्वोत्पादकमणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम्, कारणैक्यात् कथं कार्य्यभेद इति चेन्न प्रागभावभेदेन पाकजवदुपपत्तेः यत्रैव महत्त्वं तत्र दीर्घत्वं यत्राणुत्वं तत्र ह्रस्वत्वं यत्र नित्यमणुत्वं तत्र नित्यं ह्रस्वत्वमित्याद्यतिदेशार्थः॥ १७॥

---

वि॰ इत्यादिव्यवहारबलात् कर्म्मणि गुणे च अणुत्वं महत्त्वञ्च परिमाणं सेत्स्यतीत्यत आह।

यथाऽणुत्वमहत्त्वपरिमाणयो र्नाणुत्वमहत्त्वपरिमाणे तथा कर्म्मणि गुणेषु च न तदुभयम् उक्तव्यवहारास्त्वापकर्षोत्कर्षविषयका एवेति। १६।

ह्रस्वत्वदीर्घत्वयोरप्यणुत्वमहत्त्वतुल्यतेत्याह।

यथा अणुमहदितिव्यवहारसिद्धे अणुत्वमहत्त्वे तथा ह्रस्वं दीर्घमितिव्यवहारसिद्धे ह्रस्वत्वदीर्घत्वे एवमिदमस्माद् ह्रस्वमिदमस्माद्दीर्घमित्यादिप्रत्ययव्यवहारावप्यपकर्षोत्कर्षविषयकावेवेत्यर्थः। १७।

सू० अनित्येऽनित्यम्॥ १८॥

---

उ० इदानीं विनाशकमाह।

एतच्चतुर्व्विधमपि परिमाणं विनाशिनि द्रव्ये वर्त्तमानमाश्रयनाशादेव नश्यति न तु विरोधिगुणान्तरात्। घटे सत्यपि तत्परिमाणं विनश्यति कथमन्यथा कम्बुभङ्गेऽपि स एवायं घट इति प्रत्यभिज्ञेति चेन्न आश्रयनाशेन तत्र घटनाशावश्यकत्वात् नहि परमाणुद्वयसंयोगनाशाद् द्व्यणुके नष्टे तदाश्रितस्य त्रसरेणोस्तदाश्रितस्य चूर्णशर्करादेरविनाश इति युक्तिरभ्युपगमो वा, कथं तर्हि प्रत्यभिज्ञेति चेत्, सैवेयं दीपकलिकेतिप्रत्यभिज्ञानवद्भ्रान्तित्वात्। प्रदीपप्रत्यभिज्ञाऽपि भ्रमैव ह्रस्वत्वदीर्घत्वे परमुत्पादविनाशा-

---

वि० किं परिमाणमनित्यमित्यत आह।

परिमाणमनित्ये अनित्यमाश्रयविनाशादेव तन्नश्यतीत्यर्थः, न च घटादौ त्रिचतुरादिपरमाणुविश्लेषे तदुपचये वा परिमाणान्तरं प्रत्यक्षसिद्धं स एवायं घट इत्यादिप्रत्यभिज्ञायास्तत्र सत्त्वेन घटादेस्तदाविनाशादिति वाच्यं परमाणुविश्लेषे तदुपचये वा द्व्यणुकनाशस्यावश्यकत्वेन त्रसरेण्वाद्यन्त्यावयविपर्य्यन्तनाशस्यावश्यकत्वात् नहि विनाशसामग्री प्रत्यभिज्ञाभिया कार्य्यं नार्ज्जयिष्यति, शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः, न च पटाविनाशेऽपि तन्त्वन्तरसंयोगात् कथं परिमाणाधिक्यमिति वाच्यं तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशादेव पटनाशस्यावश्यक-

सू० नित्ये नित्यम् ॥ १९ ॥
नित्यं परिमण्डलम् ॥ २० ॥

---

उ० लिनो इति चेन्न तद्विनाशस्याश्रयविनाशमन्तरेणानुपपत्ते-रुक्तत्वात् ॥ १८ ॥

तत् किं पार्थिवपरमाणुरूपादिवत् परमाणुगतमणुत्वं शब्दबुद्ध्यादिवदाकाशादिगतं महत्त्वमपि नश्यतीत्यत आह।

नित्येष्वाकाशादिषु परमाणुषु च यत् परिमाणं तन्नित्यं विनाशकाभावात् ॥ १९ ॥

परमाणुपरिमाणस्य वैशेषिकसिद्धां संज्ञामाह।

परिमण्डलमेव पारिमाण्डल्यं तदुक्तम् "अन्यच पारि-माण्डल्यादिभ्यः" इति ॥ २० ॥

---

वि० त्वात् किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्व्वं तत्पट एव न स्यात् तत्तन्तुरूपकारणाभावात् तत्तन्तोरवयवत्वाभावे च न तेन परि-माणाधिक्यं संयुक्तद्रव्यान्तरवत्, तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्व्वपटनाशात्पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम्, अवयविनः प्रत्यभिज्ञानन्तु साजात्येन सैवेयं दीपकलिकेत्यादिवत्। नच पूर्व्वतन्तव एव तन्त्वन्तरसहकारात् पूर्व्वपटे सत्येव पटान्तर-मारभन्त इति वाच्यं मूर्त्तयोः समानदेशताविरोधादितिसं-क्षेपः ॥ १८ ॥

नित्यगतपरिमाणस्य नित्यत्वमर्थायातमपि स्पष्टार्थमाह।

सुगमम् ॥ १९ ॥

ननु किं द्रव्यं नित्यं परिमाणाधिकरणमित्यत आह।

परिमण्डलशब्दो परमाणुपरिमाणं तद्विशिष्टं परमाणुः परि-

सू० अविद्या च विद्यालिङ्गम्॥ २१॥

उ० ननु कुवलामलकादिषु समिदिक्षुप्रभृतिषु च व्यवह्रियमाणमणुत्वं ह्रस्वत्वं वा यदि न पारमार्थिकं तदा पारमार्थिकयोस्तयोः किं प्रमाणमत आह।

विद्यालिङ्गमविद्या तदयमर्थः कुवलामलकादावणुत्वज्ञानं समिदिक्षुप्रभृतिषु ह्रस्वत्वज्ञानं तावदविद्या तत्र पारमार्थिकाणुत्वह्रस्वत्वयोरभावात्, सर्व्वत्राप्रमा प्रमापूर्व्विकैव भवतीत्यन्यथाख्यातिवादिभिरभ्युपगमात् तथाच सत्यमणुत्वज्ञानं सत्यञ्च ह्रस्वत्वज्ञानमनुमेयमित्यर्थः एवञ्च भाक्तः शब्दप्रयोगो मुख्यमन्तरेण न भवतीति मुख्ये अणुत्वह्रस्वत्वे क्वचिदवश्यं मन्तव्ये॥ २१॥

वि० भावया प्रतिपादयति परिमण्डलं पारिमाण्डल्यपरिमाणविशिष्टं परमाणुरूपं द्रव्यं नित्यमिति न नित्यद्रव्यस्य दुर्भिक्षतेत्यर्थः। तस्य नित्यत्वञ्च प्रागेव प्रतिपादितम्॥ २०॥

ननु परमाणुरूपं द्रव्यं कथमङ्गीकर्त्तव्यं तस्याप्रत्यक्षत्वात् त्रसरेण्वादिकन्तु प्रत्यक्षसिद्धं यद्द्रव्यं तदेवाङ्गीकरणीयमित्यत आह।

अविद्या अप्रमा पृथिवी नित्या जलं नित्यमित्यादिप्रतीतिरवयविविषयिणी विद्यायाः परमाणुविषयिण्याः पृथिवी नित्येति प्रमाया लिङ्गम्, सर्व्वत्र प्रमाया अप्रमापूर्व्वकत्वात् नहि कुत्रापि नित्यत्वमजानतः पृथिवी नित्येति भ्रमो भवितुमर्हति, एतच्चापाततः वस्तुतः परमाणुसिद्धिप्रकारः प्राक् प्रदर्शित एवादरणीयः॥ २१॥

आकाशादावपि नित्यं परिमाणमस्तीत्याह।

सू० विभवान्महानाकाशस्तथा चात्मा ॥ २२ ॥

उ० द्रव्यत्वेन हेतुनाकाशादीनामनुमितस्य परिमाणस्य स्वरूपमाह ।

विभवः सर्व्वमूर्त्तसंयोगित्वं तच्च परममहत्त्वमन्तरेणानुपपद्यमानं परममहत्त्वमनुमापयति, दृश्यते चेह वाराणस्यां पाटलिपुत्रे च युगपदेव शब्दोत्पत्तिस्तत्र चैकमेवाकाशं समवायिकारणमित्याकाशस्य व्यापकत्वं सिद्धं व्यापकत्वञ्च परममहत्परिमाणयोग एव नानाकाशकल्पने गौरवमित्येक एवाकाशोऽभ्युपगन्तव्यः । आकाशस्य प्रदेश इति तु व्यपदेशः प्रदेशवद्भिर्घटादिभिः संयोगनिबन्धनो भाक्तः भक्तिश्च प्रदेशवद्द्रव्यसंयोगित्वम् । तथात्मेति यथाकाशं विभवात् सर्व्वमूर्त्तसंयोगित्वात् परममहत् तथात्मापि परममहान् यद्यात्मनः सकलमूर्त्तसंयोगित्वं न भवेत् तदा तेषु तेषु मूर्त्तेषु अदृष्टवदात्मसंयोगात् क्रिया नोत्पद्येत व्यधिकरणस्यादृष्टस्य प्रत्यासत्त्यपेक्षया क्रियाजनकत्वात् सा च प्रत्यासत्तिरदृष्टवदात्मसंयोग एव एवं सञ्चारिणि शरीरे तत्र तत्र ज्ञानसुखादीनामुत्पत्तिरात्मनो वैभवमन्तरे-

वि० विभवात् सर्व्वमूर्त्तसंयोगादाकाशोमहान् परममहत्परिमाणवान्, तच्च परिमाणं नित्यमाकाशस्य नित्यत्वात्, आकाशस्य सर्व्वमूर्त्तसंयोगाभावे नानादेशावच्छेदेन शब्दोत्पत्त्यसम्भवात् तत्तद्देशाकाशसंयोगस्य तत्तच्छब्दासमवायिकारणत्वात् एवमात्माऽपि नित्यपरममहत्परिमाणवान् वैभवात्, अदृष्टवदात्मसंयो-

सू० तदभावादणु मनः॥ २३॥

---

उ० त्वानुपपत्तेरित्यात्माऽपि व्यापकः स च नाकाशवदेक एव व्यवस्थादर्शनादित्युक्तमितिभावः तच्च महत्त्वं सातिशयं नित्यञ्च परमाण्वणुत्ववत् एवमाकाशादौ परमदीर्घत्वं परमाणुषु च परमह्रस्वत्वमूहनीयम्॥ २२॥

ननु मनो विभु सर्व्वदास्पर्शद्रव्यत्वादाकाशवत् ज्ञानाद्यसमवायिकारणसंयोगाधारत्वादात्मवदित्याकाशात्मनोः साहचर्य्येण मनोऽपि किं नोक्तमत आह।

तस्य विभवस्य सर्व्वमूर्त्तसंयोगित्वस्याभावादणु मनः सकलमूर्त्तसंयोगित्वे तु युगपदनेकेन्द्रियसंयोगे ज्ञानयौगपद्यं स्यात् तथाच व्यासङ्गो न स्यात्, अनुमाने तु मनो यावन्न सिद्धं तावदाश्रयासिद्धे मनःसिद्धिदशायान्तु धर्म्मिग्राहकमानबाधिते। ननु विभवाभावादेवं नाणुत्वं सिध्यति घटादौ व्यभिचारादिति चेन्न विभवाभावेनाव्यापकत्वसाध-

---

वि० नस्य सर्गाद्यकालीनपरमाणुकर्म्महेतुत्वादात्मवैभवमप्यावश्यकम्॥ ॥ २२॥

नन्वात्मवन्मनोऽपि विभु ज्ञानाद्यसमवायिकारणसंयोगाश्रयत्वादिति तस्य महत्परिमाणं कुतो नोक्तमत आह।

तस्य विभवस्याभावान्मनोऽणु न परममहत्परिमाणवदित्यर्थः, ज्ञानायौगपद्यनियामकतयाऽणुत्ववत एव मनसः सिद्धि वैभवसाधकप्रागुक्तानुमानस्य धर्म्मिग्राहकप्रमाणबाधितत्वादितिभावः॥ ॥ २३॥

सू० गुणैर्दिग् व्याख्याता ॥ २४ ॥

---

उ० नात् तथाचैकदेहे मनस्तावदेकं नानाकल्पने गौरवापत्तेः एकस्याप्यवयवकल्पने कल्पनागौरवान्निःस्पर्शत्वेनानारम्भकत्वाच्चेत्यादियुक्तेरणुत्वसिद्धेरितिभावः ॥ २३ ॥

दिशः परममहत्त्वे युक्तिमाह।

गुणैः सकलद्वीपवर्त्तिपुरुषसाधारणपूर्व्वापरादिप्रत्ययरूपैः सकलमूर्त्तनिष्ठपरत्वापरत्वलक्षणैः दिगपि व्यापकत्वेन व्याख्यातेत्यर्थः। परत्वापरत्वयोरुत्पत्तौ संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वविषयापेक्षाबुद्धेः कारणत्वस्य वक्ष्यमाणत्वात्, नानादिक्कल्पनस्य कल्पनागौरवप्रतिहतत्वात्, कथं तर्हि दश दिश इति प्रतीतिव्यपदेशाविति चेन्न तत्तदुपाधिनिबन्धनत्वादित्युक्तत्वात् ॥ २४ ॥

कालस्य व्यापकत्वमाह।

---

वि० दिशस्त्वपि नित्यपरिमाणमाह।

गुणैः परत्वापरत्वासमवायिकारणैः तदाश्रयसंयोगैः दिक् व्याख्याता परममहत्त्वेनेतिशेषः तथाच दिशः परममहत्परिमाणं विना दूरान्तिकादिनानादेशैः सह युगपत्संयोगानामनुपपत्त्या युगपन्नानापरत्वापरत्वानामुत्पत्ति र्न सम्भवतीति दिशः परममहत्परिमाणमावश्यकमाश्रयस्य नित्यत्वात्तु तस्य नित्यत्वमितिभावः। २४ ।

कालस्यापि तथात्वमाह।

सू॰ कारणे कालः ॥ २५ ॥

उ॰ परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणे द्रव्ये काल इति समाख्या न तादृशः प्रत्ययः सर्व्वदेशपुरुषसाधारणः कालस्य व्यापकतामन्तरेण सम्भवतीति तस्य व्यापकत्वं परममहत्त्वयोग इत्यर्थः। यद्वा इदानीं जातइत्यादिप्रतीतिबलात् सर्व्वोत्पत्तिमन्निमित्तकारणत्वं कालस्य प्रतीयते तदपि व्यापकत्वाधीनं निमित्तकारणस्य समवाय्यसमवायिकारणप्रत्यासन्नत्वनियमात्। यद्वा अतीतानागतवर्त्तमानव्यवहारः सार्व्वत्रिक इति सर्व्वगत एव कालः। यद्वा क्षणलवमुहूर्त्तयामदिनाहोरात्रपक्षमासर्त्त्वयनसम्वत्सरादिव्यवहारकारणे द्रव्ये कालाख्येति व्यवहारस्य सार्व्वत्रिकत्वात्कालः सार्व्वत्रिक इति परममहान् तस्य नानात्वकल्पना च कल्पनागौरवप्रतिहतेत्युक्तम्॥ २५॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे सप्तमाध्यायस्याद्यमाह्निकम्॥ * ॥

वि॰ कारणे कालिकपरत्वापरत्वसमवायिकारणे प्रत्यासन्न इति शेषः कालिकपरत्वापरत्वसमवायिकारणसंयुक्त इति तु फलितार्थः, काल इति महत्त्वेन वाख्यात इति शेषः तथाच कालस्य परममहत्परिमाणं विना युगपन्नानादेशावस्थितनानापिण्डैः सह युगपत्संयोगानुत्पत्तौ युगपन्नानापिण्डेषु कालिकपरत्वापरत्वोत्पत्ति र्न सम्भवतीत्यवश्यं कालस्य परममहत्परिमाणमङ्गीकार्य्यं तच्च नित्यं कालस्य नित्यत्वादितिभावः ॥ २५ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ सप्तमाध्यायस्य प्रथममाह्निकम् ॥ * ॥

सू० रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ ॥ १ ॥

---

उ० द्वितीयाह्निके एकानेकवृत्तिगुणपरीक्षाप्रकरणम् अनेकमात्रवृत्तिगुणपरीक्षाप्रकरणं प्रसङ्गाच्छब्दार्थसम्बन्धपरीक्षाप्रकरणं विशेषगुणरहितविभुसंयोगासमवायिकारणकैकवृत्तिगुणपरीक्षाप्रकरणं समवायपरीक्षाप्रकरणञ्चेति तत्र महत्त्वैकार्थसमवायाधीनं सङ्ख्यादीनामपि प्रत्यक्षत्वमिति चोद्देशक्रममतिक्रम्य परिमाणनिरूपणानन्तरं सङ्ख्यां पृथक्त्वञ्च परीक्षितुमाह।

रूपरसगन्धस्पर्शेति सङ्ख्यादिपञ्चकभिन्नगुणोपलक्षणं व्यतिरेकादिति व्यभिचारात् तदयमर्थः, एकोघट इति विशिष्टप्रतीतिर्विशेषणजन्या, तत्र विशेषणं न रूपादि, तद्व्यतिरेकेण जायमानत्वात्, नच घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, नचैकत्वं सत्तावत् सामान्यम्, सत्तया सहान्यूनानतिरिक्तवृत्तित्वात, नच द्रव्यमात्रसामान्यं तत्,

---

वि० महत्त्वस्य संख्यादिप्रत्यक्षहेतुत्वात् परिमाणनिरूपणानन्तरमेव संख्यापृथक्त्वयो र्निरूपणमारभते।

एकत्वम् अर्थान्तरं रूपादिभ्यो भिन्नं नतु रूपादिस्वरूपम्, एकत्वपदं सङ्ख्यादिपञ्चकोपलक्षणं गगनमेकं काल एक इत्यादिप्रतीतिविषयो रूपादिभिन्नो गुणोऽवश्यमङ्गीकार्य्यः गगनादिषु रूपरसगन्धस्पर्शव्यतिरेकात् रूपादीनामभावादित्यर्थः, नचैकं

सू० तथा पृथक्त्वम् ॥ २ ॥

---

उ० द्रव्यत्वेनान्यूनानतिरिक्तदेशत्वात् नचान्यूनानतिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः प्रतीतिभेदस्य स्वरूपकृतत्वे सत्ताऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्तत्वात् अन्यथा घटत्वकलसत्वयोरपि भेदापत्तेः, नच स्वरूपाभेद एकत्वमिति भूषणमतं युक्तम्, घटस्वरूपाभेदस्यैकत्वं तदा पटादावेकत्वप्रत्ययो न स्यात्, स्वरूपभेदो द्वित्वादिकमित्यपि भूषणमतमनुपपन्नं स्वरूपभेदस्य चिचतुरादिसाधारणेन व्यवहारवैचित्र्यानुपपत्तेरितिभावः ॥ १ ॥

एकत्वतुल्यतयैकपृथक्त्वमपि साधयितुमाह।

अपोद्धारव्यवहारस्तावदस्ति इदमस्मात् पृथगन्यदर्थान्तरमित्याकारः, अपकृष्यावधिमपेक्ष्य य उद्धारो निर्द्धारणं सद्यपोद्धारः, तत्र च न रूपादि तन्त्रं व्यभिचारादव्यनिरूपत्वाच्च, नन्वन्योन्याभाव एव पृथक्त्वम्, इदमस्मात्

---

वि० सामान्यमेकोविशेषः एकः समवायः एकोऽभाव इत्यादिप्रतीतेः का गतिरिति वाच्यं तन्नानायत्वा धीविशेषविषयत्वरूपस्यैकत्वस्य भागाङ्गीकारादधिकमन्यत्रानुसन्धेयम् ॥ १ ॥

पृथक्त्वगुणस्य संख्यातुल्यत्वमाह।

पृथक्त्वमपि संख्यावद्गुणान्तरमेव तत्रैकपृथक्त्वम् एकत्वसंख्यातुल्यं द्विपृथक्त्वादिकच द्वित्वादिसंख्यातुल्यमिति, नच घटः पटात् पृथगन्योभिन्न इत्यादिप्रतीतीनां समानविषयक-

उ० पृथगन्यदर्थान्तरमितिवद्भिन्नमितिप्रतीतेरन्योन्याभावावल-म्बनत्वात्, न पृथगादिशब्दानां पर्यायत्वेऽपि नान्योन्या-भावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः इदमस्मात् पृथक् इदमिदं न भवतीतिप्रतीत्योर्भिन्नविषयत्वात् नचान्यो-न्याभावत्वानर्थः पृथक्त्वम् अघटः पट इत्यत्रापि पञ्चमी-प्रयोगापत्तेः, ननु पृथगिति विशिष्ट इति प्रतीत्योरेका-कारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न मैत्रस्य दण्डवैशिष्ट्य-दशायां मैत्रात् पृथगयं मैत्र इत्यपि प्रतीत्यापत्तेः एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारा-पत्तेः, अतएव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घटे श्या-माद्घटात् पृथगयं घट इति व्यवहारापत्तेः तद्विरोधि-धर्म्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामानन्तरं रक्ततादशाया-मपि नच सामान्यमेव पृथक्त्वं सामान्यस्यावध्यनिरूप्य-

---

वि० त्वानुभवादन्योन्याभाव एव पृथक्त्वं नतु गुणान्तरमिति वाच्यं नञ्शब्दस्येव पृथक्शब्दस्याप्यव्ययतयाऽभेदार्थकतयाच अस्मात् पृथक् इदमिदं नेति प्रतीत्यो वैलक्षण्यानुपपत्तेः नचान्यादिशब्द-वत् पृथक्शब्दस्यापि भेदविशिष्ट एव शक्तिरिति वाच्यं गौरवा-पत्तेरन्यादिशब्दस्य नामान्तरार्थे भेदान्वयानुपपत्त्या विशिष्टे शक्तिस्वीकारेऽपि पृथक्शब्दस्याव्ययतया भेदान्वयसम्भवेन वि-शिष्टशक्तिस्वीकारस्यानावश्यकत्वात् अन्यथा नञाद्यव्ययाना-मपि विशिष्टशक्तिः स्वीक्रियेत नच पृथक्शब्दस्यान्यार्थत्वाभावे तद्योगे कथं पञ्चमीति वाच्यम् "तृतीया पञ्चमीचैव पृथक् नाना प्रयोगतः" इत्यादि शाब्दिकस्मृतेः पञ्चमीविधायकत्वात्

सू० एकत्वैकपृथक्त्वयो*रेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥

उ० त्वात् जातिसङ्करप्रसङ्गाच्च सन्मात्रवृत्तित्वे सत्तया, द्रव्यमात्रवृत्तित्वे द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तेः ॥ २ ॥

नन्वेकमेकत्वं, रूपादिभ्यः पृथक् पृथक्त्वमिति व्यवहारादेकत्वेऽप्येकत्वं, पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तत्रापीत्यत आह।

यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्त स्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्तइत्यर्थः। "कर्म्मभिः कर्म्माणि" "गुणैर्गुणाः" इत्यपि

वि० वस्तुतो वैशेषिकानुभवसिद्धमेव पृथक्त्वं गुणान्तरं खण्डनग्रन्थे दीधितिकृता खण्डितमिति तत्रास्माकं विचारबाहुल्यमकिञ्चित्करमेवेति विरम्यते ॥ २ ॥

नन्वेकमेकत्वमित्यादिव्यवहारबलादेकत्वेऽप्येकत्वमेवमेकपृथक्त्वं द्विपृथक्त्वात्पृथगितिव्यवहारबलादेकपृथक्त्वेऽप्येकपृथक्त्वमङ्गीकार्य्यमिति तयोर्गुणत्वं दुर्घटं गुणेऽपि सत्त्वादतआह।

यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्वयोस्तथा एकत्वैकपृथक्त्वयोरपि नैकत्वैकपृथक्त्वे, व्यवहारस्तु प्रकारान्तरेणोपपादनीयइत्यर्थः ॥ ३ ॥

* एकत्वैकपृथक्त्वयो नैकत्वैकपृथक्त्वभावोऽणुत्वमहत्त्वाभ्यामिति क्वचित् पाठः।

सू० निःसंख्यत्वात् कर्म्मगुणानां सर्व्वैकत्वं न विद्यते ॥ ४ ॥

---

उ० दृष्टान्तसूत्रद्वयं पूर्व्वदृष्टान्तसूत्रेणैकवाक्यतापन्नमेवात्र प्रतिभासते यथा कर्म्माणि न कर्म्मवन्ति गुणाश्च न गुणवन्तस्तथैकत्वैकपृथक्त्वे न तद्वती इत्यर्थः ॥ ३ ॥

ननु गुणेषु कर्म्मसु च साधारणएवैकत्वव्यवहारः किमत्र विनिगमकं यद्द्रव्येष्वेवैकत्वं न गुणादिष्वित्यत्राह।

सर्व्वेषामेकत्वं तन्न विद्यते, कुत इत्यत आह निःसङ्ख्यत्वात् कर्म्मगुणानामिति सङ्ख्याया निष्क्रान्ताः निःसङ्ख्यास्तेषां भावो निःसङ्ख्यत्वम्, तथाच कर्म्माणि गुणाश्च निःसङ्ख्यानि, सङ्ख्याया गुणत्वेन गुणेषु तावत् सङ्ख्या न विद्यते नवा कर्म्मसु, गुणानां कर्म्मसु निषेधात् अन्यथा द्रव्यत्वप्रसङ्गात् साधितञ्च सङ्ख्याया गुणत्वमेकत्वस्य च सङ्ख्यात्वमितिभावः ॥ ॥ ४ ॥

---

वि० नन्वेकोघटइतिवदेकमेकत्वमिति व्यवहारस्यसत्वात्तस्य भाक्तत्वे किं वीजमत आह।

सर्व्वैकत्वं सर्व्वेषु पदार्थेषु एकत्वं वर्त्तते इति यन्मतं तन्न विद्यते न प्रामाणिकतया लभ्यते, कर्म्मणां गुणानाञ्च निःसङ्ख्यत्वात् सङ्ख्याशून्यत्वादन्यथा तयोरपि द्रव्यत्वं प्रसज्येत द्वित्वादेरिवैकत्वस्यापि गणनव्यवहारहेतुतया सङ्ख्यात्वस्यापह्नोतुमशक्यत्वादितिभावः ॥ ४ ॥

सू॰ भ्रान्तं तत् ॥ ५ ॥

एकत्वाभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥

---

उ॰ तर्हि कथमेकं रूपमेकोरस इत्यादिज्ञानमित्यत आह।

गुणकर्म्मसु यदेकत्वज्ञानं तद् भ्रान्तमित्यर्थः, सूत्रे च ज्ञानमितिशेषः आक्षिप्तपूर्व्वपक्षत्वात्, प्रयोगस्तु भाक्तः स्वरूपाभेद एव च भक्तिः न च तदेवैकत्वमुक्तोत्तरत्वात् ॥ ५ ॥

ननु द्रव्येष्वप्ययमेकत्वप्रयोगोभाक्तोऽस्तु प्रत्ययस्तु तत्र भ्रान्तः किमेकत्वेनेत्यत आह।

यदि पारमार्थिकमेकत्वं क्वचिन्नाभ्युपगन्तव्यं तदा न प्रयोगोभाक्तः मुख्यपूर्व्वकत्वाद्भक्तेः नवा प्रत्ययोभ्रान्तः प्रमापूर्व्वकत्वाद्भ्रमस्य, प्रमितं ह्यारोप्यते नाप्रमितम् असत्ख्यातेर्निराशात् अन्यथाख्यातेः साधनादितिभावः ॥ ६ ॥

---

वि॰ ननु गुणादावेकत्वाभावे कथमेकं रूपमित्यादिज्ञानमत आह।

तदितिबुद्धिस्थं गुणादावेकत्वज्ञानमुपस्थापयति तथाच गुणादावेकत्वज्ञानं भ्रमरूपमेवेति न ततोवस्तुसिद्धिरित्यर्थः, तादृशव्यवहारस्तु उभयावृत्तिधर्म्मविषयक एव तादृशधर्म्मश्च तत्तद्व्यक्तित्वधीविशेषविषयत्वादिकरएवेतिभावः ॥ ५ ॥

नन्वेकोघट इत्यादिव्यवहारोऽपि कथं न भाक्त इत्यत आह।

एकत्वगुणस्य क्वाप्यनङ्गीकारे एकत्वाभावात् मुख्यैकत्वप्रयोगाभावाद् भाक्तैकत्वप्रयोगो न सम्भवति तस्माद् घटादौ प्रत्यक्षसिद्धमेकत्वं गुणमादाय व्यवहारोमुख्यः एकादिशब्दानामेक-

सू० कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७॥

उ० कार्य्यकारणयोस्तन्तुपटयोरेकत्वमेकपृथक्त्वञ्च यत एवैकत्वमत एवैकपृथक्त्वमपि नहि स्वस्मादेवस्वं पृथगिति सम्भवति, नहि पटे पाट्यमाने प्रत्येकं तन्तूनामाकर्षे तद्भिन्नः पट उपलभ्यते, यदि तन्तुभिन्नः पटः स्यात् तदा तद्भिन्नतयोपलभ्येत घटवत्, एवं घटेऽपि भग्ने कपालद्वयातिरिक्तस्यानुपलम्भात् घटोऽपि कपालद्वयात्मक एव, तदुक्तं "नान्योऽवयव्यवयवेभ्यः" इति तदिदं साङ्ख्यीयं मतं प्रसङ्गान्निराचिकीर्षुराह।

कार्य्यं कारणञ्च द्वयमेकं न भवति, कुत एतदित्याह एकत्वाभावादभेदाभावात् तर्हि यदेव कार्य्यं तदेव कारणं तन्तवः पट इति बहुत्वैकत्वयोः सामानाधिकरण्यानुपपत्तेः, भवत्येव सामानाधिकरण्यमेकस्यामपि पाथःकणि-

वि० त्वत्वादिविशिष्टावच्छिन्नवाचकत्वात्, एकं रूपमित्यादौ तु उभयावृत्तिधर्म्मविशिष्टे एकपदस्य लक्षणैवेति तादृशप्रयोग एव भाक्त इति भावः ॥ ६ ॥

अवयवावयविनोरेकत्वमेकपृथक्त्वञ्च नतु तयोर्भेद इति साङ्ख्यमतं प्रसङ्गान्निराकर्त्तुमाह।

कार्य्यकारणयोर्नैकत्वं नवैकपृथक्त्वं किमप्येकत्वमेकपृथक्त्वं वा कार्य्यकारणोभयनिष्ठं न भवतीत्यर्थः। अत्र हेतुमाह कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावात् एकत्वमभेदः एकपृथक्त्वमवैधर्म्म्यं

उ० कायामपि इतिप्रयोगात् एकस्यामपि योषिति दारा-
इति प्रयोगादिति चेन्न तत्रावयवबहुत्वमादायोपपत्तेः
प्रायःपरमाणौतु प्रकृतिगतं रूपादिबहुत्वमादायेत्येके श-
ब्दस्वाभाव्यमिदमपर्य्यनुयोज्यमित्यपरे नच रण्डाकरण्डाव-
स्थितास्तन्तवः पटव्यपदेशं लभन्ते, नवा धारणाकर्षणे
तन्तवः प्रत्येकं कर्त्तुमीशते, नवा कार्य्यं कारणञ्च द्वयमप्ये-
कपृथक्त्वाश्रयः परस्परावधिकत्वप्रतीतेः, कुत इत्यत आह
एकपृथक्त्वाभावात् एकपृथक्त्वमवैधर्म्यं तदभावात् का-
र्य्यकारणयोरन्योन्यवैधर्म्यानुभवात् तन्तुत्वपटत्वयोः घटत्व-
कपालत्वयोश्च भिन्नबुद्धिव्यपदेशयोः सार्व्वलौकिकत्वात्
कथं तर्हि रूपरसगन्धस्पर्शानां न भेदेनोपलम्भः, अत्यन्त-
सारूप्यात् क्वचिच्चित्रपटादौ भेदोपलम्भोऽपि सङ्ख्यापरि-
माणादिभेदस्य चातिस्फुटत्वात्॥ ७॥

---

वि० तयोरभावात् तन्तुः पटभिन्नः पटविधर्म्मेत्यादिप्रतीतेः सर्व्वसिद्ध-
त्वादितिभावः। ७।

नतु तन्तुः पटभिन्नः पटविधर्म्मावेत्यादिप्रतीतिर्भ्रान्तिरेव
परस्परसंयुक्तानां तन्तूनामेव पटभावात् पटस्य तन्तुभिन्नत्वे
प्रमाणाभावाच्च नच तन्तुवैधर्म्म्येण पटे तन्तुभेदः साधनीय इति
वाच्यं वैधर्म्म्यस्यैवासिद्धत्वात् नहि पटत्वं तन्तुवैधर्म्म्यं, पटाभि-
व्यक्तिदशायां तन्तुष्वेव पटत्वस्वीकारात् तदुक्तमीश्वरकृष्णाचार्य्यैः
"असदकरणादुपादानग्रहणात् सर्व्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्य्यम्" इति।

सू० एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥

---

उ० अनित्ययोरेकत्वैकपृथक्त्वयोः कारणगुणपूर्व्वकत्वमाह।

अनित्ययोः सङ्ख्यापृथक्त्वयोः कारणगुणपूर्व्वकत्वं यद्व्याख्यातं तदनित्ययोरेकत्वैकपृथक्त्वयोरेव बोद्धव्यम्, अन्येषां सङ्ख्यापृथक्त्वानामपेक्षाबुद्धिजन्यत्वात्, यथाऽनित्ययोस्तेजोरूपस्पर्शयोःकारणगुणपूर्व्वकत्वं तथैकत्वैकपृथक्त्वयोरप्यनित्ययोरितिभावः। अर्थादनेकद्रव्याद्वित्वादिका परार्द्धान्ता। इत्युपसङ्ख्यानम्, उपसङ्ख्यानान्तरञ्च तत्समानाधिकरणञ्च द्विपृथक्त्वादि परार्द्धपृथक्त्वपर्य्यन्तम्। तदयं द्वित्वाद्युत्पादविनाशक्रमः। समानजातीययोरसमानजातीययोर्द्रव्ययोश्चक्षुःसन्निकर्षे सति तन्निष्ठैकत्वसङ्ख्ययोर्यत्सामान्यमेकत्वत्वंतयोर्निर्व्विकल्पकानन्तरं तद्विशिष्टगुणबुद्धिरुत्पद्यते सैव चापेक्षाबुद्धिस्तया तयोर्द्रव्ययोर्द्वित्वमुत्पद्यते, उत्पन्नस्य च द्वित्वस्य यत्सामान्यं द्वित्वत्वं तदालोचनं तेनालोचनेनापेक्षाबुद्धेर्नाशो द्वित्वत्वविशिष्टद्वित्वगुणविषया विशिष्टबुद्धिश्चैकदा भवति, तदग्रिमक्षणे च द्वित्वगुणस्यापेक्षाबुद्धिविनाशाद्विनाशः द्वे द्रव्ये इति

---

वि० एवञ्च कार्य्यकारणयोरभेदाद्वैधर्म्म्याभावः स्वयमसिद्धः कथमेकत्वैकपृथक्त्वाभावं साधयिष्यतीत्यत आह।

एतत् अभेदाद्वैधर्म्म्याभाववत्त्वेनैकत्वैकपृथक्त्वाभाववत्त्वम् अनित्ययोः कार्य्यकारणयोः कथितमित्यर्थः तथाच तन्तुपटयो-

उ० द्वित्वविशिष्टद्रव्यज्ञानञ्च युगपदुत्पद्यते, ततस्तस्माद् द्वित्वविशिष्टद्रव्यज्ञानात् संस्कारः। तदयं संक्षेपः उत्पत्स्यमानद्वित्वाधारेणेन्द्रियसन्निकर्षस्तत एकत्वगुणगतसामान्यज्ञानं तत एकत्वत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपाऽपेक्षाबुद्धिस्ततो द्वित्वगुणोत्पत्तिस्ततस्तद्गतसामान्यस्य ज्ञानं ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानं ततो द्वित्वगुणविशिष्टद्रव्यज्ञानं ततः संस्कारइतीन्द्रियसन्निकर्षमारभ्य संस्कारपर्य्यन्तमष्टौ क्षणाः, विनाशक्रमस्तु एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितोविनाशः द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितोविनाशः द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात् तस्य च संस्कारात् विषयान्तरज्ञानाद्वेति। नन्वेकत्वज्ञानात्तद्विशिष्टद्रव्यज्ञानमेव कथं नोत्पद्यते तत्सामग्रीसत्त्वात् नहि गुणज्ञाने सति द्रव्यज्ञाने विलम्बोऽस्ति तथाच ततएवापेक्षाबुद्धेर्विनाशे तन्नाशाच्च तदग्रिमक्षणएवद्वित्वनाश इति द्वे द्रव्ये इति विशिष्टज्ञानपूर्व्वक्षण एव द्वित्वविनाशापत्त्या द्वित्वविशिष्टद्रव्यज्ञानस्यानुत्पत्तिरेवेति चेन्न द्वित्वाद्युत्पत्तिसामग्र्यनभिभूताया एवापेक्षाबुद्धेर्द्रव्यविशिष्टज्ञानजनकत्वनियमात् फलबलेन तथाकल्पनात्, ननु

---

वि० रभेदाङ्गीकारे तन्तूत्पाददशायां पट उत्पद्यते पटोत्पत्तिदशायां तन्तुरुत्पद्यते तन्तुनाशदशायां पटोनश्यति पटनाशदशायां तन्तुर्नश्यतीत्यादिप्रत्ययप्रयोगयोः प्रसङ्गः, नचोत्पत्तिविनाशावेवा-

उ० तथापि स्वजनितसंस्कारेणैवापेक्षाबुद्धिविनाशे पुनः स दोषस्तदवस्थ एव, द्वित्वविशिष्टज्ञानपूर्व्वक्षण एव द्वित्वनाशस्य सम्भवादिति चेन्न केवलगुणज्ञानस्य संस्काराजनकत्वात् नहि केवलोगुणः क्वापि स्मर्य्यते, सर्व्वत्र द्रव्योपरागेणैव गुणस्मरणात्, ननु भवत्वेवं तथापि विशिष्टबुद्धिकालेऽपि द्वित्वनाशे विशिष्टप्रतीत्यनुदयस्तदवस्थ एव नहि वर्त्तमानावभासिनी विशिष्टप्रतीति र्विशेषणनाशकाले सम्भवति तथाऽदर्शनादिति चेन्न विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य विशिष्टज्ञानसामग्र्याः प्रकृतेऽपि सम्भवात् यदि तु विशेषणेन्द्रियसन्निकर्षोऽपि मृग्यते तदा पूर्व्वक्षणे तस्यापि सत्त्वात् पूर्व्वक्षणवर्त्तिन एव सन्निकर्षस्य कारणत्वेनाभ्युपगमात्, विशेषणं विशिष्टज्ञानागोचरोऽपि सम्भवति विशिष्टज्ञानजनकज्ञानविषयत्वमात्रमेव हि विशेषणत्वे तन्त्रं नतु विशिष्टज्ञानविषयत्वमपि। उपलक्षणस्याप्येवं विशेषणत्वापत्तिरिति चेन्नाप्रत्याय्यव्यावृत्तिसामानाधिकरण्यस्य विशेषणत्वे तन्त्रत्वात् उपलक्षणन्तु तद्व्यधिकरणम्, एवं यदा देवदत्तगृहे काकवत्ता तदा काकोविशेषणं, यदा तु उपरिभ्रमन् भ्रमन् तदोपलक्षणम्, एवं सति रूपवति रस इत्यादौ रूपादेरपि

---

वि० प्रामाणिकौ आविर्भावतिरोभावाभ्यामेव तत्प्रतीत्युपपत्तेरिति वाच्यमाविर्भावस्याविर्भावाङ्गीकारेऽनवस्थाप्रसङ्गात्, तदुत्पत्तिस्वीकारे तु किमपराद्धं पटाद्युत्पत्तिभिः, आविर्भावे आवि-

उ॰ विशेषणत्वापत्तिरिति चेन्न इष्टत्वात्, तर्हि तत्रापि र-
सोवर्त्ततेति चेन्न विशिष्टवृत्तेर्विशेषणवृत्तित्वानावश्यकत्वात्
नहि विशेषणं विशिष्टमित्येकं तत्त्वम्, द्वित्वनाशकाले वि-
शेषणसम्बन्धो नास्ति कुतोविशिष्टप्रत्यय इति चेन्न अत-
द्व्यावृत्तेरेव वैशिष्ट्यपदार्थत्वात्, तज्ज्ञानन्तु तत्रापीति न
किञ्चिदनुपपन्नमित्याचार्य्याः। एवं द्वित्वोत्पत्तिविनाशवत्त्रि-
त्वोत्पत्तिविनाशावप्यूहनीयौ। द्वित्वमपेक्षाबुद्धिनाशनाश्यम्,
आश्रयनाशविरोधिगुणान्तराभावे गुणस्य सतोऽविनाशि-
त्वात् चरमज्ञानवत् चरमज्ञानस्यादृष्टनाशनाश्यत्वात्।
क्वचिदाश्रयनाशादपि नश्यति यत्र द्वित्वाधारावयवकर्म्म-
समकालमेकत्वसामान्यज्ञानम्, तद्यथा अवयवकर्म्मसामा-
न्यज्ञाने विभागापेक्षाबुद्धी संयोगनाशगुणोत्पत्ती द्रव्यना-
शद्वित्वसामान्यज्ञाने तत्र द्रव्यनाशाद्द्वित्वनाशः, सामान्यज्ञा-
नादपेक्षाबुद्धिनाशः, अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमा-
नकालत्वात् कार्य्यकारणसमानभावाभावात् यदा तु द्वि-
त्वाधारावयवकर्म्मापेक्षाबुद्ध्योर्यौगपद्यं तदा दाभ्यामाश्रय-
नाशापेक्षाबुद्धिनाशाभ्यां द्वित्वनाशः, तद्यथा अवयवकर्म्मा-
पेक्षाबुद्धी विभागोत्पत्तिद्वित्वोत्पत्ती संयोगनाशद्वित्वसा-
मान्यज्ञाने द्रव्यनाशापेक्षाबुद्धिनाशौ ताभ्यां द्वित्वनाशः
प्रत्येकं सामर्थ्यग्रहात्, इयञ्च प्रक्रिया ज्ञानयो र्वध्यघातक-

वि॰ भावस्योत्पादस्य चानङ्गीकारे आविर्भावस्य सार्व्वदिकत्वप्रसङ्गः
नह्याविर्भावस्य सार्व्वदिकत्वं साङ्ख्यैरपि स्वीक्रियते वस्तुतः पटः

उ॰ पक्षे परमुपपद्यते स एव च पक्षः प्रामाणिकः। ननु द्वित्वत्रित्वादीनां सामग्रीसाम्ये कथं कार्य्यवैलक्षण्यं द्वाभ्यामेकत्वाभ्यां द्वित्वं त्रिभिरेकत्वैस्त्रित्वमिति चेन्न एकत्वे द्वित्वाद्यभावात्, समवायिकारणगतमेव द्वित्वत्रित्वादिकं तन्त्रमिति चेन्न द्वित्वाद्युत्पत्तेः पूर्व्वं तत्र द्वित्वाद्यभावात् तत्रापि कारणचिन्ताया अनिवारणात् अपेक्षाबुद्धावेकत्वेषु च तादृशविशेषस्यानुपलम्भबाधितत्वात् फलबलेन तत्कल्पनेवा द्वित्वादिव्यवहारोऽपि तत एवास्तु किं द्वित्वादिना, अदृष्टविशेषाद्विशेष इति चेदेवं सति द्वित्वारम्भिकयाऽपि सामग्र्या कदाचित्त्रित्वं चतुष्ट्वञ्चोत्पद्येतेत्यनियमप्रसङ्गः। अत्रोच्यते प्रागभावविशेषाद्वि शेषोपपत्तेः यथा तुल्यया सामग्र्या पाकजानां रूपरसगन्धस्पर्शानाम्, प्रागभावोऽपि साधारण एवेति चेन्न स्वस्वप्रागभावस्यैव कार्य्यं प्रति कारणत्वावधारणात् यद्वा शुद्धयाऽपेक्षाबुद्ध्या द्वित्वं द्वित्वसहितया त्रित्वमिति ज्ञेयम्, शतं पिपीलिकानां मया हतमित्यादौ समवायिकारणाभावे द्वित्वं तावन्नोत्पद्यते तथाच गौणस्तत्र सङ्ख्याव्यवहारोद्रष्टव्यः। येनावमादौ नियतापेक्षाबुद्ध्यभावाद्बहुत्वमात्रमुत्पद्यते नतु शतसहस्रादिसङ्ख्येति श्रीधराचार्य्याः एवं सति शतसहस्रादिकोटिकस्तत्र संशयो न स्यात् न स्याच्च महती महत्तरा सेनेति नैवमित्युदयनाचार्य्याः। अत्रैवमालोचनीयं त्रित्वादिपरार्द्धपर्य्यन्ता सङ्ख्यैव बहुत्वम्, तद्भिन्नं वा स-

---

वि॰ उत्पद्यते पटो विनश्यतीत्यादिकः सार्व्वलौकिकोऽनुभव एवोत्पाद-

उ० ख्यान्तरम्, नाद्यः सेनावनादावपि शतसहस्रादिसङ्ख्योत्पत्ति-नियमात्, न द्वितीयः चित्वादिविलक्षणस्य बहुत्वस्याननुभवात् तथाच प्रतिनियतैकत्वानालम्बनापेक्षाबुद्धिजनितशतादिसङ्ख्यैव बहुत्वं शताद्यभिव्यक्तिस्तु तत्र न भवति तादृग्व्यञ्जकाभावात्, वयन्तु ब्रूमः चित्वादिसमानाधिकरणं सङ्ख्यान्तरमेव बहुत्वं चित्वादिजनकापेक्षाबुद्धिजन्यं प्रागभावभेदादेवंभावः, कथमन्यथा बहवस्तावत् सन्ति शतं वा सहस्रं वेति विविच्य न जानीम इति, यथैकद्रव्ये महत्त्वं दीर्घत्वञ्च तथैकत्रैवाधिकरणे चित्वादिकं बहुत्वञ्च, भवति हि शतं वा सहस्रं वा चूतफलान्यानयामीति प्रश्ने बहवस्तावदानीयन्तां किं विशेषजिज्ञासयेति, एवञ्च द्वित्वसहितापेक्षाबुद्ध्या त्रित्वं त्रित्वसहितापेक्षाबुद्ध्या चतुष्ट्वमेवमुत्तरोत्तरम्, बहुत्वोत्पत्तौ तु नापेक्षाबुद्धौ पूर्व्वपूर्व्वसङ्ख्याविशिष्टत्वनियमः, अतएव सेनावनादिषु बहुत्वमात्रमुत्पद्यते नतु सङ्ख्यान्तरं संशयस्त्वसत्कोटिकोऽपि भवत्येवेति। तत्समानाधिकरणञ्च पृथक्त्वमिति यथा द्वित्वं तथा द्विपृथक्त्वमित्यादि। ननु द्वित्वत्रित्वादिसमानाधिकरणैरेकपृथक्त्वैरेव तद्व्यवहारोपपत्तौ किं द्विपृथक्त्वादिनेति चेन्न घटात् पटलोष्टौ पृथगिति द्विपृथक्त्वस्यान्योन्यावधिकत्वाप्रतीतेः प्रत्येकपृथक्त्वे च तत्प्रतीतेरिति वैषम्यात्, नचैवं द्विपरत्वापत्तिः द्वित्वसमानाधि-

वि० विनाशसाधकः एकविषयकानुभवस्य विषयान्तरविषयकत्वस्वीकारे घटपटादेरप्यपलापापत्तेरित्यसमसदावेशेन॥ ८॥

सू॰ अन्यतरकर्म्मज उभयकर्म्मजः संयोगजश्च संयोगः ॥ ९ ॥

---

उ॰ करणाभ्यां परत्वाभ्यामेवतदुपपत्तेः, यथा पृथक्त्वे परस्परावधिकत्वविरोधस्तथा न परत्वे, द्वाविमौ पराविति द्वाविमौ नीलाविितिवदुपपत्तेः समानदेशस्थयोः संयुक्तसंयोगभूयस्त्वसाम्येऽपि दिक्पिण्डसंयोगस्यासमवायिकारणस्य भेदेन भिन्नकार्य्योत्पत्तिसम्भवात्, मिलितयोरेकत्वयोर्द्वित्वं प्रति यथाऽसमवायिकारणत्वं तथा मिलितयोरेकपृथक्त्वयोर्द्विपृथक्त्वं प्रत्यसमवायिकारणत्वसम्भवात् द्रव्यातिरिक्तमेकं कार्य्यं प्रत्यनेकेषां संयोगानां कार्य्यैकार्थसमवायप्रत्यासत्त्या सम्भूयारम्भकत्वादर्शनात्, कारणैकार्थप्रत्यासत्त्या तु बहवस्तन्तुतुरीसंयोगा एकं पटतुरीसंयोगमारभन्त एवेतिदिक्। द्वित्वादिविनाशवद्विपृथक्त्वादिविनाशोऽप्यूहनीयः ॥ ८ ॥

प्रकरणान्तरमारभते।

संयोगे संयुक्तप्रतीतिरबाधिता प्रमाणं कार्य्याणि च, अवयवसंयोगेषु द्रव्यमग्निसंयोगे पाकजा रूपादयः प्रचये परिमाणविशेषः भेर्य्याकाशसंयोगे शब्द इत्याद्यूह्यम्। नचाविरलोत्पत्तिरेव संयोगः, क्षणभङ्गपरिणामयो र्निरासात् अप्राप्तिपूर्व्विका प्राप्तिः संयोगः, सचान्यतरकर्म्मजः। क्रियावता श्येनेन निष्क्रियस्य स्थाणोस्तदभिमुखक्रियारहितस्य सक्रिय-

---

वि॰ संयोगपरीक्षामारभते।

अन्यतरकर्म्मजः श्येनशैलादिसंयोगः, उभयकर्म्मजो मेषद्वया-

उ० स्यापि धावतः यथा धावता पुरुषान्तरेण पृष्ठदेशसंयोगः, उभयकर्म्मजः मेषयोर्मल्लयोर्व्वा प्रत्येकं गृहीतसामर्थ्याभ्यामुभाभ्यामेव तज्जननात्, तृतीयस्त्वङ्गुलितरुसंयोगाद्धस्ततरुसंयोगः, स चैकस्मादपि भवति यथा तन्तुवीरणसंयोगात् पटवीरणसंयोगः, क्वचिद्द्वाभ्यां संयोगाभ्यामेकः संयोगः यथा द्वाभ्यां तन्तुभ्यामाकाशस्य द्वौ संयोगौ ताभ्यामेक एव द्वितन्तुकपटस्याकाशेन संयोगः, क्वचिच्च बहुभिरपि संयोगैरेकः संयोग आरभ्यते यथा दशभिस्तन्तुभिराकाशस्य दशसंयोगा एकमेव दशतन्तुकपटाकाशसंयोगमारभन्ते, क्वचित् पुनरेकस्मादपि संयोगादसमवायिकारणात् संयोगद्वयमुत्पद्यते यथा पार्थिवाप्ययोः परमाण्वोः प्रथममनारम्भके संयोगे जाते पार्थिवे परमाणौ पार्थिवपरमाण्वन्तरेण, आप्ये च परमाणावाप्यपरमाण्वन्तरेण, द्व्यणुकद्वयारम्भकं संयोगद्वयमुत्पद्यते ताभ्यां संयोगाभ्यां सजातीयनिष्ठाभ्यां द्व्यणुकद्वयं युगपदारभ्यते तत्र यः पार्थिवाप्यपरमाण्वोरनारम्भकः संयोग उत्पन्नस्तेनैकेनैव पार्थिवप*रमाणुनाप्यद्व्यणुकेनैकः संयोगः आप्य†परमाणुना पार्थिवद्व्यणुकेनापरःसंयोगो द्व्यणुकयोरूपाद्युत्पत्तिसमकालमेव जायते, कारणाकारणसंयोगेन कार्य्याकार्य्यसंयोगयोरवश्यं जननात्, मूर्त्तैर्विभूनामन्यतर-

---

वि० द्विसंयोगः, संयोगजः कपालतरुसंयोगजन्यस्तरुकुम्भयोः संयोग इति त्रिविधः संयोगः, प्रकारान्तरेणाप्ययं द्विविधः अभिघा-

---

* परमाणोराप्येतिपाठः साधुः। † परमाणोरितिपाठः साधुः।

उ० कर्म्मज एव, विभुनोस्तु न संयोगः कारणाभावात् कर्म्म तावत्तत्र नास्ति नच कारणं तेन कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगोऽपि नास्ति, नित्यस्तु संयोगो न सम्भवति अप्राप्तिपूर्व्विकायाः प्राप्तेः संयोगत्वात् नित्यत्वे तद्वि*घातात् एवञ्च सति विभागोप्यजस्तत्र स्यात् न चेष्टापत्तिः संयोगविभागयोर्विरोधिनोरविनश्यद्वस्तुयोरेकत्रानुपपत्तेः, किञ्च संयोगं प्रति प्रयोजिका युतसिद्धिः नच विभुनोस्तत्सम्भवः साहि द्वयोरन्यतरस्य वा पृथग्गतिमात्वं युताश्रयाश्रयित्वं वा, विनाशस्तु संयोगस्य समानाधिकरणाद्विभागादाश्रयनाशादपि क्वचित् यथा तन्तुद्वयसंयोगानन्तरमेकस्य तन्तोरवयवेऽंशौ कर्म्म जायते तेनांश्वन्तराद्विभागः क्रियते विभागादारम्भकसंयोगनाशस्ततस्तन्तुविनाशस्तन्तुविनाशात् संयोगनाशो यत्र तन्तुद्वयं चिरं संयुक्तं सदनुत्पन्नक्रियं भवति, केचित्तु तन्त्ववयवकर्म्मणा यदा तन्त्वारम्भकसंयोगनाशः क्रियते तदा तन्त्वन्तरे कर्म्मचिन्तनात् आश्रयनाशविभागाभ्यां युगपदुत्पन्नाभ्यां संयोगो नश्यतीत्याहुः। तच्चानुपपन्नं समवायिकारणनाशक्षणे विभागानुत्पत्तेः समवायिकारणस्य कार्य्यसमकालस्थायित्वनियमात् सचायं संयोगो द्रव्यारम्भे निरपेक्षो गुणकर्म्मारम्भे सापेक्षः स्वसमानाधि-

---

वि० तेनेदमस्येति तत्राद्यः शब्दहेतुः, द्वितीयः शब्दाहेतुरित्यादिकमूह्यम्॥ ९॥

---

* तद्विरोधादिति क्वचित् पाठः।

सू॰ एतेन विभागोव्याख्यातः॥ १०॥

उ॰ करणात्यन्ताभावप्रतियोगी तथैवानुभवात् शाखामाचाव-च्छेदेनापि महति न्यग्रोधतरौ वर्त्तमानः कपिसंयोगः,न्यग्रो-धतरौ कपिसंयोग इत्यनुभवात् अवच्छेदमाचेणान्यथासि-द्धौ परमाणुवृत्तिरापद्येत तथाच नोपलभ्येत विभूनामप्यु-पाधिभेद एव प्रदेशस्तदवच्छेदेन वर्त्तमानस्य संयोगस्याव्या-प्यवृत्तित्वं परमाणुनिष्ठस्यापि संयोगस्य दिगाद्योऽवच्छे-दकाश्चिन्तनीयाः॥ ९॥

विभागे संयोगोत्पत्तिप्रकारमतिदिशन्नाह।

संयोगवद्विभागोप्यन्यतरकर्म्मज उभयकर्म्मजोविभागजश्च, श्येनकर्म्मणा स्थाणुश्येनविभागः, संयुक्तयोर्मल्लयोर्मेषयोर्वा कर्म्मभ्यां तदुभयविभागः, सचायं कर्म्मोत्पत्त्यव्यहितक्षणो-त्पत्तिकः अपेक्षणीयान्तराभावात् तदुक्तं "संयोगविभा-गयोरनपेक्षकारणं कर्म्म" इति, विभागे जननीये आश्रयः, संयोगे च जननीये पूर्व्वसंयोगनाशश्चापेक्षणीय इति चेन्न स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षत्वस्य कर्म्मणोनिरपे-क्षत्वात्, विभागजस्तु विभागोद्विविधः कारणमाचविभागज-कारणाकारणविभागभेदात् कारणाकारणविभागजका-

वि॰ विभागे संयोगतुल्यतामाह।

विभागोऽपि चिविधः एककर्म्मजोभयकर्म्मजविभागजभेदा-त्तचाद्यः श्येनशैलयोः द्वितीयोमेषयोः तृतीयस्तु द्विविधः कारणा-

उ० र्थाकार्य्यविभागभेदाच्च, तत्र कारणमात्रविभागात् कारणा-
कारणविभागो यथा कपालद्वयविभागात् कपालाकाशवि-
भागः, कारणाकारणविभागाच्च कार्य्याकार्य्यविभागो यथा-
ऽङ्गुलीतरुविभागाद्धस्ततरुविभागस्ततः शरीरतरुविभाग-
इति। ननु विभाग एव न प्रमाणं संयोगाभाव एव विभाग-
व्यवहारादिति चेन्न संयोगाभावोऽत्यन्ताभावश्चेत् गुणक-
र्म्मणोरपि विभागव्यवहारप्रसङ्गात्, द्रव्ययोर्वर्त्तमानः संयो-
गात्यन्ताभावो विभक्तप्रत्ययहेतुरिति चेन्नावयवावयवि-
नोरपि प्रसङ्गात्, अकार्य्यकारणभूतयोर्द्रव्ययोरितिचेत् वि-
न्ध्यहिमवतोरपि स्यात्, भवत्येव तत्रेति चेन्न भ्रान्तस्य
गुणकर्म्मणोरपि भावात् अभ्रान्तमधिकृत्य व्यवहारस्य चि-
न्त्यमानत्वात्, संयोगविनाशोविभाग इति चेत् एकतरसंयो-
गिनाशेन नष्टे संयोगे तद्व्यवहारप्रसङ्गात्, संयोगिनोर्वि-
द्यमानयोरितिचेत् एकसंयोगनाशानन्तरं पुनः संयुक्तयोः
कुवलामलकयोः संयोगदशायामपि विभक्तप्रत्ययप्रसङ्गात्,
यावत्संयोगनाशस्तथेतिचेदेकसंयोगनाशे तदभावप्रसङ्गात्
तत्र यावदर्थाभावात्, तस्मादस्ति विभागोऽर्थान्तरम्, सच
गुणः विरोधिगुणान्तरनाश्यः, विरोधिनं समानाधिकरणं

---

वि॰ मात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति तत्राद्योयथा
प्रथमं कपाले कर्म्म ततः कपालद्वयविभागः ततो घटारम्भकसंयो-
गनाशस्ततोघटनाशस्ततस्तेन कपालद्वयविभागेन कपालस्याका-
शादिना विभागो जन्यते ततः कपाल.का.शादिसंयोगनाशः तत-

उ॰ गुणमन्तरेण सत्याश्रये गुणनाशानुपपत्तेः, कर्म्मैव संयोगनाशकं स्यादिति चेन्न विरोधिनोगुणस्य गुणनाशकत्वात्, किञ्च यत्राङ्गुलीहस्तभुजशरीराणां स्वस्वकर्म्मणा तत्संयोगस्तत्राङ्गुलीमात्रे समुत्पन्नेन कर्म्मणाऽङ्गुलीतत्संयोगनाशसम्भवेऽपि हस्ततत्भुजतच्छरीरतत्संयोगानामनाशप्रसङ्गात् हस्तादीनामक्रियत्वात् अङ्गुलीकर्म्मणश्च व्यधिकरणत्वात् व्यधिकरणस्यापि कर्म्मणः संयोगनाशकत्वे क्वचिदप्युत्पन्नेन कर्म्मणा युगपदेव सर्व्वसंयोगनाशापत्तेः, त्वन्मते तत्र का गतिरितिचेत् अङ्गुलीतत्विभागेन हस्ततत्विभागोजनितो हस्ततत्संयोगनाशक इत्यभ्युपगमात्, व्यधिकरणेनाङ्गुलीकर्म्मणैव हस्ततत्संयोगनाशोऽस्तु नचातिप्रसङ्गः *आश्रयाश्रितपरम्परासंयोगस्यैव व्यधिकरणकर्म्मनाश्यत्वाभ्युपगमादिति सर्व्वज्ञेन यदुक्तं तदपि न युक्तं विरोधिनः समानाधिकरणस्यैव सर्व्वत्र नाशकत्वानुभवात् बाधकमन्तरेण तत्परित्यागानुपपत्तेः। शब्दविभागौ च विभागकार्य्यौ तत्र विभागस्य शब्दासमवायिकारणत्वं न्रूयामहे नहि वंशे पाट्यमाने दले च चरणयन्त्रणावष्टब्धे दलान्तरे चोपरिकृष्यमाणे यः शब्दो जायते तत्र दलाकाशविभागादन्य-

वि॰ उत्तरदेशसंयोगस्ततः कर्म्मनाश इति, नच प्राथमिकेन कपालकर्म्मणा कथं कपालाकाशविभागोन जन्यते इति वाच्यम् एकस्य कर्म्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वविरोधात् अन्यथा विकसत्कम-

* आश्रयाश्रितसमवेतसंयोगादेरेवेति क्वचित् पाठः।

उ० दसमवायिकारणं पश्यामः नच दवदहनदह्यमानस्फुट-
द्वेणुचीत्कारे विभागातिरिक्तमसमवायिकारणं पश्यामः,
कारणाकारणविभागाच्च कार्य्याकार्य्यविभागमनुमन्यामहे
कथमन्यथा स्वस्वकर्म्मजनिताङ्गुलीतरुसंयोगहस्ततरुसंयोग-
भुजतरुसंयोगशरीरतरुसंयोगानामङ्गुलीमात्रोत्पन्नकर्म्मणा-
ऽङ्गुलीतरुविभागे सति अङ्गुलीतरुसंयोगनाशे सत्यपि हस्त-
तरुसंयोगादीनां नाशः, तत्र हि विभागजविभागपरम्परैव
तत्तत्संयोगनाशिकेत्युक्तत्वात्, कारणद्वयविभागपूर्व्वके तु
कारणाकारणविभागे न संप्रत्ययः यतो वंशदले यदुत्पन्नं
कर्म्म तेन दलान्तरविभागवदाकाशादिविभागस्यापि जन-
नसम्भवात् यावद्भिः समं तद्दलं संयुक्तमासीत् तावद्भिस्तत्-
कर्म्मणा विभागस्य दर्शनात् नह्यङ्गुल्यामुत्पन्नेन कर्म्मणाऽ-
ङ्गुल्यन्तरविभागवदाकाशादिदेशेभ्योऽपि विभागा न जन्यन्ते
कमलदले चोत्पन्नेन कर्म्मणा दलान्तरविभागवदाकाशा-
दिदेशेभ्योवा न विभागा आरभ्यन्ते, द्रव्यारम्भकसंयोगावि-
रोधिनः शतमपि विभागानेकं कर्म्मारभतां यत्तु कर्म्म द्र-
व्यारम्भकसंयोगविरोधिनं विभागमारभते न तत् द्रव्यार-

---

वि० नकुशलादिभङ्गप्रसङ्गात् तस्मादनारम्भकाकाशकपालसंयोग-
प्रतिद्वन्द्विविभागं न कपालकर्म्म जनयेत् तस्य घटारम्भकसंयो-
गप्रतिद्वन्द्विविभागजनकत्वात्, नच कपालविभागेनैव घटना-
शात् पूर्व्वं कुतः कपालाकाशविभागो न जन्यते इति वाच्यम्
आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशा-

उ० भकसंयोगाविरोधिनमपि यच्च द्रव्यारम्भकसंयोगाविरोधिनं तद्द्रव्यारम्भकसंयोगविरोधिनमिति ब्रूमः, कुतएतदिति चेत् कार्य्यवैचित्र्येण कारणवैचित्र्यस्यावश्यकत्वात्, ननु कर्म्मणि वैचित्र्यमावश्यकं तथाचैकं कर्म्म द्रव्यारम्भकसंयोगविरोधिनं विभागं जनयतु यथा विकसत्कमलकुड्मलादावपरञ्च द्रव्यारम्भकसंयोगविरोधिनमविरोधिनञ्चोभयमिति मैवं कार्य्यविरोधो हि कारणवैचित्र्यकल्पनामूलं सच विरोधः एकस्य द्रव्यारम्भकसंयोगप्रतिद्वन्द्वित्वेन,अपरस्य तु तदप्रतिद्वन्द्वित्वेनेति तथैव वैचित्र्यस्यापि कल्पनौचित्यात् तच्चेदं वंशदले वर्त्तमानं कर्म्म दलद्वयविभागमात्रं जनयति, सच विभागोऽग्रे आकाशादिदेशाद्विभागं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विनं विभागमारभते, तस्य च निरपेक्षस्य विभागजनने कर्म्मत्वापत्तिरिति द्रव्यनाशविशिष्टं कालमपेक्षते, ननु तदानीमपि कर्म्मैव तज्जनयतु, अतीतकालत्वात् विभागजनने कर्म्मणः स्वोत्पत्त्यनन्तर एव कालः, नन्वेवं विभागेन जनिते विभागान्तरे कर्म्म प्रदेशान्तरसंयोगमपि न जनयेत्, न संयोगजननं प्रति कर्म्मणोऽनतीतकालत्वात् अन्यथा कर्म्म न नश्येदेव तस्योत्तरसंयोगमात्रनाश्यत्वात्, सोऽयं विभाग उत्तरसंयोग-

---

वि० न्तरविभागासम्भवात्। कारणाकारणविभागजन्यविभागो यथा यत्र हस्तक्रियया हस्ततरुविभागस्तेन शरीरतरुविभागो जायते तत्रच हस्तक्रिया न कारणं व्यधिकरणत्वात् शरीरे तु तदा क्रिया नास्ति अवयविक्रियाया यावदवयवक्रियानियतत्वात् अत-

उ० नाशः चणचयस्थायी, क्वचिदाश्रयनाशनाशः तद्यथा तन्तोरवयवेंऽशौ कर्म्म तदनन्तरमंशुद्वयविभागस्तदैव तन्त्वन्तरे कर्म्म ततोऽंशुद्वयविभागेन तन्त्वारम्भकसंयोगनाशस्तन्तुकर्म्मणा च विभागस्ततो द्रव्यारम्भकसंयोगनाशात्तन्तुनाशस्तन्नाशाच्च तन्त्वन्तरकर्म्मजन्यविभागनाशः। नन्वेवं तन्त्वन्तरोत्पन्नस्य *कर्म्मणो न नाशः स्यादिनाशकाभावात् उत्तरसंयोगेन हि तन्नाश्येत, विभागे च नष्टे नोत्तरसंयोग इति चेन्न तन्तौ यत् कर्म्मोत्पन्नं तेन यथा विनश्यदवस्थतन्तो र्विभागोऽजनितस्तथा तदंशोरपि विभागो जननीयः सोऽप्यारम्भकसंयोगविरोध्येव तेनांशुतन्तुविभागेन तन्त्वाकाशविभागस्तेन चोत्तरसंयोगस्तेन †ततः कर्म्मनाशः यद्वा यत्र तन्तौ यदा कर्म्म तदंशावपि तदैव कर्म्म तच्च कर्म्म विनश्यदवस्थतन्तु तदवयवाकाशादिदेशाद्युगपदेव विभागानारभते सर्व्वेषां विभागानामारम्भकसंयोगाविरोधित्वात् तथाच कारणमंशुरकारणञ्चाकाशादि तद्विभागात् कार्य्यस्य तन्तोरकार्य्येणाकाशादिना यो विभाग उत्पन्नस्तदनन्तरोत्पत्तिकेन संयोगेन तन्तुसमवेतस्य कर्म्मणो विनाश इति। क्वचिद्द्वाभ्यां तद्यथा तन्तुवीरणयोः संयोगे सति तन्त्ववयवेंऽशौ कर्म्म वीरणे च क-

---

वि० तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागो जन्यते इति, अयमस्माद्विभजते इति प्रत्यक्षसिद्धोऽयं विभागगुणः संयोगनाशेन नान्यथासिद्ध इति संक्षेपः॥ १०॥

---

* कर्म्मणस्तादवस्थ्यं विनाशकाभावादिति क्वचित् पाठः।

† ततः कर्म्मनाश इति क्वचित् पाठः।

सू० संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः॥ ११॥ कर्म्मभिः कर्म्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति॥ १२॥

युतसिद्ध्यभावात् कार्य्यकारणयोः संयोगविभागौ न विद्येते॥ १३॥

---

उ० प्रत्येकः कालः अंशुकर्म्मणाऽन्तरविभागस्तेन च संयोगस्य तन्त्वारम्भकस्य विनाशः वीरणकर्म्मणा च तन्तुवीरणविभागस्तन्तुवीरणसंयोगनाशश्च तन्त्वारम्भकसंयोगनाशानन्तरं तन्तुनाशस्तन्तुवीरणसंयोगनाशानन्तरं वीरणस्य प्रदेशान्तरसंयोगस्ताभ्यामाश्रयनाशसंयोगाभ्यां विभागनाशः॥ १०॥

ननु संयोगेऽपि संयोगोऽस्तु विभागेऽपि विभाग इतिप्रसङ्गनिवारणार्थमाह।

यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तथा संयोगविभागौ न संयोगविभागवन्तौ॥ ११॥ द्वितीयञ्च सूत्रं व्याख्यातमेव॥ १२॥

ननु द्रव्ययोरवयवावयविनोः संयोगः कथं नेत्यत आह।

---

वि० संयोगविभागयोः संयोगविभागशून्यतामाह।

संयोगविभागौ न संयोगविभागवन्तौ यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती गुणानां निर्गुणत्वादित्यर्थः॥ ११॥ कर्म्मभिरिति सूत्रं स्पष्टार्थं स्मरणार्थं वा पुनरुक्तम् अस्यार्थः प्रागेवाभिहितः॥ १२॥

ननु अवयवावयविनोः कथं न संयोगविभागावित्याशङ्कायामाह।

सू॰ गुणत्वात् ॥ १४ ॥

गुणोऽपि विभाव्यते ॥ १५ ॥

---

उ॰ असम्बन्धयोर्विद्यमानत्वं युतसिद्धिः पृथगाश्रयाश्रितत्वं वा तदभावस्त्ववयवावयविनोरित्यर्थः ॥ १३ ॥

इदानीं प्रसङ्गाच्छब्दार्थयोः साङ्केतिकं सम्बन्धं साधयितुं प्रकरणान्तरम्, तत्र पूर्व्वपक्षमाह।

संयोगस्येतिशेषः, तथाच गुणस्य शब्दस्य गुणः संयोगः कथं स्यात् अर्थेन घटादिनेत्यर्थः ॥ १४ ॥

किञ्च विषयोऽपि क्वचिद्रूपरसादिलक्षणस्तेन संयोगो न सम्भवति गुणे गुणानङ्गीकारादित्याह।

गुणोऽपि विषय इतिशेषः गुणोऽपि रूपादिः शब्दस्य

---

वि॰ युतसिद्धिः परस्परसम्बन्धशून्ययोरवस्थानं कार्य्यकारणयोरवयवावयविनोर्न संयोगविभागौ वर्त्तेते युतसिद्ध्यभावात् नहि घटाद्यवयवी कपालाद्यवयवासम्बन्धः सन् तिष्ठति येन तयोः संयोगविभागौ सम्भाव्येयातामिति ॥ १३ ॥

ननु शब्दार्थयोः कथं संयोगः सम्भवति शब्दस्य गुणत्वेन गुणवत्त्वासम्भवात् नच नास्त्येव तयोः संयोग इति वाच्यं तथा सत्यसम्बद्धत्वाविशेषेण घटादिशब्दात् पटादिशाब्दबोधापत्तेरित्यतः पदपदार्थयोः शक्तिसम्बन्धं व्यवस्थापयिष्यन् पूर्वपक्षयति।

प्रतिपादकस्य शब्दस्य गुणत्वात् तत्र प्रतिपाद्यस्य घटादेः संयोगो न सम्भवतीत्यर्थः ॥ १४ ॥

यत्र प्रतिपाद्योऽपि गुणस्तत्र नितरां तथेत्याह।

सू० निष्क्रियत्वात् ॥ १६ ॥

असति नास्तीति च प्रयोगात् ॥ १७ ॥

उ० विषयो नतु तेन समं संयोगः सम्बन्ध इत्यर्थः यद्वा गुणोऽपि शब्देन विभाव्यते प्रतिपाद्यते तेन च शब्दस्य न संयोगः सम्बन्ध इत्यर्थः ॥ १५ ॥

किञ्च कस्यचिदाकाशादेर्द्रव्यस्य नान्यतरकर्म्मजः संयोगो नोभयकर्म्मजः शब्दस्यापि निष्क्रियत्वादित्याह ।

शब्दस्य कस्यचिदर्थस्य चेतिशेषः ॥ १६ ॥

सम्बन्धे बाधकान्तरमाह ।

असत्यपि घटपटादौ, नास्ति गेहे घटः, नास्ति पटः, श्रुतपूर्व्वो गकारो नास्ति, अभूत् पटः, पटोभविष्यतीत्या-

वि० गुणोऽपि विभाव्यते गुणो रूपादिः शब्दैः प्रतिपाद्यते तयोरुभयोर्गुणत्वात् संयोगसम्बन्धो न सम्भवतीत्यर्थः ॥ १५ ॥

एवं गगनादिशब्दप्रतिपाद्ये आकाशादिद्रव्येऽपि संयोगस्य सम्बन्धता न सम्भवति प्रतिपाद्यप्रतिपादकयोः कर्म्मशून्यत्वेन क्रियाजन्यस्य संयोगस्यासम्भवादित्याह ।

गगनादिशब्दस्य गगनादेश्च निष्क्रियत्वात् संयोगो न सम्भवतीत्यर्थः ॥ १६ ॥

प्रतिपाद्यस्यावर्त्तमानत्वादपि संयोगो न सम्भवतीत्याह ।

असति अविद्यमाने नास्तीति चकाराद्भविष्यतीति च प्रयोगदर्शनात् तथाचातीतघट इदानीं नास्ति परदिने घटोभविष्यतीत्यादिप्रयोगेष्व अतीतानागतघटयोर्बोधो भवति नच ताभ्यां शब्दस्य संयोगादिः सम्भवतीत्यर्थः ॥ १७ ॥

सू० शब्दार्थावसम्बन्धौ ॥ १८ ॥

संयोगिनोदण्डात् समवायिनोविशेषाच्च ॥१९॥

---

उ० दिप्रयोगदर्शनादित्यर्थः। तथाचासता घटादिना शब्दस्य न संयोगो नवा समवाय इति भावः ॥ १७ ॥

किञ्चात इत्यत आह।

शब्दार्थयोः संयोगस्तेन्नास्ति तदेतदायातं शब्दार्थावसम्बन्धावेवेत्यर्थः ॥ १८ ॥

ननु संयोगसमवाययोरन्यतरसम्बन्धः कथं नस्यादित्यत आह।

दण्डी पुरुषः हस्ती कुञ्जर इति प्रत्ययो स्तः, तत्र प्रथमः संयोगात्, द्वितीयः समवायात् हस्तेऽवयवविशेषे कुञ्जरस्य समवायाधीनः प्रत्ययः, हस्तः समवायितया यस्यास्ति स हस्तीति विशेषादिति विशेष एव हस्तादौ समवायसम्बन्धाद्विशेषणत्वं नतु तन्त्वादीनामपि तन्तुमान् पट इत्यादिर-

---

वि० माभूत् संयोगादिः पदपदार्थयोः सम्बन्धः का नो हानिरित्यत आह।

शब्दार्थयोः संयोगादिसम्बन्धासम्भवे तावसम्बन्धावेव स्यातां तथा चातिप्रसङ्ग इति भावः ॥ १८॥

शब्दार्थयोः संयोगादिसंसर्गावगाही प्रत्ययोऽपि नास्तीत्याह।

दण्डात् दण्डमवगाह्य संयोगिनः दण्डसंयोगिनः पुरुषस्य विशेषादवयवविशेषमवगाह्य समवायिनोऽवयविनः प्रतीति र्भवतीतिशेषः तथाच यथा संयोगसम्बन्धावगाही दण्डी पुरुष इति

सू० सामयिकः शब्दादर्थप्रत्ययः ॥ २० ॥

---

उ० वयवविशेषणभावेन प्रत्ययो भवति, एवं घटशब्दवान् घटो-ऽर्थइति प्रत्ययो न भवति, तथाच शब्दार्थयोर्न संयोगो नापि समवाय इति भावः ॥ १९ ॥

ननु यदि न संयोगो नवा समवायः शब्दार्थयोस्तर्हि केन सम्बन्धेन शब्दोनियतमर्थं प्रतिपादयतीत्यत आह।

सामयिक इति समय ईश्वरसङ्केतः अस्माच्छब्दादय-मर्थोबोद्धव्य इत्याकारः, यः शब्दोयस्मिन्नर्थे भगवता सङ्केतितः स तमर्थं प्रतिपादयति तथाच शब्दार्थयोरीश्वरेच्छैव

---

वि० प्रत्ययः समवायसम्बन्धावगाही करी कुञ्जर इति प्रत्ययश्च सार्वजनिको लोकानां, तथा घटवान् घटशब्दः घटशब्दवान् घट-इत्यादिप्रत्ययो नास्तीति पदपदार्थयोर्न संयोगो नवा समवायः सम्बन्ध इत्यर्थः। करी कुञ्जर इत्यादौ तु स्वानुयोगिकसमवायः संसर्गतया भासते, कपालं घटवदित्यादौतु समवाय एवेत्यादि-कमूहनीयम्॥ १९ ॥

इदानीं शाब्दबोधौपयिकं पदपदार्थयोः सम्बन्धं प्रदर्शयति।

शब्दादर्थप्रत्ययः सामयिकः समयरूपसम्बन्धप्रयोज्यस्तथाच पदपदार्थयोः समयरूपः सम्बन्ध एव शाब्दबोधनियामकः, समयश्च सङ्केतः, स च द्विविधो नित्य आधुनिकश्च, तत्र नित्यसङ्केतः शक्तिः, आधुनिकसङ्केतः परिभाषा, सङ्केतश्चास्माच्छब्दादयमर्थो-बोद्धव्यइत्याकारकः, अयं शब्द इममर्थं बोधयत्वित्याकार-कोवा तदुक्तम्,।

उ० सम्बन्धः स एव समयस्तदधीन इत्यर्थः, यथा नकुलदंष्ट्राग्र-स्पृष्टा या काचिदोषधिः सा सर्व्वाऽपि सर्पविषं हन्ति, स च समयः क्वचिद्व्यवहारादुन्नीयते यथा प्रयोजकेन घटमानयेत्युक्ते प्रयोज्यस्य कम्बुग्रीवावन्तमर्थमानयतो ज्ञानं तावदनुमिनोति तटस्थो बालः, इयमस्य प्रवृत्तिर्ज्ञानजन्या प्रवृत्तित्वात् मत्प्रवृत्तिवत्, तच्च ज्ञानमेतद्वाक्यजन्यमेतदनन्तरभावित्वात्, एतज्ज्ञानविषयोऽयं कम्बुग्रीवावानर्थो घटपदवाच्य इत्यावापोद्वापप्रक्रियया बालस्य घटपटादावर्थे व्युत्पत्तिः,

---

वि० "आजानिकश्चाधुनिकः सङ्केतो द्विविधः स्मृतः।
नित्य आजानिकस्तत्र या शक्तिरिति गीयते।
कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः"। इति।

शक्तिग्रहश्च व्यवहारादितो भवति तदुक्तम्,

"शक्तिग्रहं व्याकरणोप*मानात् कोषाप्तवाक्याद्व्यवहारतश्च।
सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद्विवृतेर्वदन्ति"।

इति। धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति यथा "कर्म्मणि द्वितीया" "कर्त्तरि परस्मैपदम्" इत्याद्यनुशासनात् कर्म्मत्वादौ द्वितीयादेः, उपमानाद् गवादिसादृश्यज्ञानात् गवयत्वादिजात्यवच्छिन्ने गवयादिपदानां शक्तिग्रहः, कोषात्

"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति"।
"शितिं गुणे तद्वदर्थाः सुश्रीमः शिशिरो जडः"।
"चूर्णे क्षोदः समुतिर्ष्णपिक्षौ भ्रमाकुले"।

इत्यादिकात् श्वैत्यादौ शुक्लादिशब्दानां शक्तिग्रहः, कोकिलः पिकपदवाच्य इत्याद्याप्तवाक्यात् कोकिलादौ पिकादिपदानां शक्तिग्रहः,

---

* मानकोषाप्तेत्यपि क्वचित् पाठः।

वृ० कश्चिच्च साक्षादाप्तवाक्यादेव यथाऽयं कम्बुग्रीवावानर्थो घट-
पदवाच्य इति, कश्चिदुपमानात् यथा, गोसदृशो गवयः,
यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्यादि
साधर्म्म्योपमानात्, कश्चिन्निन्दाकारादपि वाक्यात् यथा
धिक् करभमतिलम्बौष्ठं दीर्घग्रीवं कठोरकण्टकाशिनम-
पसदं पशूनामिति निन्दावाक्यश्रवणानन्तरं तादृशपिण्ड-
मुपलभ्यायमसौ करभ इति व्युत्पत्तिः, कश्चित् प्रसिद्ध-
पदसामानाधिकरण्यात् यथा प्रभिन्नकमलोदरे मधूनि

---

वि० प्रयोज्यप्रयोजकव्यवहारात् गोत्वादिविशिष्टे गवादिपदानां श-
क्तिग्रहः, तथाहि यत्र प्रयोजकवृद्धेन गामानयेत्युक्तम्, तच्छ्रुत्वा
प्रयोज्यवृद्धेन गौरानीतः, तदवधार्य्य पार्श्वस्थो बालो गवानयनं
गामानयेति शब्दप्रयोज्यमवधारयति, ततश्च गां बधान अश्वमा-
नयेत्यावापोद्वापाभ्यां गवादिपदानां सास्नाविशिष्टगवादौ शक्तिं
गृह्णाति,प्रसिद्धार्थकपदसामानाधिकरण्यात् "नीरूपः स्पर्शवान
वायुः" "सत्कृत्यालङ्कृतां कन्यां ददानः कूकुदः स्मृतः" इत्यादौ
रूपशून्यस्पर्शवदादौ वाय्वादिशब्दस्य कन्यादात्रादौ कूकुदादि-
शब्दस्य च शक्तिग्रहः, एवं वाक्यशेषादपि यथा यवपदस्य कङ्गु-
प्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारात् व्यवहारादे-
कमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात्
"यवमयश्चरु र्भवति" इति श्रुतौ यवपदस्यार्थसन्देहे,

"वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः"।

इति विध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घशूक एव यवप-

उ॰ मधुकरः पिवतीति वाक्यश्रवणानन्तरं भवत्ययमसौ मधुकरपदवाच्यः प्रभिन्नकमलोदरे मधुपानकर्त्तृत्वात्, यथा वा सहकारतरौ मधुरं पिको रौतीति। तदेतदनुमानं वा शब्द एव वा प्रसिद्धपदसामानाधिकरण्यसामर्थ्याद्युत्पादकः, उपमानविशेष एव वा, मधुपानकर्त्तृत्वस्य भ्रमरादिव्यक्त्यन्तरसाधर्म्यस्योपनयात्। समयश्च जातिमात्रे, व्यक्तेराक्षेपत एवोपस्थितेरिति तौतातिकाः। जातौ व्यक्तौ चोभयशक्तिः किन्तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रयोजि-

---

वि॰ दस्य शक्तिग्रहः यथा वा "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यादिविधिशेषीभूतेभ्यः।

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्"॥

इत्यादिवाक्येभ्यः स्वरादिपदस्य विजातीयसुखादौ शक्तिग्रहः। क्वचिद्विवरणादपि यथा पचति पाकं करोतीति तुल्यार्थकवाक्यात् कृत्यादौ तिङादेः शक्तिग्रह इति। तत्र जातावेव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्चेति मीमांसकाः, तत्रापि प्राभाकरमते व्यक्तिं विना जातिभानस्यासम्भवात्तुल्यवित्तिवेद्यत्वादेव गामानयेत्यादौ व्यक्ते र्भानम्, भट्टमते च सामानाधिकरण्यसम्बन्धेन कर्म्मत्वादौ गोत्वादेः प्रथममन्वयबोधः पश्चात्तु कर्म्मतायां गोवृत्तित्वस्यानुमानं भवतीति। मण्डनाचार्य्यमते व्यक्तेर्लक्षणया भानं भवतीति। तदेतज्जातिशक्तिमतं न समीचीनं गामानयेत्यादौ व्यक्तेः शाब्दबोधविषयत्वस्यानुभवसिद्धस्य विना शक्तिमनुपपत्तेः,नच लक्षणया व्यक्तेर्भानम्,मुख्यप्रयोगस्यासत्त्वे लाक्षणिकप्रयोगस्यासम्भवात्,नच

सू॰ एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ २१ ॥

---

उ॰ केति प्राभाकराः। समयः शक्तिरेव व्यक्त्याकृतिजातयः पदार्था इति वृद्धाः। गवादिपदानामियं गतिः, गुणकर्म्मादिवाचकपदानान्तु जातिव्यक्ती एवार्थ इति मयूखे विपञ्चितम्॥ २० ॥

इदानीमुद्देशक्रमप्राप्ते परत्वापरत्वे परस्परानुबद्धव्यवहारकारणतया भिन्नबुद्धिविषयावपि संक्षेपार्थमेकग्रन्थेनाह।

परमपरञ्चेति भावप्रधानो निर्देशः,उत्पद्यत इति शेषः, यद्वा परमपरञ्चेति व्यवहार इति शेषः, इतिरध्याहार्य्यम्, एका दिग् ययोस्तावेकदिक्कौ ताभ्यामेकदिक्काभ्यां पिण्डाभ्यामित्यर्थः तुल्यदेशावस्थेकदिक्कौ भवतः नतु ताभ्यां

---

वि॰ तुल्यवित्तिवेद्यतयाऽपि व्यक्ते र्भानं सम्भवति, कार्य्यीभूतशाब्दबोधविषयतायाः कारणप्रयोज्यत्वस्यावश्यकत्वेन नियमरूपस्य तुल्यवित्तिवेद्यत्वस्य तत्राप्रयोजकत्वादिति तस्माज्जात्याकृतिविशिष्टव्यक्तावेव गवादिपदानां शक्तिरितिमतमेवादरणीयम्, तदुक्तं गौतमीये "जात्याकृतिव्यक्तयस्तु पदार्थः" इति। २० ॥

क्रमप्राप्ते परत्वापरत्वे परीक्षितुमारभते।

एका दिक् आधारतया ययोस्तावेकदिक्कौ मूर्त्तौ ताभ्यां मूर्त्ताभ्यां सन्निकृष्टविप्रकृष्टाभ्यां बहुतरसूर्य्यसंयोगाश्रयत्वाल्पतरसूर्य्यसंयोगाश्रयत्वज्ञानविषयाभ्यां परमपरञ्चेति व्यवहारो जायते इत्य-

---

* एकदिक्कालाभ्य मि त क्वचित् पाठः।

उ॰ परत्वापरत्वे उत्पद्येते व्यवह्रियेते चेत्यत उक्तं सन्निकृष्टविप्रकृष्टाभ्यामिति, सन्निकर्षः संयुक्तसंयोगाल्पत्वम्, विप्रकर्षस्तद्भूयस्त्वम्, तद्वद्भ्यामित्यर्थः एतेन समवायिकारणमुक्तम्, दिक्पिण्डसंयोगस्त्वसमवायिकारणम्, तथाहि प्राङ्मुखस्य पुरुषस्य प्राच्यवस्थितयोः पिण्डयोरेकस्मिन् संयुक्तसंयोगभूयस्त्वमपरस्मिन् संयुक्तसंयोगाल्पतरत्वञ्चापेक्ष्य परत्वमपरत्वञ्चोत्पद्यते, असमवायिकारणमुक्तम्, सन्निकृष्टविप्रकृष्टाभ्यामिति विषयेण विषयिणं प्रत्ययमुपलक्षयति तथाचापेक्षाबुद्धे र्निमित्तकारणत्वमुक्तम्, एकदिगवस्थितयोरेव परत्वापरत्वे उत्पद्येते इति न सर्व्वत्रोत्पत्तिः, एकस्यैव द्रष्टुरपेक्षा*बुद्धिः समुत्पद्यते इति न सर्व्वथोत्पत्तिः, अपेक्षाबुद्धिनियमान्न सर्व्वदोत्पत्तिः, कारणमकृत्वोत्पन्नयोः प्रत्यक्षसिद्धत्वान्न परस्पराश्रयत्वम्, अन्यथाहि नोत्पद्येयातां नवा प्रतीयेयातां परस्परा-

---

वि॰ र्थः, तथाच दैशिकपरत्वं प्रति बहुतरसूर्य्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तदाश्रये मूर्त्ते दिक्संयोगोऽसमवायिकारणं तादृशज्ञानविषयोमूर्त्तः समवायिकारणम्, दैशिकापरत्वस्याल्पतरसूर्य्यसंयोगाश्रयत्वज्ञानं निमित्तकारणं तद्विषयोमूर्त्तः समवायिकारणं तादृशमूर्त्ते दिक्संयोगोऽसमवायिकारणमिति, भवति हि पाटलिपुत्रस्थस्य काशीमपेक्ष्य प्रयागः परः प्रयागमपेक्ष्य काश्यपरेतिव्यवहारः, तद्विषयः परत्वं प्रयागे उत्पद्यते, तत्र बहुतरसूर्य्यसंयोगाश्रयत्वेन तस्य ज्ञातत्वात्, काश्याञ्चापरत्वं जायते अल्पतरसूर्य्यसंयोगाश्रयत्वेन तस्या ज्ञातत्वात्, एकक्षणाभ्यामिति एकः

---

* बुद्धेः समुत्पद्येते इति क्वचित् पाठः।

उ॰ पेक्षायां हि द्वयोरनुत्पत्तिरप्रतीतिश्च स्यात् प्रतीयेते च परत्वापरत्वे, प्रतीतिश्च तयोर्नोत्पत्तिमन्तरेणेति, एककालाभ्यामिति कालिकपरत्वापरत्वे अभिप्रेत्य, तत्रैककालाभ्यामिति एको वर्त्तमानः कालो ययोर्युवस्थविरपिण्डयोः तावेककालौ ताभ्यामेककालाभ्यामित्यर्थः, सन्निकर्षोऽल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं, विप्रकर्षश्च बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम्, अत्रापि विषयेण विषयिणीं बुद्धिमुपलक्षयति तेन युवस्थविरपिण्डौ समवायिकारणे, कालपिण्ड संयोगश्चासमवायिकारणम्, अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिरपरत्वे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिः परत्वे निमित्तकारणम्, एते च परत्वापरत्वे अनियतदिग्देशयोरपि पिण्डयोरुत्पद्येते, तत्र दैशिकपरत्वापरत्वयोः सप्तधा विनाशः,उत्पादस्तु युगपदेव द्वयोरन्यथाऽन्योन्याश्रयः स्यात्, अपेक्षाबुद्धिनाशात्, संयोगस्यासमवायिकारणस्य नाशात्, द्रव्यस्य च समवायिकारणस्य नाशात्, निमित्ताम-

---

वि॰ कालः संयोगितया ययोः पिण्डयोस्ताभ्यामेककालाभ्यां पिण्डाभ्यां सन्निकृष्टविप्रकृष्टाभ्याम् अल्पतरतपनपरिस्पन्दबहुतरतपनपरिस्पन्दाश्रयतया ज्ञाताभ्यां परमपरञ्चेति व्यवहारो भवति, भवति हि युवानमपेक्ष्य स्थविरः परः स्थविरमपेक्ष्य युवाऽपर इत्यादिको व्यवहारस्तद्विषयस्य परत्वस्य समवायिकारणं स्थविरः,तत्र महाकालस्य संयोगोऽसमवायिकारणम्, बहुतरसूर्य्यक्रियाश्रयत्वज्ञानं निमित्तकारणम्, अपरत्वस्य च युवा समवायिकारणम्, युवशरीरमहाकालयोः संयोगोऽसमवायिकारणम्, स्थविराभि-

उ० समवायिकारणयोर्नाशात्, निमित्तसमवायिकारणयोर्नाशा-
त्, निमित्तनाशासमवायिकारणनाशसमवायिकारणनाशे-
भ्यः। तत्रापेक्षाबुद्धिनाशात् तावत्, परत्वोत्पत्तिः परत्वसा-
मान्यज्ञानं ततोऽपेक्षाबुद्धिविनाशस्तद्विनाशात् परत्वविशि-
ष्टद्रव्यज्ञानकाले परत्वनाशः, द्वित्वनाशवदेव सर्व्वमूहनी-
यम्। असमवायिकारणनाशादपि तद्यथा यदैवापेक्षाबु-
द्धिस्तदैव परत्वाधारे पिण्डे कर्म्म ततो यदैव परत्वोत्पत्तिस्त-
दैव दिक्पिण्डविभागस्ततो यदा परत्वसामान्यज्ञानं तदा
दिक्पिण्डसंयोगनाशः ततः सामान्यज्ञानादपेक्षाबुद्धिना-
शस्तदैव दिक्पिण्डसंयोगनाशात् परत्वापरत्वयोर्नाशः तत्र
चापेक्षाबुद्धिनाशस्य परत्वनाशसमकालत्वान्न तन्नाशकत्वम्,
नन्वसमवायिकारणनाशादपि गुणनाशे आत्ममनःसंयोग-
नाशादपि संस्कारादृष्टादीनां विनाशे बहु व्याकुलं स्यादिति
चेन्न विप्रकृष्टत्वेन परत्वस्य व्यापनात् परत्वाधारस्यान्यत्र
गमने विप्रकर्षाभावात् परत्वनिवृत्तिरावश्यकी नच तदा

---

वि० ततपनस्पन्दापेक्षयाऽल्पतरतपनस्पन्दाश्रयत्वेन यूनो ज्ञानं निमित्त-
कारणम्, यद्यपि शरीराणां बाल्ययौवनवार्द्धक्यभेदेन भिन्नत्वात्
युवस्थविरगततपनपरिस्पन्दानां वैपरीत्यमपि सम्भवति तथापि
बहुतरतपनपरिस्पन्दसमानाधिकरणवैजात्यवत्त्वज्ञानमेव स्थविरे
कालिकपरत्वस्य कारणम्, अल्पतरतपनस्पन्दसमानाधिकर-
णवैजात्यज्ञानञ्च यून्यपरत्वस्य कारणमिति नच घटाद्यपेक्ष-
या परमाणोरपि बहुतरसूर्य्यक्रियासमानाधिकरणपृथिवी-

उ० नाशकान्तरमस्तीत्यन्यथाऽनुपपत्त्या संयोगनाश एव नाशकः कल्प्यते, संस्कारादृष्टादेः कार्य्यस्य स्मृतिसुखादेश्चिरेणापि दर्शनाच्च तन्नाशकल्पना, उपलक्षणञ्चैतत् अवधेर्द्रष्टुश्च तद्देश-संयोगनाशादपि परत्वापरत्वे विनश्यतः युक्तेस्तुल्यत्वात्, समवायिकारणनाशादपि क्वचित् परत्वनाशः तथाहि यदा पिण्डावयवे समुत्पन्नेन कर्म्मणाऽवयवान्तराद्विभागस्तदे-वापेक्षाबुद्धिः, विभागात् पिण्डारम्भकसंयोगनाशः परत्वो-त्पत्तिः, अग्रिमक्षणे संयोगनाशाद्द्रव्यनाशः परत्वसामान्य-ज्ञानं, द्रव्यनाशात् परत्वनाशोऽपेक्षाबुद्धिनाशश्च सामान्य-ज्ञानात्, तथाच यौगपद्यान्नापेक्षाबुद्धिनाशात् परत्वनाश-इति, क्वचिद्द्रव्यनाशापेक्षाबुद्धिनाशाभ्यां परत्वनाशः तद्यथा पिण्डावयवे कर्म्मापेक्षाबुद्धेरुत्पादस्ततोऽवयवान्तरविभागः परत्वोत्पत्तिः तत आरम्भकसंयोगनाशसामान्यज्ञाने ततो-द्रव्यनाशापेक्षाबुद्धिनाशौ ततस्च परत्वनाशः, क्वचिद्द्रव्यस्य सं-योगस्य च नाशाभ्यां परत्वनाशः तद्यथा यदा द्रव्यावय-वविभागस्तदैव पिण्डकर्म्मापेक्षाबुद्ध्योरुत्पादस्तदनन्तरमवय-

वि० त्वादिजातिमत्त्वज्ञानात् परत्वं कथं नोत्पद्यते इति वाच्यं बहुतर-सूर्य्यक्रियासमानाधिकरणैककालीनहयात्तिजातिमत्त्वस्य विव-क्षितत्वात् तादृशजातिश्च चैत्रत्वादिः सूर्य्यक्रियाऽपि तत्काली-नत्कालीनान्यत्वेन विशेषणीया नातोऽशीतिवर्षजीविस्थविरचै-त्रापेक्षया शतवर्षजीवियुवमैत्रे परत्वोत्पत्तिः, अथवा सूर्य्यपरि-स्पन्दपूर्व्वोत्पन्नत्वं विप्रकर्षः तदनन्तरोत्पन्नत्वं सन्निकर्षः युवचै-त्राद्युत्पत्त्यधिकरणं यः सूर्य्यस्पन्दस्तत्पूर्व्वोत्पन्नत्वं स्थविरमैत्रादौ

उ० वसंयोगनाशदिक्पिण्डविभागपरत्वोत्पत्तयः ततोद्रव्यनाश-
दिक्पिण्डसंयोगनाशपरत्वसामान्यबुद्धयः ततो द्रव्यनाश-
दिक्पिण्डसंयोगनाशाभ्यां परत्वनाशः सामान्यबुद्धेरपेक्षा-
बुद्धिनाश इति, क्वचित् संयोगनाशापेक्षाबुद्धिनाशाभ्यां
परत्वनाशः तद्यथा परत्वोत्पत्तिपिण्डकर्म्मणी सामान्यज्ञा-
नविभागौ अपेक्षाबुद्धिनाशदिक्पिण्डसंयोगनाशौ ततः
परत्वनाशः, क्वचित् समवाय्यसमवायिनिमित्तनाशेभ्यः त-
द्यथा परत्वोत्पत्तिपिण्डावयवविभागपिण्डकर्म्माणि युगपत्,
तदनन्तरं परत्वसामान्यज्ञानावयवसंयोगनाशदिक्पिण्डवि-
भागाः तदनन्तरमपेक्षाबुद्धिनाशद्रव्यनाशदिक्पिण्डसंयो-
गनाशेभ्यो युगपदुत्पन्नेभ्यः परत्वस्यापरत्वस्य वा दैशिकस्य
नाशः, कालकृतयोस्तु परत्वापरत्वयोरसमवायिकारणना-
शाधीनोनाशोनास्ति दैशिकयोर्दिक्पिण्डसंयोगनाशे सन्नि-
कर्षविप्रकर्षनाशो यथा न तथा कालिकयोरिति तयोः

वि० वर्त्तते इति स्थविरे परत्वम्, स्थविरमेवायुतत्वधिकरणसूर्य्य-
स्पन्दानन्तरोत्पन्नत्वं युवचैत्रादावस्तीति तत्रापरत्वं जायते, अचे-
तने कालिकपरत्वापरत्वव्यवहाराभावे तु प्राणित्वे सतीति वि-
शेषणं देयम्, तत्तच्छरीरमादायातिप्रसङ्गस्तु जातिविशेषनिवे-
शेन वारणीय इति संक्षेपः। द्विविधयोः परत्वापरत्वयो र्नाश-
कोऽपेक्षाबुद्धिनाश इति मुक्तावलीकारः, उपस्कारे तु त्रिविध-
कारणनाशस्यैव परत्वापरत्वनाशकत्वमुक्त मिति मन्तव्यम्॥ २१॥

नन सन्निकर्षविप्रकर्षज्ञानाभ्यां यदि परापरव्यवहारौ तदा
प्रयागमपेक्ष्य काशी सन्निकृष्टेति ज्ञानस्य विषयतासम्बन्धेन

सू० कारणपरत्वात् कारणापरत्वाच्च ॥ २२ ॥

परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमह-

---

उ० समवायिकारणनाशादपेक्षाबुद्धिनाशात् द्वाभ्याञ्चेति त्रयः पक्षाः पूर्व्ववदूहनीयाः ॥ २१ ॥

कालिकपरत्वापरत्वे प्रति विशेषमाह।

परत्वापरत्वयोः कारणं कालस्य परत्वापरत्वे परत्वासमवायिकारणकालसंयोगोऽपरत्वासमवायिकारणकालसंयोगश्च लक्षणयोक्तः, अन्यथाऽनन्वयापत्तेः, नहि परत्वापरत्वाभ्यामेव परत्वापरत्वे उत्पद्येते तस्मात् परत्वापरत्वपदयोस्तदुत्पादककालसंयोगावर्थौ लक्षणया ॥ २२ ॥

ननु परत्वेऽपि परत्वमपरत्वेऽप्यपरत्वं किंन स्यादित्यत आह।

एतानि सूत्राणि पूर्व्वमेव व्याकृतकल्पानि नेह व्याक्रियन्ते ॥ २३ ॥ २४ ॥ २५ ॥

---

वि० प्रयागेऽपि सत्त्वात् तत्रापरत्वव्यवहारः कथं न भवति एवं विप्रकर्षज्ञानविषये काश्यादौ वा कथं न परत्वव्यवहार इति तटस्थाशङ्कां निरस्यति।

कारणपरत्वात् कारणस्य समवायिकारणस्य परत्वात् अपरत्वाच्च समवायिकारण एव परापरव्यवहारौ तत्तदपेक्षाबुद्धिविषयतामात्रेण तदन्यस्मिन्, व्यवहारं प्रति व्यवहर्त्तव्यस्य तन्त्रत्वादितिभावः ॥ २२ ॥

परत्वापरत्वयो र्न परत्वापरत्वे वा इत्याह।

एतानि व्याख्यातप्रायाणि ॥ २३ ॥ २४ ॥ २५ ॥

सू॰ स्वाभ्यां व्याख्यातः ॥ २३ ॥ कर्म्मभिः कर्म्माणि ॥ २४ ॥ गुणैर्गुणाः ॥ २५ ॥

इहेदमिति यतः कार्य्यकारणयोः स समवायः ॥ २६ ॥

---

उ॰ परत्वापरत्वादीनां मूर्त्तमात्रसमवेतत्वमुक्तं ज्ञानसुखादीनामात्मसमवेतत्वं तत्र समवाय एव क इति शिष्यजिज्ञासामनुरुध्य बुद्धेरुद्देशक्रमप्राप्ताया अपि लङ्घनात् समवायपरीक्षामाह।

कार्य्यकारणयोरित्युपलक्षणम्, अकार्य्यकारणयोरित्यपि द्रष्टव्यं तदुक्तं पदार्थप्रदेशाख्ये प्रकरणे "अयुतसिद्धानामाधार्य्याधारभूतानां यः सम्बन्ध इहेतिप्रत्ययहेतुः स समवायः" इति, असम्बद्धयोरविद्यमानत्वमयुतसिद्धिः, इह कुण्डे दधि इह कुण्डे बदराणीतिवत् इह तन्तुषु पट इह वीरणेषु कट इह द्रव्ये द्रव्यगुणकर्म्माणि इह गवि गोत्वम् इहात्मनि ज्ञानम् इहाकाशे शब्द इतीहबुद्धिरुत्पद्यमाना न विना सम्बन्धमुत्पत्तुमर्हति तेनानुमीयतेऽस्ति कश्चित्

---

वि॰ गुणानां द्रव्यसमवेतत्वस्योक्तत्वात् तत्र कः समवाय इति जिज्ञासानुरोधात् क्रममुल्लङ्घ्यापि समवायपरीक्षामारभते।

कार्य्यकारणयोरवयवावयविनोर्यतः सम्बन्धात् इहेदमिति प्रत्ययः स समवायः, तन्तुषु पटः कपालेषु घटः वीरणेषु कट-इत्यादिप्रत्ययोहि पटादौ तन्त्वादिवृत्तित्वं विषयीकरोति तच्च

उ० सम्बन्धः, न चासौ संयोग एव, अन्यतरकर्म्मादीनां तदुत्पादकानामभावात् विभागपर्य्यवसानाभावाच्च सम्बन्धिनामयुतसिद्धत्वाच्च नियताधिकरणतयैवोत्प्रेक्ष्यत्वात् अप्रत्यक्षत्वादेकत्वान्नित्यत्वाच्च। नन्वेकश्चेत् समवायस्तदा द्रव्यत्वादीनां सङ्करप्रसङ्गः कर्म्मत्वादिसमवायस्य द्रव्ये सम्भवात्, नैवम्, आधाराधेयनियमादेवासङ्करात् यद्यपि य एव द्रव्यत्वसमवायः स एव गुणत्वकर्म्मत्वादीनामपि तथापि तेषां न द्रव्यमाधारस्तच्च तेषामप्रतीतेः द्रव्येष्वेव द्रव्यत्वं प्रतीयते गुणेष्वेव गुणत्वं कर्म्मस्वेव कर्म्मत्वं नत्वन्यत्रेत्यन्वयव्यतिरेकदर्शनादेव नियमः, यथा कुण्डदध्नोः संयोगाविशेषेऽपि कुण्डमेवाधारो न दधीत्याश्रयाश्रयिभावनियमस्तथा व्यङ्ग्यव्यञ्जकशक्तिभेदादेवात्रापि नियम उपपत्स्यते नहि द्रव्येण द्रव्यत्ववत् कर्म्मत्वाद्यप्यभिव्यज्यते तदुक्तम्,

"सन्निदेवहि भगवती वस्तूपगमे नः शरणम्" ॥

---

वि० वृत्तित्वं सम्बन्धविशेषनियन्त्रितमेवान्यथा तन्तुषु घट इत्यादिप्रतीतिप्रसङ्गात् कालिकेन तन्त्वादिवृत्तित्वस्य घटादौ सत्त्वात्, इत्यच्च तादृशवृत्तितानियामकः सम्बन्धः समवाय एव, अवयवावयविनोः संयोगासम्भवात्, कार्य्यकारणयोरित्युपलक्षणं गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषपदार्थयोश्चाधाराधेयभावनियामकोऽपि समवाय एवेति मन्तव्यम्। समवाये प्रमाणन्तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनु-

उ॰ इति, सन्धाधारत्वं प्रति विपरीता सम्विदस्ति, नहि भवति द्रव्यं कर्म्मेति, नवा भवति पटे तन्तव इति, एतेन वायौ रूपसमवायेऽपि वायौ रूपमित्याधारता न वायोः प्रतीयते तस्मात् स्वभावशक्तिरेव सर्व्वत्र नियामिका, स चायं नित्य अकारणकत्वात् भावानां हि समवायिकारणादुत्पत्तिनियमः, तदनुरुद्धे च निमित्तासमवायिनी, तथाच समवायस्य समवायिकारणं यत् स्यात् तत् समवायान्तरेण तेनैव समवायेन वा, न तावदाद्यः, अनवस्थापातात्, न द्वितीयः, नहि स एव समवायः स्वेनैव समवायः सम्भवतीत्यात्माश्रयात्, तन्तुषु पटसमवायः पटे रूपसमवाय इति प्रतीतिः कथमिति चेत् स्वरूपसम्बन्धेन, समवायान्तराङ्गीकारेऽनवस्थापातात्, तर्हि पटरूपमित्यपीहप्रत्ययः स्वरूपसम्बन्धेनैव स्यात् किं समवायेनेति चेन्न तत्रातिरिक्तसम्बन्धे बाधकाभावात्, तर्हि भूतले घटाभाव इत्य-

---

वि॰ मानं तत्र च संयोगादिबाधात् समवायसिद्धिः नच स्वरूपसम्बन्धेनार्थान्तरमनन्तस्वरूपाणां सम्बन्धत्वाभ्युपगमे गौरवात् नचैवमभावस्याप्यनया रीत्या सम्बन्धान्तरं सिद्ध्येदिति वाच्यं यतोऽभावसम्बन्धस्य न नित्यत्वसम्भवस्तथा सति भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्सम्बन्धस्य च नित्यत्वात् नाप्यभावस्य सम्बन्धान्तरमनित्यमङ्गीकर्त्तुं शक्यते एकस्मिन्नेव भूतले सहस्रधा घटानयनापसारणादौ सम्बन्धरूपसहस्रत्वनापत्तेस्तस्माद्घटापसरणकालीनभूतलादिस्वरूप एव

उ० नापि समवायः सम्बन्धान्तरं वा स्यादिति चेन्न स्वरूपसम्बन्धेनैव तदुपपत्तेः अन्यथा घटात्यन्ताभावान्योन्याभावयोर्नित्ययोरनेकसमवेतयोः सामान्यत्वापत्तेः प्रध्वंसस्य च समवेतकार्य्यत्वेन विनाशित्वापत्तेः प्रागभावस्य च समवेतानुत्पन्नत्वेनाविनाशित्वापत्तेश्च नच भावत्वं तत्र तन्त्रम्, भावत्वस्यापाद्यत्वात्, अभावेऽस्त्वेव वैशिष्ट्याख्यं सम्बन्धान्तरमिति भाट्टाः, तत्र यदि सर्व्वाभावव्यक्तीनामेकमेव वैशिष्ट्यं तदा घटवत्यपि घटाभावप्रत्ययप्रसङ्गः पटाभाववैशिष्ट्येनैव घटाभाववैशिष्ट्यसत्त्वात्, घट एव तत्र घटाभावधीप्रतिबन्धक इति चेत् वैशिष्ट्यसम्बन्धेन प्रतिबन्धकाभावस्यैव तत्र सत्त्वात्, नचाश्रयस्वभाव एव तादृशो येन न तत्र घटाभावाभिव्यक्तिः, घटापसारणानन्तरं तत्रैव घटाभावप्रतीतेः। तवापि रूपनाशानन्तरं कथं न रूपवत्ताप्रत्ययः समवायस्य नित्यत्वादेकत्वाच्चेति चेत्, रूपनाशादेव तदप्रतीतेरुपपत्तेः, समवायप्रतिबन्धिः प्रत्यक्षमयूखे मोचित एवेत्यास्ताम्॥ २६ ॥

द्रव्यादिभ्यः पञ्चभ्यो भेदं साधयन्नाह।

---

वि० घटाभावसम्बन्धः स्वीकरणीयः घटकालस्य सम्बन्धाघटकतया घटकाले न घटात्यन्ताभावप्रतीतिः, इत्यञ्च भूतलादौ घटाद्यभावस्य स्वरूपसम्बन्धस्वीकारस्यावश्यकत्वेनाभावान्तरस्थलेऽपि स्वरूपस्यैव सम्बन्धत्वमभावप्रत्ययानामेवंविधसम्बन्धावगाहित्वस्यानुभवसिद्धत्वादिति ॥ २६ ॥

ननु समवायो मास्तु गुणादिषु वाऽन्तर्भवतु किन्तस्यातिरिक्त-

सू० द्रव्यत्वगुणत्वप्रतिषेधोभावेन व्याख्यातः॥ २७॥
तत्त्वम्भावेन॥ २८॥

---

उ० भावः सत्ता, यथा सत्ता न द्रव्याद्यात्मिका विलक्षणबुद्धिवेद्यत्वात् तथा समवायोऽपि तत एव द्रव्यादिभ्योभिन्नः द्रव्यत्वगुणत्वेत्युपलक्षणं कर्म्मत्वाद्यपि द्रष्टव्यम्॥ २७॥

एकत्वं साधयति।

व्याख्यातमितिशेषः तत्त्वमेकत्वं भावेन सत्तया व्याख्यातम्, यथैका सत्ता सर्व्वत्र सद्बुद्धिप्रवर्त्तिका तथैक एव समवायः सर्व्वत्र समवेतबुद्धिप्रवर्त्तकः स्वलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च नहि समवायस्य विशेषलिङ्गं भेदकं लिङ्गमाकल-

---

वि० पदार्थत्वकल्पनेनेत्यत आह।

भावेन सत्तया द्रव्यत्वगुणत्वप्रतिषेधो द्रव्यत्वगुणत्वाभावो व्याख्यातः उक्तः तथाच सत्ता यथा द्रव्यत्वगुणत्वशून्या विलक्षणबुद्धिविषयत्वात् समवायोऽपि विलक्षणबुद्धिविषयत्वान्न द्रव्यत्वादिमानित्यर्थः इदमुपलक्षणं कर्म्मत्वादिप्रतिषेधोऽपि ज्ञेयः। २७।

समवायस्य नानात्वं निराकरोति।

तत्त्वं तद्व्यक्तित्वमेकमात्रव्यक्तित्वमिति यावत् समवायस्येति शेषः, भावेनेति व्याख्यातमितिशेषः। यथा द्रव्यं सत् गुणः सन् कर्म्म सदित्येकाकारप्रतीतिविषयत्वात् नानात्वसाधकप्रमाणाभावात् लाघवाच्च सत्ता एका, तथा घटः समवेतः पटः समवेतइत्याद्यनुगतप्रतीतिविषयत्वात् भेदकप्रमाणाभावात् लाघवाच्च

उ० यामो येन नानात्वमभ्युपगच्छामः, अतएव नित्यः देशका-लादिभेदेऽप्यभिन्नस्य सत्तावदेवानित्यत्वायोगात्, ननु सम-वायोयद्ययं सम्बन्ध एव तदा तन्तुपटयोः पटरूपयोर्व्वा वि-शेषः स्यादिति चेन्न युतसिद्ध्यभावाद्विशेषानुपपत्तेः नहि रूपरूपवतोरवयवावयविनोर्व्वाऽसम्बद्धयो र्विद्यमानत्वमस्ति येन विशेषः स्यात्, युतसिद्धिरेवापाद्यत इति चेन्न कदा-चिदपि तथाऽननुभवेनापाद्यबाधात्। समवायो नानाऽ-नित्यश्चेति प्राभाकरास्तन्नानुपपन्नं रूपं नष्टमिति हि प्रत्ययो नतु रूपसमवायोनष्ट इति कस्यापि प्रत्ययः। प्रत्यक्षः समवाय इति नैयायिकास्तदप्यनुपपन्नं समवायो-

---

वि० समवायोप्येक एवेत्यर्थः। सच नित्यस्तस्योत्पादविनाशयोः प्रमा-णाभावात् तत्कल्पने कल्पनागौरवात् समवायस्यैकत्वेन तन्ना-शाभ्युपगमे तन्नाशदशायां नित्ये द्रव्ये द्रव्यत्वादे र्विशिष्टानुभवानु-पपत्तेश्च। यत्तु नीलो नष्टः रक्त उत्पन्न इति प्रतीतिर्नीलादिसम-वायविषयिणी समवायस्यानित्यत्वनानात्वसाधिकेति प्राभाकर-मतं तन्मन्दम् उक्तप्रतीतौ समवायस्यानुल्लेखात् अन्यथा घटो-नष्ट इत्यादिप्रतीतेरपि समवायविषयकत्वसम्भवेन घटादेरपि नित्यत्वप्रसङ्गादिति। वैशेषिकमतानुयायिनस्तु समवायस्य प्रत्यक्षं न भवति समवायोऽतीन्द्रियस्तेतनान्यासमवेतभावत्वादाकाशा-दिवदित्यनुमानेन तस्यातीन्द्रियत्वसिद्धेरित्याहुः। न्यायमतानु-यायिनस्तु इन्द्रियसम्बन्धविशेषणताप्रत्यासत्त्या समवायस्य प्रत्यक्षं भवत्येव, अतीन्द्रियत्वसाधकोक्तानुमानस्याप्रयोजकत्वात् सम-

उ॰ ऽतीन्द्रियः आत्मान्यत्वे सत्यसमवेतभावत्वात् मनोवत्काशादिवद्वा ॥ १८ ॥

इति श्रीशाङ्करे वैशेषिक*सूत्रोपस्कारे सप्तमाध्यायस्य द्वितीयमाह्निकम् ॥ * ॥

समाप्तश्चायं सप्तमाध्यायः ।

---

वि॰ वायो लौकिकप्रत्यक्षविषयः योग्यप्रतियोगिकत्वे सति विशेषणतया योग्यवृत्तित्वात् भूतलादिवृत्तिघटात्यन्ताभावादिवदित्यादेः प्रत्यक्षसाधकानुमानस्य सत्त्वाचेत्याहुरितिसंक्षेपः । १८ ।

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ सप्तमाध्यायस्य द्वितीयमाह्निकम् । * ।

समाप्तश्चायं सप्तमाध्यायः ।

---

* सूत्रसंस्कारे इति क्वचित् पाठः ।

सू० द्रव्येष ज्ञानं व्याख्यातम् ॥ १ ॥

---

उ० शिष्यजिज्ञासानुरोधात् क्रमलङ्घनमिदानीमुद्देशक्रममालम्बते तत्र बुद्धिपरीक्षा अष्टमाध्यायार्थः, आत्मसाधनाय पूर्व्वं बुद्धिरुक्ता तां स्मारयन्नाह ।

द्रव्येष्विति विषयेण विषयिणं तृतीयाध्यायमुपलक्षयति । "इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः" "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्" इत्येताभ्यां सूत्राभ्यां ज्ञानं व्याख्यातमित्यर्थः। तत्र "बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्य्यायाः" इति समानतन्त्रे बुद्धिलक्षणे साङ्ख्यमतनिरासार्थं पर्य्यायाभिधानम् । साङ्ख्या हि बुद्ध्यादिशब्दानामर्थभेदमाचक्षते तथाहि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सा चैकैव, पुरुषास्तु परं भिद्यन्ते, ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः, ते च पङ्गवोऽपरिणामित्वात्, प्रकृतिस्त्वन्धा जडत्वात्, यदा विषयभोगेच्छा प्रकृतिपुरुषभे-

---

वि० दानार्द्रगण्डमभितो भ्रमतो द्विरेफा-
न्मूर्त्तानिवातिमलिनानखिलान्तरायान् ।
विद्रावयन् प्रचलपुष्करफूत्कृतेन
देवः स वारणमुखः शरणं ममास्तु ॥

परत्वापरत्वे परीक्ष्य शिष्यजिज्ञासानुरोधात् मध्ये समवायं परीक्ष्य उद्देशक्रममालम्ब्याष्टमे बुद्धिं परीक्षिषुः पूर्व्वोक्तां तां स्मारयति ।

द्रव्येषु द्रव्यनिरूपणवाक्येषु तृतीयाध्याये इति यावत्, ज्ञानं

उ० इदिदृच्चा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिण-
मते, तस्याश्चाद्यः परिणामोबुद्धिरन्तःकरणविशेषः, बुद्धि-
रेव महत्तत्त्वं तदुक्तम् "प्रकृतेर्महान्" इति, साच बुद्धि-
र्दर्पणवन्निर्म्मला, तस्यास्व वहिरिन्द्रियप्रणाडिकया विषया-
कारो यः परिणतिभेदो घट इति पट इत्याद्याकारस्तज्ज्ञानं
वृत्तिरिति चाख्यायते, स्वच्छायां बुद्धौ वर्त्तमानेन ज्ञानेन
चैतन्यस्य पुरुषस्य भेदाग्रहादहं जानामीति योऽभिमान-
विशेषः सैवोपलब्धिः,स्रक्चन्दनादिविषयसन्निकर्षादिन्द्रिय-
प्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणाम-
विशेषः स प्रत्ययः, अतएव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसं-
स्कारधर्म्माधर्म्माः सर्व्वं एव बुद्धेः परिणामविशेषाः सूक्ष्मा-
वस्थया प्रकृतावेव वर्त्तमाना अवस्थाभेदादाविर्भवन्ति तिरो-
भवन्ति च, पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिविम्बते परं
बुद्धाविति यन्मन्यन्ते तदनेन पर्य्यायाभिधानसूचितप्रमा-
णेन निराक्रियते तथाहि बुद्धिशब्दो यदि बुध्यतेऽनयेति
करणव्युत्पन्नस्तदा मन एव तत्पर्य्यवस्यति,नच मनः प्रत्यक्षम्,
बुद्धिस्त्वहं बुध्ये इति प्रत्यक्षैव, नचान्तःकरणस्य ज्ञाना-
द ोधर्म्माः, कर्तृधर्म्मत्वेनैव तेषां सिद्धेः, भवति हि अहं जाने
अहं प्रत्येमि अहमुपलभे इत्यहन्त्वसामानाधिकरण्येन प्रति-
भासः, अभिमानोऽसाविति चेत् तात्त्विकत्वे बाधकाभावात्,

वि० आख्यातं कथितम्, आत्मानुमापकत्वेनेविशेषः कथेदानीं परीक्ष-
णीयमितिभावः ।१।

सू॰ तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥

---

उ॰ पुरुषस्यागन्तुकधर्म्मानाधारत्वं कूटस्थत्वं तदेव बाधकमिति चेन्नागन्तुकधर्म्माधारत्वेऽपि नित्यत्वसम्भवात् नहि धर्म्मी धर्म्मश्चेत्येकं तत्त्वं येन धर्म्मोत्पादविनाशावेव धर्म्म्युत्पादविनाशौ स्यातां, तथाच य एव चेतयते स एव बुध्यते जानात्युपलभते प्रत्येति चेति नार्थान्तरकल्पना युक्तेतिदिक्॥ १ ॥

तत्र ज्ञानं द्विविधं विद्या चाविद्या च, विद्या चतुर्व्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा, अविद्याऽपि चतुर्व्विधा संशयविपर्य्ययस्वप्नानध्यवसायलक्षणा, तत्र यल्लैङ्गिकं तदनिन्द्रियजम्, कुत एतदित्याह।

आत्माऽत्र परात्मा स्वात्मा वा स्वात्मनि मानसस्य कादाचित्काहम्प्रत्ययस्याहं गौरः कृशोमहावाङ्गरित्यादिप्रत्ययतिरस्कृतत्वात् स्वात्मनोऽप्यप्रत्यक्षतोक्ता, चकारादाकाशकालदिशां वायोः परमाणूनाञ्च द्रव्याणामुपग्रहः। इन्द्रियजमपि द्विविधं सर्व्वज्ञीयमसर्व्वज्ञीयञ्च, सर्व्वज्ञीयं योगजधर्म्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानं, तथाहि परमाणवः प्रसक्ताः प्रमेयत्वादभिधेयत्वात् सत्त्वात्। साम-

---

वि॰ नन्वात्मनः प्रत्यक्षसिद्धत्वात् ज्ञानस्य तल्लिङ्गतया पूर्व्वमभिधानमसङ्गतमत आह।

तत्र परशरीरे, अधिष्ठातृत्वं सम्बन्धः परशरीराधिष्ठातात्मा एवं मनश्च इमे द्वे अप्रत्यक्षे परात्ममनसोः प्रत्यक्षाभावात् तयो-

उ॰ योविरहात् कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रति कारणत्वात् नच परमाणवो महान्तः, रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात् नच दिगादयो रूपवन्त इति चेन्न योगजधर्म्मसहकारिणा मनसैव तत्सम्भवात् तदुपगृहीतचक्षुरादिना वा, अचिन्त्यप्रभावोहि योगजो धर्म्मो न सहकार्य्यन्तरमपेक्षते। विवादाध्यासितः पुरुषो न सर्व्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिवद्विपक्षबाधकतर्कशून्यत्वादप्रयोजकम्, अथसर्व्वज्ञीयञ्च प्रत्यक्षं द्विविधं सविकल्पकं निर्व्विकल्पकञ्च, सविकल्पकं ज्ञानं न प्रमाणमिति कीर्त्तिदिङ्नागादयः तथाहि अभिलापसंसर्गयोग्यप्रतिभासं हि तत्, नह्यभिलापेन नाम्ना सम्भवत्यर्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात्, नच जात्यादि परमार्थसत्, येन तद्वैशिष्ट्यं विषयेषु इन्द्रियेण गृह्येत, नच सतः स्वलक्षणस्यासता सम्बन्धः सम्भवति, नचासत् इन्द्रियगोचरः, तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्त्तयत् प्रत्यक्षमिति प्रमाणमिति चोच्यते इति, तच्चैतदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासञ्च भवेत् प्रमाणञ्चेन्द्रियार्थसन्नि-

---

वि॰ रनुमानार्थं तृतीयाध्याये "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसोलिङ्गम्" इति सूत्रे "इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः" इति सूत्रे च ज्ञानं कथितमिति पर्य्यवसितार्थः, इदमुपलक्षणम्, शरीरादिभिन्नत्वेन ज्ञातमनोऽप्यनुमा-

सू॰ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥

उ॰ कर्षजन्यं स्यादिति सन्दिग्धव्यतिरेकित्वं, नामवैशिष्ट्यञ्च चाक्षुषज्ञाने सम्भवत्येव, सुरभिचन्दनमितिवदुपनीतभानसम्भवात् यदा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रम्, सैतैव सार्थव्यावर्त्तिका, अभावज्ञाने प्रतियोगिस्मरणवत्, जात्यादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम्। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं नवा व्यवहारविषय इति किन्तत्र प्रमाणमिति चेत् सविकल्पकमेव, तद्धि विशिष्टज्ञानम्, नच विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात् ॥ २ ॥

यत्र यथा ज्ञानं यत्कारणकञ्च तद्दिदर्शयितुमाह।

ज्ञानान्तरान्निर्द्देष्टव्यं यत्प्रकारकं यद्विषयकं यद्धर्मकं तत्र ज्ञाननिर्द्देशे कर्त्तव्ये ज्ञानस्य निष्पत्तिविधिरुत्पत्ति-

---

वि॰ नार्थं "कारणाज्ञानात्" इत्यादिसूत्रेऽपि ज्ञानं कथितमिति वेदितव्यम्। २।

ननु ज्ञानस्य किं कारणमित्याकाङ्क्षायामाह।

ज्ञाननिर्द्देशे तृतीयाध्याये यत्र ज्ञानस्य निर्द्देशः कृतस्तत्रैव तन्निष्पत्तिविधिस्तदुत्पत्तिविधानं उक्तः "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्" इति सूत्रे ज्ञानस्य कारणान्युक्तानीत्यर्थः, तथाचात्मा ज्ञानस्य समवायिकारणम्, आत्ममनःसंयोगोऽसम-

सू॰ गुणकर्म्मसु सन्निकृष्टेषु ज्ञाननिष्पत्ते र्द्रव्यं कारणम्॥ ४॥

---

उ॰ प्रकार उक्तः उच्यते इत्यर्थः आदिकर्म्मणि क्तविधानात्॥ ॥ ३॥

कीदृशो निष्पत्तिविधिस्तमाह।

गुणेषु रूपादिषु कर्म्मसु चोत्क्षेपणादिषु यज्ज्ञानं निष्पद्यते तत्र द्रव्यं कारणं योग्यद्रव्यनिष्ठमेव तदुभयं गृह्यत इति द्रव्ययोग्यतैव तत्र तन्त्रम्, सन्निकर्षश्च तेषां द्रव्यघटित एव, संयुक्तसमवायेन तेषां ग्रहणात्, यद्यपि विप्रकीर्णस्पन्दकावयवकर्पूरभागानामयोग्यानां गन्धोगृह्यते तथापि सन्निकर्षघटकं तत्रायोग्यमपि द्रव्यमेव, यद्यपि शब्दग्रहे द्रव्ययोग्यता न तन्त्रं तत्रापि तत्रैव समवेतः शब्दो गृह्यत इति तदेव तन्त्रम्, नन्वदृष्टसन्निकर्षकल्पना कुतः क्रियते इति चेन्न

---

वि॰ वायिकारणम्, विषयसन्निकर्षो निमित्तकारणमिति तस्मिन् सूत्रएवोक्तमिति, प्रत्यक्षमधिकृत्य सन्निकर्षस्य हेतुता कथितेति वेदितव्यम्॥ ३॥

सन्निकर्षेऽपि विशेषमाह।

सन्निकृष्टेषु गुणकर्म्मसु यज्ज्ञानमुत्पद्यते तत्र द्रव्यं द्रव्यघटितसन्निकर्षः इन्द्रियसंयुक्तद्रव्यसमवायः कारणं तथाच द्रव्यप्रत्यक्षे इन्द्रियसंयोगस्य हेतुता, द्रव्यसमवेतस्य गुणादेः प्रत्यक्षे तु इन्द्रियसंयुक्तद्रव्यसमवायः, शब्दरूपद्रव्यसमवेतप्रत्यक्षे अवयवसमवायः,

सू॰ सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५ ॥

---

उ॰ ज्ञाननिष्पत्तेः कार्य्यत्व हि कारणमवश्यं कल्पनीयमिति भावः ॥ ४ ॥

अपरं ज्ञाननिष्पत्तिविधिमाह।

सामान्यं सत्ता तस्य विशेषा द्रव्यत्वगुणत्वकर्म्मत्वानि एवमेतेषामपि सामान्यानां विशेषाः पृथिवीत्वादिरूपत्वा-द्युत्क्षेपणत्वादीनि, तत्र द्रव्यगतानां सामान्यानां तत एव योग्याश्रयविशेषादेव तन्निबन्धनाच्च संयुक्तसमवायात् संयुक्तसमवेतसमवायात् समवेतसमवायाच्च सार्व्वेन्द्रियं ज्ञानं गुणत्वे च संयुक्तसमवेतसमवायात् शब्दत्वकत्वादौ समवेतसमवायात् सत्तायाः संयुक्तसमवायात् संयुक्तसमवेतसमवायात् समवेतसमवायाच्च सार्व्वेन्द्रियं ज्ञानम्, गुणत्वे च संयुक्तसमवायः समवायश्च न प्रत्यासत्तिरिति, ननु तत एव स्वाश्रयसन्निकर्षादेवेत्यवधारणानुपपत्तिः यतः सामान्ये वि-

---

वि॰ कारणं सर्व्वत्रैव द्रव्यघटितः सन्निकर्षो हेतुरित्यर्थः, तत्रापि चाक्षुषे त्वाचेच द्रव्यस्य योग्यताऽपेक्षितेतिविशेषः ॥ ४ ॥

सामान्यप्रत्यक्षेऽपि द्रव्यघटितसन्निकर्षः कारणमित्याह।

सामान्यं सत्ता विशेषोद्रव्यत्वादि तेषु यज्ज्ञानं जायते तत् तत एव द्रव्यघटितसन्निकर्षादेव, ननु द्रव्यवत् केवलेन्द्रियसन्निकर्षेण कथं सामान्यानि न गृह्यन्ते इत्यत आह सामान्यविशेषाभा-

सू० सामान्यविशेषापेक्षं द्रव्यगुणकर्म्मसु ॥ ६ ॥

---

उ० शेषेषु च पृथिवीत्वादिषु सामान्यविशेषान्तरमस्त्येव तत्स-न्निकर्षोऽपि कारणमेवात आह सामान्यविशेषाभावादिति नहि सामान्यविशेषेषु सामान्यविशेषा वर्त्तन्ते, अनवस्था-प्रसङ्गात् तेषां परस्परं भेदप्रतीतिः स्वरूपत एव, गवेतरा-वृत्तित्वे सति सकलगोवृत्तित्वलक्षणोपाधिसम्भेदाद्वा, एवं घटत्वादावपीति ॥ ५ ॥

ननु सामान्यविशेषेषु सामान्यविशेषाभावाद्यथा तन्नि-रपेक्षमेव ज्ञानं तथा द्रव्यगुणकर्म्मस्वपि किं तन्निरपेक्षमेव, नेत्याह ।

ज्ञानमुत्पद्यते इति प्रकृतम्, द्रव्यगुणकर्म्मसु द्रव्यत्वगुणत्व-कर्म्मत्वविशिष्टबुद्धिस्तावदस्ति विशिष्टज्ञानञ्च विशेष्यविशेष-

---

वि० वादिति सामान्यविशेषोऽद्रव्यत्वं तदभावात् तथाच सामान्यानां द्रव्यत्वशून्यतया इन्द्रियसंयोगस्यासम्भवेन द्रव्याघटितसन्निकर्षा-ग्राह्यत्वात् द्रव्यघटितसन्निकर्षग्राह्याण्येव सामान्यानीतिभावः ॥ ५ ॥

द्रव्यगुणकर्म्मप्रत्यक्षे कञ्चिद्विशेषमाह ।

द्रव्यगुणकर्म्मसु यत्प्रत्यक्षात्मकं ज्ञानं जायते तत्सामान्यविशे-षापेक्षं जातिविशेषप्रकारकं तेषां सामान्यानामिव स्वरूपतोभा-नासम्भवादितिभावः ॥ ६ ॥

सू० द्रव्ये द्रव्यगुणकर्म्मापेक्षम् ॥ ७ ॥

---

उ० येन्द्रियसन्निकर्षादुत्पद्यते इति सामान्यविशेषापेक्षा तत्रावश्यकी, भवति हि द्रव्यमिदं गुणोऽयं कर्म्मेदमिति विशिष्टज्ञानमिति भावः ॥ ६ ॥

तत् किं द्रव्येऽपि सामान्यविशेषमात्रापेक्षमेव ज्ञानमत आह ।

ज्ञानमुत्पद्यते इति प्रकृतं घण्टावान् शुक्लो गौर्गच्छतीति ज्ञानम्, तत्र द्रव्यं घण्टा विशेषणम्, शुक्ल इति गुणः, गच्छतीति कर्म्म, तथाच नागृहीतविशेषणा विशिष्टप्रतीतिर्न्नवा विशेषणसम्बन्धमन्तरेणेतिभवति द्रव्यज्ञाने द्रव्यगुणकर्म्मापेक्षेति भावः ॥ ७ ॥

तत् किं गुणकर्म्मणोरपि गुणकर्म्मापेक्षा नेत्याह ।

---

वि० ननु शुक्लोऽयमित्यादिप्रत्यक्षस्याऽप्यनुभवसिद्धत्वात् तत्र च जातेरप्रकारकत्वात् कथं द्रव्यगुणकर्म्मस्वित्यविशेषोक्तमत आह ।

द्रव्ये यत्प्रत्यक्षं जायते तद्द्रव्यगुणकर्म्मापेक्षं द्रव्यगुणकर्म्माणि विशेषणविधयाऽपेक्षते, द्रव्यगुणकर्म्मप्रकारकमपीति पर्य्यवसितार्थः, तथाचायं दण्डवान्, अयं शुक्लः, अयं चलतीत्यादिप्रत्यक्षम् इदमंशे द्रव्यादिप्रकारकमपि सम्भवतीति भावः ॥ ७ ॥

गुणकर्म्मप्रत्यक्षन्तु गुणकर्म्मप्रकारकं न भवतीत्याह ।

सू० गुणकर्म्मसु गुणकर्म्माभावाद्गुणकर्म्मापेक्षं न विद्यते ॥ ८ ॥

समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्य्यकारणभूते ॥ ९ ॥

---

उ० ज्ञानमितिशेषः। गुणे गुणविशिष्टबुद्धेः कर्म्मसु कर्म्मविशिष्टबुद्धेरभावात् गुणकर्म्मापेक्षा न तद्गतबुद्धिः, नहि गुणे गुणो, नवा कर्म्मसु कर्म्म, येन तत्र विशेषणत्वेन भासेतेति भावः ॥ ८ ॥

ननु गुणकर्म्मणोः स्फुरणाद्गुणबुद्धौ कर्म्मबुद्धौ च कथं न गुणकर्म्मापेक्षेत्याशङ्क्य प्रकरणान्तरमारभते।

समवायिन इत्यभिधानात् सम्बन्धस्य कारणतामाह तथाच गुणे गुणसमवायाभावात् कर्म्मसु कर्म्मसमवायाभा-

---

वि० गुणकर्म्मसु विशेष्येषु गुणकर्म्मापेक्षं गुणकर्म्मप्रकारकं प्रत्यक्षज्ञानं न विद्यते कुत इत्यत आह गुणकर्म्माभावात् गुणकर्म्मसु गुणकर्म्माभावादित्यर्थः, तथाचाभ्रान्तस्य तादृशज्ञानं न सम्भवत्येवेतिभावः ॥ ८ ॥

ननु गुणकर्म्मसु गुणकर्म्माभावेऽपि विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् गुणकर्म्मज्ञानदशायां गुणकर्म्मसु तद्विशिष्टबुद्धिर्दुर्व्वारैवेत्यत आह।

समवायिनः श्वैत्यसमवायिनः श्वैत्यात् शुक्लरूपात् श्वैत्यबुद्धेः शुक्लरूपात्मकविशेषणबुद्धेश्च श्वेते शुक्लरूपवति शङ्खादौ बुद्धिः

सू॰ द्रव्येष्वनितरेतरकारणाः ॥ १० ॥

---

उ॰ वाच्य न तत्तज्ज्ञाने गुणकर्मापेक्षा विशेषणत्वेन, विशेष्यत्वेन त्वस्त्येव, एवञ्च श्वेतः शङ्ख इत्यादिप्रतीतौ श्वैत्यसमवायस्य श्वैत्यगुणस्य श्वैत्यविशेषणज्ञानस्य च कारणत्वमित्युक्तं तथाच विशेषणसम्बन्धविशेषणतज्ज्ञानानां विशिष्टप्रत्यक्षप्रमांप्रति कारणत्वमिति तेन पूर्व्वोक्तं सर्व्वं सिध्यति ॥ ९ ॥

ननु यथा घण्टावानित्यत्र द्रव्यापेक्षं द्रव्यज्ञानम्, तथाऽयं स्तम्भो, अयं कुम्भ इत्यादावपि द्रव्याविशेषणकबुद्धौ द्रव्यबुद्धिः कारणं तथाच क्वापि प्रथमतोद्रव्यबुद्धि र्न स्यादित्यत आह।

बुद्धय इतिशेषः। स्तम्भज्ञानानन्तरकालीनमपि कुम्भ-

---

वि॰ शुक्लोऽयमिति शुक्लरूपविशेषणिका प्रत्यक्षप्रमिति र्भवति अतस्ते शुक्लरूपवत्त्वशुक्लरूपबुद्धी कार्य्यस्य शुक्लरूपप्रकारकप्रत्यक्षप्रमात्मकस्य कारणभूते इत्यर्थः, तथाच समवायसम्बन्धेन शुक्लरूपप्रकारकप्रत्यक्षप्रमां प्रति शुक्लरूपवत्त्वं शुक्लरूपज्ञानञ्च द्वयमेव तन्त्रमिति गुणकर्म्मसु गुणकर्म्मरूपविशेषणविरहान्न तत्प्रकारकप्रत्यक्षप्रमितिरितिभावः। समवायसम्बन्धेन श्वैत्यवत्त्वस्य तन्त्रत्वासूचनाय सूत्रे समवायिन इत्युक्तमिति ॥ ९ ॥

ननु अयं घट इतिप्रत्यक्षानन्तरमयं पट इति प्रत्यक्षं यत्र जायते तत्र घटज्ञानं पटज्ञाने कारणं तत्पूर्व्ववर्त्तित्वात् तथाच घटज्ञानं विना पटज्ञानं कदाऽपि न स्यादिति तदाशङ्कां निरस्यति।

सू० कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥

---

उ० ज्ञानं न स्तम्भज्ञानकार्य्यं स्तम्भस्य कुम्भं प्रति विशेषणत्वायोगात् ॥ १० ॥

ननु घटपटादिबुद्धीनां क्रमो दृश्यते क्रमश्च कार्य्यकारणभावघटित एवेत्यत आह।

कारणक्रमाधीनो घटपटादिबुद्धीनां क्रमो, न हेतुफलभावाधीनः, कारणक्रम एव कथमत आह कारणायौगपद्यादिति बुद्धीनां यौगपद्यं प्रतिषिद्धमतो नाना-

---

वि० द्रव्येषु पूर्व्वोत्तरभावापन्नद्रव्यविशेषकद्रव्यबुद्धिषु अनितरेतरकारणाः न परस्परकारणाः, बुद्धय इति पूरणीयं तथाच घटज्ञानस्य पटज्ञानपूर्व्ववर्त्तित्वेऽपि नियतपूर्व्ववर्त्तित्वाभावान्न कारणत्वमितिभावः ॥ १० ॥

नन्वेवं तत्र घटज्ञानमेव कथं न पटमाणम्वते कार्य्यकारणभावमन्तरेण तयोः क्रमस्यासम्भवादित्यत आह।

घटपटादिबुद्धीनां क्रमः पौर्व्वापर्य्यरूपः न हेतुफलभावात् न कार्य्यकारणभावात् किन्तु तादृशबुद्धिकारणानां घटपटादिसन्निकर्षादीनां क्रमात् पौर्व्वापर्य्यात् चकारोऽनुक्तमयौगपद्यं समुच्चिनोति अयञ्चकारः "क्रम" इत्यनन्तरं योजनीयः, एवञ्च घटपटादिबुद्धीनामयौगपद्यं तत्कारणानां सन्निकर्षादीनामयौगपद्यादित्यर्थः, यत्र तु घटपटसन्निकर्षादीनामस्ति यौगपद्यम्, तत्र युगपदेव सन्निकृष्टयावत्पदार्थविषयिणी समूहालम्बनात्मिका बुद्धिरुत्पद्यते इति कारणयौगपद्यात् कार्य्ययौगपद्यं कारणा-

उ॰ बुद्धिकारणानामपि न यौगपद्यम्, यदि तु कारणयौगपद्यं भवेत्तदा कार्य्ययौगपद्यमप्यापद्येत, तथाच युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति बज्जभज्येतेतिभावः।

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारेऽष्टमाध्यायस्य प्रथमाह्निकम् ॥*॥

---

वि॰ क्रमात् कार्य्यक्रमश्चेत्यपि बोद्धव्यम्। बुद्धिः प्रथमतोद्विविधा अनुभूतिः स्मृतिश्च, अनुभूतिरपि काणादमते द्विविधा प्रत्यक्षानुमितिभेदात्, प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधं, सविकल्पकनिर्व्विकल्पकभेदेन च द्विविधं लौकिकालौकिकभेदेन द्विविधञ्च, अनुमितिरपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपत्रिविधानुमानजन्यत्वात् त्रिविधा, तत्रेदंवाच्यं ज्ञेयत्वादित्यादिकं केवलान्वय्यनुमानम्, पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिकं केवलव्यतिरेक्यनुमानम्, अन्वयव्यतिरेक्यनुमानन्तु पर्व्वतोवह्निमान् धूमादित्यादिकमिति। स्मृतिश्चोपेक्षात्मकनिश्चयाधीनसमानाकारकभावनाख्यसंस्काराधीना एकविधैव, प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमाचेति, तद्वति तत्प्रकारिका बुद्धिस्तत्प्रमा तदभाववति तत्प्रकारिका बुद्धिस्तदप्रमा, संशयनिश्चयभेदेनापि बुद्धिर्द्विविधा, तत्रैकधर्म्मिणि विरुद्धभावाभावप्रकारकज्ञानं संशयः, तदभावाप्रकारकं तत्प्रकारकं ज्ञानं तन्निश्चयः, एतन्मते सादृश्यज्ञानस्थले पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमिति भवति प्रमाणं द्विविधं प्रत्यक्षमनुमानञ्चेति यथार्थानुभवश्च प्रमा एतच्चाग्रे सूत्रकृदेव वक्ष्यतीतिसंक्षेपः। ११।

इति श्रीजयनारायणतर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ अष्टमाध्यायस्याद्यमाह्निकम्।०।

सू० अयमेष त्वयाकृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥
॥ १ ॥

उ० प्रात्यक्षिकस्य सविकल्पकस्य निर्व्विकल्पकस्य च ज्ञानस्य निष्पत्तिविधिमभिधायेदानीं विशिष्टवैशिष्ट्यप्रत्यक्षमभिधातुमेकदेशमाह ।

सन्निकृष्टे वस्तुनि तावदयमिति बुद्धिरुत्पद्यते, विप्रकृष्टे च वस्तुन्येष इति, क्रियायां स्वतन्त्रोऽयमितिबुद्धिमपेक्ष्य त्वयेति कर्तृत्वोपरक्ताबुद्धिः, करणव्यापारविषयत्वबुद्धिमपेक्ष्य कृतमितिकर्म्मबुद्धिः, अयं भुजिक्रियायां कर्त्ता प्रयोजकस्त्वायमितिबुद्धिमपेक्ष्य भोजयेति, नियोज्यनियो-

वि० बुद्धिविशेषजनिका अपि काश्चिद्बुद्धयो भवन्तीत्याह ।

अयमेष इति, अयं घट एष पट इतिज्ञानं बुद्ध्यपेक्षं बुद्धिविशेषजनकम् इदमेतदोः प्रत्यक्षविषये शक्तत्वात् प्रत्यक्षरूपा बुद्धिस्तादृशज्ञाने विशेषणम्, युष्मच्छब्दस्य स्वजन्यबोधाश्रयतया वक्तुरभिप्रायविषये शक्तत्वात् त्वयाकृतमितिवाक्यजन्यं ज्ञानं बुद्धिविशेषजनकं भोजयैनमिति इदमर्थकैनशब्दजन्यज्ञानमपि प्रत्यक्षात्मकबुद्धिविशेषजनकम् अतएव "विद्यामथैनं विजयां जयाञ्च" इति भट्टिकाव्यम्, यद्वा उक्तस्य पश्चादुक्तौ इदम्शब्दस्य एनादेशः तादृशस्य च पूर्व्वोत्पन्नशाब्दबोधविषयबोधकत्वात् तज्जन्यज्ञानं बुद्धिविशेषजनकमेवेति, शिष्यव्युत्पादनार्थं कतिपयप्रयोगप्रदर्शनमिति ॥ १ ॥

* वैशेषिकमते शब्दलिङ्गकानुमितिरेव शाब्दबोधः।

सू० दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥
अर्थ इति द्रव्यगुणकर्म्मसु ॥ ३ ॥

---

उ० कृव्यापारस्य विषयोऽयमितिबुद्ध्यपेक्षमेनमिति एवमन्यदपि बुद्ध्यपेक्षमूहनीयम् ॥ १ ॥

अन्वयव्यतिरेकपरिच्छेद्यमेवैतदित्याह।

यदाऽयमितिबुद्धेः सन्निकृष्टोविषयः, एष इतिबुद्धे विंप्रकृष्टोऽपि बुद्ध्यारूढोविषयः, त्वयेतिबुद्धेः सन्निकृष्टः कर्त्ता विषयः, कृतमितिबुद्धेः कर्म्म विषयः, भोजयेतिबुद्धे र्नियोज्यनियोक्तारौ विषयौ, एनमितिबुद्धेस्तदुभयव्यापारो विषयः, सन्निकृष्टो भवति तदैताद्दृशी बुद्धिरुत्पद्यते, अदृष्टेषु तु विषयेषु नैता बुद्धयः प्रादुर्भवन्तीत्यन्वयव्यतिरेकगम्यमेवैतदित्यर्थः ॥ २ ॥

इदानीं प्रकरणान्तरमारभते।

एतेषां द्रव्यगुणकर्म्मणामर्थमानत्वं तेन तेन विधिनोक्तं

---

वि० एतेषां पदानां ज्ञानघटितधर्म्मावच्छिन्ने शक्तिरन्वयव्यतिरेकगम्येत्याह।

दृष्टेषु ज्ञातेषु ज्ञानघटितधर्म्मावच्छिन्नेष्वितियावत्, भावात् इदमादिशब्दप्रयोगस्य सत्त्वात्, अदृष्टेषु अज्ञातेषु ज्ञानघटितधर्म्मानवच्छिन्नेष्वितियावत्, अभावात् तादृशप्रयोगस्यासत्त्वात् बुद्धिघटितधर्म्मावच्छिन्न एव तेषां शक्तिरित्यर्थः ॥ २ ॥

अर्थपदपरिभाषां दर्शयति।

अर्थ इति शब्दो द्रव्यगुणकर्म्मसु वर्त्तते तत्र तत्र पारिभाषिकः,

सू॰ द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम्* ॥ ४ ॥

उ॰ तेन तेषु त्रिषु वैशेषिकाणामर्थ इति परिभाषा, अर्थपदेन त्रयाणामुपस्थितेः, तदुक्तं प्रशस्तदेवाचार्यैः "त्रयाणामर्थशब्दाभिधेयत्वञ्च" इति ॥ ३ ॥

प्रकरणान्तरमवतारयति।

द्रव्येष्विति द्रव्यपदार्थनिरूपणप्रकरणमुपलक्षयति प्रत्यक्षाप्रत्यक्षाणामित्यादिसूत्रेण शरीरादीनां पञ्चात्मकत्वं पञ्चभूतात्मकत्वं प्रतिषिद्धं निराकृतम्। यथा शरीरस्य न नानाप्रकृतिकत्वं तथा वक्ष्यमाणानां घ्राणादीनामिन्द्रियाणामपि, तेन तेषां प्रतिनियतगुणग्राहकत्वं सिध्यतीति भावः ॥ ४ ॥

यदर्थमिदमारब्धं तदाह।

वि॰ गौतमीये तु "रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्थाः" इति प्रमेयान्तःपातिनोऽर्थस्य लक्षणसूत्रम्, अतः पञ्चेन्द्रियग्राह्येषु पञ्चसु गुणेष्वपि अर्थशब्दस्य परिभाषान्तरं समानतन्त्रसिद्धम् ॥ ३ ॥

किमिन्द्रियं किम्प्रकृतिकं किमर्थग्राहकमित्यभिधातुं पीठं रचयति।

द्रव्येषु द्रव्यनिरूपणसूत्रेषु पञ्चात्मकत्वं पञ्चभूतप्रकृतिकत्वं प्रतिषिद्धं निराकृतं तथाच शरीरादिकं किञ्चिदपि द्रव्यं न पञ्चभूतप्रकृतिकं किन्त्वेकैकभूतप्रकृतिकान्येव सर्व्वाणि शरीराणीन्द्रियाणि चेतिभावः ॥ ४ ॥

* प्रतिषिद्धमिति शेषः क्वचित् क्वचित् पुस्तके न दृश्यते।

सू॰　भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ५ ॥

---

उ॰　गन्धो ज्ञायतेऽनेनेति गन्धज्ञानं घ्राणं तत्र पृथिवी पृथिवीमात्रं प्रकृतिः उपादानकारणम्, कुत एतदित्यत आह गन्धवत्त्वात् नहि गन्धवत् निर्गन्धेनारभ्यते इत्युक्तम्, गन्धवत्त्वञ्च वहिरिन्द्रियाणां ग्राह्यजातीयगुणवत्त्वनियमात् सिद्धम्, तर्हि पार्थिवत्वाविशेषेऽपि शरीरावयवान्तराणां न गन्धव्यञ्जकत्वं किन्तु घ्राणस्यैवेति कुतोनियम इत्यत आह भूयस्त्वादिति इतरद्रव्यानभिभूतैः पार्थिवावयवैरारब्धत्वमेव भूयस्त्वं पारिभाषिकञ्चैतद्भूयस्त्वं समानतन्त्रेऽपि ॥ ५ ॥

इन्द्रियान्तरेऽप्येतदतिदिशति ।

---

वि॰　एवं घ्राणेन्द्रियं गुणेषु गन्धमात्रग्राहकं पृथिवीमात्रप्रकृतिकञ्चेत्याह ।

गन्धस्य ज्ञानं प्रत्यक्षं यस्मात् तद्गन्धज्ञानं घ्राणेन्द्रियं तत्र, पृथिवी तन्मात्रं, प्रकृतिः समवायिकारणम्, भूयस्त्वात् जलाद्यनभिभूतभागारब्धत्वात् गन्धवत्त्वाच्च, रसाद्यग्राहकत्वात् घ्राणेन्द्रियं न जलाद्यारब्धम्, गन्धवत्त्वञ्चात्र ग्राहकतासम्बन्धेन गन्धग्राहकत्वादिति फलितार्थः, तथाच घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिवदित्यनुमानेन घ्राणस्य पृथिव्युपादानकत्वं सिध्यतीतिभावः, एतच्च स्पष्टार्थमनोक्तम् ॥ ५ ॥

इन्द्रियान्तरमप्येकैकभूतप्रकृतिकमित्याह ।

सू॰ तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात्॥ ६॥

---

उ॰ रसनचक्षुस्त्वगिन्द्रियाणां प्रकृतिरिति शेषः, तेन यथा-संख्यं रसनादीनामवादयः प्रकृतयः, तत्तत्प्रतिनियतार्थग्राहकत्वात्, अत्रापि नियमे भूयस्त्वमेव तन्त्रम्, रसादिमत्त्वे च रसनादीनां ग्राह्यजातीयविशेषगुणवत्त्वनियम एव प्रमाण-मित्युक्तम्, एवञ्च विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नो-नभोदेश एव श्रोत्रम्॥ ६॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारेऽष्टमाध्यायस्य द्वि-तीयमाह्निकम्॥ ०॥

समाप्तश्चायमष्टमोऽध्यायः।

---

वि॰ रसग्राहके रसने आपः प्रकृतयः, रूपग्राहके चक्षुषि तेजः, प्रकृतिः, स्पर्शग्राहके त्वगिन्द्रिये वायुः प्रकृतिः, रसनेन्द्रियादीनां रसाद्येकैकमात्रग्राहकत्वात्, रसगन्धस्पर्शाविशेषादिति क्वाचित्को लिपिकरप्रमादप्रयुक्तः पाठस्तत्र कथञ्चिदर्थसङ्गमनेऽपि तेज-स्त्वस्य हेतुकथनेन सन्दर्भविरोधोदुर्व्वार एवेति, रसनादीनां जलीयत्वादिसिद्धिप्रकारः प्राक्प्रदर्शित एवादरणीयः। ६।

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां क-णादसूत्रविवृतौ अष्टमाध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायमष्टमोऽध्यायः। ※।

सू॰　क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

---

उ॰　संयोगसमवायान्यतरसन्निकर्षजलौकिकप्रत्यक्षनिरूपणानन्तरं तदितरप्रत्यासत्तिजन्यलौकिकालौकिकप्रत्यक्षव्युत्पादनफलकं नवमाध्यायमाह।

कार्य्यमितिशेषः, प्रागिति कार्य्योत्पत्तेः प्राक्, कार्य्यं घटपटादि, असत् तत्कालीनध्वंसजनकाभावप्रतियोगीत्यर्थः, अत्र हेतुः क्रियागुणव्यपदेशाभावात्, यदि तदानीमपि कार्य्यं घटादि सदेव स्यात् तदा क्रियावत्त्वेन गुणवत्त्वेन च व्यपदिश्येत,यथोत्पन्ने घटे घटस्तिष्ठति घटश्चलति रूपवानयं दृश्यते घट इत्यादि प्रकारेण व्यपदिश्यते न तथोत्पत्तेः प्रागपि व्यपदेशोऽस्ति तेन गम्यते तदानीमसन्निति,सच व्यूह्यमानेषु वीरणेषु *योज्यमानेषु तन्तुषु चक्रारूढायां मृदि कुलालादिव्यापारेषु अनुवर्त्तमानेषु भविष्यत्यत्र कटः पटोघटो-वेति सार्व्वलौकिकी प्रत्यक्षप्रतीतिः, चक्षुर्विस्फारणानन्तरं जायमानत्वात्, नच संयोगसमवायान्यतरघटिता प्रत्यासत्तिरत्र प्रभवति,तस्मादिन्द्रियसम्बद्धविशेषणता प्रत्यासत्तिरत्र

---

वि॰　हेरम्बाम्बापदद्वन्द्वं निधाय हृदयाम्बुजे।
आस्वादनवमाध्यायं विद्योमि कुतूहलात्॥

अभावप्रत्यक्षमभिधित्सुर्भूमिकामाह।

घटादिकार्य्यं स्वोत्पत्तेः प्रागसत्, क्रियाया गुणस्य च व्यपदेशस्य व्यवहारस्याभावात्, घटे जाते यथा घटस्तिष्ठति घटश्चलति

---

* रच्यमानेष्विति क्वचित् पाठः।

उ० तन्न, ननु चान्योन्याश्रयः सत्यां विशेषणतायां तत्प्रतीतिः प्रतीतौ च विशेषणतेति चेन्न विशेषणता हि तदुभयस्वरूपमेव उपस्थितप्रत्ययजननयोग्यं तच्च प्रतीतेः पूर्व्वमपि सदेव तदुक्तं न्यायवार्त्तिके "समवायेऽभावे च विशेषणविशेष्यभावः" इति, सचायं प्रागभावः प्रतियोगिजनकः, नहि घटे जाते स एव घटस्तदानीमेवोत्पद्यते तत्र कारणान्तरसत्त्वेऽपि कारणवैकल्यमनुसियमाणं स्वप्रागभाववैकल्यमेवानुसर्त्तुमर्हति, तद्घटोत्पत्तौ स एव घटः प्रतिबन्धक इति चेत्तर्हि प्रतिबन्धकाभावत्वेन तस्य कारणत्वमवर्ज्जनीयम्, ननु यदि घट एव तस्याभावस्तदा घटे नष्टे तदुन्मज्जनापत्तिरिति चेन्न घटनाशस्यापि तद्विरोधित्वात् नहि विरोधिसत्त्वकालेऽपि विरोध्यन्तरप्रादुर्भाव इति, नह्यनयोर्स्वरूपतोविरोधो येन गोत्वाश्वत्ववत् समानकालीनत्वं स्यात् किं तर्हि कालकृतस्तथाच कथमेककालावस्थायित्वं भवेत् ॥ ॥ १ ॥

अभावान्तरं प्रतीतिवर्णयितुमाह ।

---

वि० घटः श्यामइत्यादि जिवानुवत्यवहारो भवति पूर्व्वन्तु न तथा व्यवहार इत्यर्थः, अतः सत्कार्य्यवादोनिरस्त इति, घटोत्पत्तेः पूर्व्वं घटप्रागभावस्तिष्ठतीति सच प्रतियोगिजनकः कथमन्यथा कारणान्तर सत्त्वे उत्पन्नस्य न पुनरुत्पादः, इहेदानीं घटो भविष्यतीत्यादि प्रत्यक्षमपि प्रागभावे मानमिति ॥ १ ॥

ध्वंसरूपोऽभावोऽप्यस्तीत्याह ।

सू॰ सदसत् ॥ २ ॥

असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥

॥ ३ ॥

---

उ॰ यथा कारणव्यापारात् पूर्व्वं प्रत्यक्षानुमानाभ्यां कार्य्यस्यासत्त्वं प्रमीयते, तथा विनाशकस्य मुद्गरादेर्व्यापारानन्तरं सदेव कार्य्यं घटादि इदानीमसदिति प्रत्यक्षानुमानाभ्यामेव प्रमीयते, सचायमभावोध्वंस इति गीयते, भवति हि घटोनष्टोध्वस्त इदानीं अतपूर्व्वोगकारोनासीत्यादिधीरितिभावः ॥ २ ॥

ननु घट एवावस्थाविशेषे ध्वंसव्यवहारं करोति नतु घटादन्यस्तस्य ध्वंस इत्यत आह।

सदिति सूत्रशेषः, असतः सत् अर्थान्तरं, कुत इत्यत आह क्रियागुणव्यपदेशाभावादिति नहि प्रध्वंसकालेऽपि वर्त्तते

---

वि॰ सदपि घटादिकार्य्यं मुद्गरप्रहारानन्तरम् असत् अवर्त्तमानं ध्वंसप्रतियोगीत्यर्थः तथाच घटो नश्यति घटोध्वस्त इत्यादिप्रत्यक्षसिद्धोध्वंसात्मकोऽभावोऽप्यस्तीतिभावः ॥ २ ॥

ननु मुद्गरप्रहारानन्तरं तिरोभूतः सन् सद्देव घटस्तिष्ठति तादृशावस्थान्वितो घट एव ध्वंसव्यवहारविषय इत्यत आह।

असतो अवर्त्तमानस्य क्रियागुणव्यपदेशाभावात् क्रियागुणव्यवहाराभावात् असत इति सावधारणं तथाचावर्त्तमानस्यैव क्रियागुणव्यपदेशाभावो नहि मुद्गरप्रहारानन्तरं घटस्यसति

सू० सच्चासत् ॥ ४ ॥

---

उ० घटः, अस्ति घटः, इदानीं रूपवान् घटः, घटमानयेत्यादिव्यपदेशस्तदितो वैधर्म्यादसतः सदर्थान्तरमिति ॥ ३ ॥

प्रागभावप्रध्वंसौ साधयित्वाऽन्योन्याभावं साधयितुमाह ।

यत्र सदेव घटादि असदिति व्यवह्रियते तत्र तादात्म्याभावः प्रतीयते भवति हि असमश्वो गवात्मना, असन् गौरश्वात्मना, असन् पटो घटात्मना, अघटः पटः, अनश्वो गौः, अगौरश्व इत्यादिप्रतीतिः, तदश्वामश्वान्योन्याभाववान् गौः पटान्योन्याभाववान् घट इत्यन्योन्याभाव एव तादात्म्या-

---

वि० ध्वस्तो घटोऽदृश्यते इति व्यवहारो लोकानां तस्माद्ध्वंसव्यवहारविषयो न घटस्तस्यावर्त्तमानत्वात् किन्तु अर्थान्तरम्, घटादन्य एव ध्वंसनामा अन्याभाव इति ॥ ३ ॥

भेदरूपोऽभावोऽप्यस्तीत्याह ।

सदपि घटादि भूतलादौ असत् अन्योन्याभावप्रतियोगि भूतलं न घट इत्यादिप्रतीतेः, ननु घटवति भूतले कथं घटस्यान्योन्याभावः स्यास्यति प्रतियोगिरूपस्य घटस्य विरोधिनः सत्त्वादिति चेन्नह्ययं कश्चित् अभावं प्रति येन केनापि सम्बन्धेन प्रतियोगिनो विरोधिता, तथा सति समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटात्यन्ताभावस्यापि भूतलेऽसत्त्वप्रसङ्गात् किन्तु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगी अभावस्य विरोधी तथाच अन्योन्याभावस्य प्रतियोगितावच्छेदकः सम्बन्धस्तादा-

सू॰ यच्चान्यदसदतस्तदसत् ॥ ५ ॥

उ॰ भावापरनामा भासते तदच तादात्म्यं प्रतियोगितावच्छेद-
कम्, प्रतियोगिसमानाधिकरणश्चायमभावः, भवति हि
घटो न भूतलमिति प्रतीतिः, नित्यश्च, कदाचिदपि घट-
पटयोस्तादात्म्यासम्भवात् ॥ ४ ॥

इदानीं चतुर्थमभावमत्यन्ताभावाख्यमाह।

अतः पूर्व्वोक्तादभावत्रयात्, यदन्यदसत् तदसत्, तदत्य-
न्तासत्त्वम्, असदित्युभयत्र भावप्रधानोनिर्द्देशः, तत्रैकमस-
दुद्देश्यमपरमसद्विधेयम्, तथाचोक्ताभावत्रयभिन्नो योऽभावः
सोऽत्यन्ताभाव इति पर्य्यवसन्नोऽर्थः, तत्र प्रागभावस्य उत्त-
रावधिकत्वम्, प्रध्वंसस्य पूर्व्वावधिकत्वम्, अन्योन्याभावस्य प्र-

वि॰ त्याख्य एव तेन सम्बन्धेन च घटस्य स्वस्मिन्नेव सत्त्वेन भूतलादा-
वसत्त्वात्तत्र घटान्योन्याभावसत्त्वे न कोऽपि विरोधः, अयञ्चान्यो-
न्याभावोऽत्यन्ताभाववन्नित्य एवेतिबोध्यम् ॥ ४ ॥

अत्यन्ताभावं साधयति।

अत उक्तादभावत्रयादन्यद् यत् असत् भावभिन्नम्, तदसत्
अत्यन्तासत्त्वं भावप्रधाननिर्द्देशोऽयम्, अत्यन्ताभावाख्यमिति तु
फलितार्थः, अयञ्चात्यन्ताभावस्तुरीयोऽभावः सदातनश्च, प्रति-
योगि तत्प्रागभाव तत्ध्वंसास्त्रय एवात्यन्ताभावस्य विरोधिनः,
रक्तघटे श्यामं रूपं नास्ति श्यामघटे रक्तं रूपं नास्तीतिप्रतीती
च ध्वंसप्रागभावाववगाहेते नत्वत्यन्ताभावमिति प्राञ्चः, नव्यास्तु

सू॰ असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधि-
प्रत्यक्षवत् ॥ ६ ॥

---

उ॰ तियोगिसमानाधिकरणत्वमत्यन्ताभावस्य तु चितयवैधर्म्य-
मतस्तुर्थोऽयमभावः ॥ ५ ॥

इदानीं प्रकरणान्तरमारभते तत्र प्रध्वंसे तावत् प्र-
त्यक्षसामग्रीमाह ।

असदितीतिकारेण प्रत्यक्षाकारं ज्ञानमाह, तेनासन्
घटः, नष्टोघटः, ध्वस्त इदानीं घट इति प्रत्यक्षप्रतीतिरस्ति
तत्र दृष्टान्तोविरोधिप्रत्यक्षवदिति विरोधिनोघटादेर्यथा

---

वि॰ ध्वंसप्रागभावयो र्नात्यन्ताभावविरोधित्वमतो ध्वंसादिकालावच्छे-
देनाप्यत्यन्ताभावो वर्त्तत एव, यत्र भूतले पूर्व्वमपसारितं घटादिकं
पुनरानीतं तत्र घटकालस्याभावसम्बन्धाघटकत्वाद्घटसत्त्वकाले न
घटात्यन्ताभावबुद्धिरित्याङः, केचित्तु यत्र भूतले पूर्व्वं घटादिकं
स्थितमथापसारितं पुनरानीतञ्च तत्रोत्पादविनाशशाली साम-
यिकनामा चतुर्थः संसर्गाभाव एव प्रतीयते नात्यन्ताभाव-
इत्याङः ॥ ५ ॥

अभावचतुष्टयं व्युत्पाद्य ध्वंसप्रत्यक्षं व्युत्पादयति ।

असदिति असन् घटः नष्टोघटः ध्वस्तोघट इत्यादिप्रत्यक्षं
विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्षवत् अनुभवसिद्धं लौ-
किकसन्निकर्षजन्यमित्यर्थः तत्र च प्रतियोगिप्रत्यक्षं चक्षुरादिसं-
योगजन्यं ध्वंसप्रत्यक्षन्तु चक्षुरादिसंयुक्तविशेषणताजन्यमिति-

सू॰ तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥

---

उ॰ स्पष्टं प्रत्यक्षं तथा तत्प्रध्वंसस्यापि, तत्र कारणमाह भूत-प्रत्यक्षाभावादिति भूतस्य उत्पद्य विनष्टस्य घटादेः प्रत्यक्षाभावात् एतेन योग्यानुपलब्धिमाह, तत्र चायं तर्कः सहकारी, यद्यत्र घटोऽभविष्यत् भूतलमिवाद्रक्ष्यत न च दृश्यते तस्मान्नास्तीति, सहकार्य्यन्तरमाह भूतस्मृतेरिति भूतस्य प्रतियोगिनोघटादेः स्मृतेरिति प्रतियोगिस्मरणमुक्तम् ॥ ६ ॥

प्रागभावे प्रध्वंसप्रत्यक्षताप्रकारमतिदिशन्नाह।

सामान्यवाच्यप्ययमभावशब्दः प्रकरणात् प्रागभावपरः, यथा प्रध्वंसे प्रत्यक्षज्ञानं तथा प्रागभावेऽपि, कुतः भाव-

---

वि॰ विशेषः, अपरमपि विशेषमाह भूतप्रत्यक्षाभावादिति भूतस्य अतीतस्य प्रतियोगिनोघटादेः प्रत्यक्षस्याभावाद्योग्यानुपलम्भरूपात् कारणात् भूतस्य अतीतघटादेः स्मृतेः स्मरणात्मकात् प्रतियोगिज्ञानाच्च जायमानमिति पूरणीयम्, तथाच ध्वंसप्रत्यक्षं प्रतियोग्यनुपलब्धिजन्यं प्रतियोगिज्ञानजन्यञ्च प्रतियोगिप्रत्यक्षन्तु न तथा इतोऽपि विशेष इतिभावः, अत्र स्मृतित्वमविवक्षितं ज्ञानमात्रन्तु विवक्षितमिति मन्तव्यम्। एवञ्च घटादयो यथा प्रत्यक्षसिद्धास्तथा तद्ध्वंसा अपीतिभावः ॥ ६ ॥

प्रागभावप्रत्यक्षमप्यनयैव रीत्या भवतीत्याह।

अभावे प्रागभावे सामान्यवाचकशब्दस्य विशेषपरत्वात्, तथा प्रत्यक्षम्, यथा ध्वंसे इन्द्रियसन्निकर्षयोग्यानुपलब्धिप्रतियोगिज्ञानैः

3 c 2

सू० एतेनाघटोऽगौरधर्म्मश्च व्याख्यातः ॥ ८ ॥

उ० प्रत्यक्षत्वात् भावस्य वृष्यमाणवीरणादेः प्रत्यक्षत्वात् प्रत्यक्षेण विषयीक्रियमाणत्वात्, यद्वा भावस्याधिकरणस्य प्रतियोगिनश्च प्रत्यक्षत्वात् योग्यत्वादित्यर्थः, संसर्गाभावग्रहेऽधिकरणयोग्यतायाः प्रतियोगियोग्यतायाश्च तन्त्रत्वात्, चकारात् प्रतियोगिस्मरणमुक्तञ्च तर्कं समुच्चिनोति, अनादेरपि प्रागभावस्यानन्तस्यापि प्रध्वंसस्यावस्थाविशेषमाचे प्रत्यक्षत्वम् ॥ ७ ॥

अन्योन्याभावस्य प्रत्यक्षतामाह।

एतेनेति प्रतियोगिस्मरणाधिकरणग्रहणप्रागुक्ततर्कान-

---

वि० प्रत्यक्षं जायते तथा प्रागभावेऽपीत्यर्थः। ननु प्रागभावस्यानादित्वात् कपालादिसंयोगजननादतिपूर्व्वमपि कथं न प्रागभावस्य प्रत्यक्षमुक्तानां कारणानां तदानीमपि सम्भवादित्यत आह भावप्रत्यक्षत्वादिति भवत्यस्मादित्यपादाने घञ्, भावश्चरमकारणसामग्री तेन प्रत्यक्षं यस्य तत्त्वात् चरमकारणसामग्रीप्रत्यक्षत्वादितिफलितार्थः तथाचोक्तस्थले चरमकारणसामग्र्यभावान्नप्रागभावप्रत्यक्षमितिभावः, अतीन्द्रियस्य वाय्वादेः प्रागभावस्य प्रत्यक्षवारणाय चकारस्तेन च प्रतियोगियोग्यत्वं समुच्चितमिति मन्तव्यम् ॥ ७ ॥

अन्योन्याभावस्याप्येवं प्रत्यक्षं भवतीत्याह।

अघटः पटः, अगौरश्वः, अधर्म्मः सुखमित्याद्याकारकोऽन्योन्याभावप्रत्ययोऽपि एतेन प्रध्वंसप्रागभावप्रत्ययकथनेन व्याख्यातः

उ॰ तिदिशति, योग्यानुपलम्भः सर्व्वत्र समानः, चकार उक्तसमुच्चयार्थः, अधर्म्म इत्यतीन्द्रियस्यापि धर्म्मस्य सुखज्ञानादावधिकरणेऽन्योन्याभावस्य प्रत्यक्षतां वदन् अन्योन्याभावग्रहे प्रतियोगियोग्यता न तन्त्रं किन्त्वधिकरणयोग्यतामात्रं तन्त्रमित्युपदर्शयति, कथमन्यथा स्तम्भः पिशाचो न भवतीति पिशाचान्योन्याभावः स्तम्भे गृह्येत, स्तम्भात्मतया पिशाचानुपलम्भस्य तदन्योन्याभावग्राहकत्वात्, तस्याप्यनुपलम्भस्य प्रतियोगिसत्त्वविरोधित्वात् स्तम्भे पिशाचतादात्म्ये सत्यनुपलम्भानुपपत्तेः। ननु पिशाचतादात्म्यमिह न प्रतियोगि, किन्तर्हि पिशाचः, स च स्तम्भे वर्त्तमानोऽपि गुरुत्ववन्नोपलभ्यते इति तदनुपलम्भः प्रतियोगिसत्त्वविरोधी न भवतीति चेन्न प्रतियोग्यनुपलम्भवत् प्रतियोगितावच्छेदकानुपलम्भस्याप्यभावग्राहकारणत्वात्, ननु प्रतियोगित्वग्रहाधीनोऽन्यो-

---

वि॰ वर्ण्यत इति समुदितार्थः तथा चान्योन्याभावप्रत्यक्षेऽपि इन्द्रियसम्बद्धविशेषणता प्रतियोग्यनुपलम्भः प्रतियोगिज्ञानञ्चैतानि कारणानि, इयान् परं विशेषो यत् संसर्गाभावग्रहे प्रतियोगियोग्यत्वं तन्त्रम्, अन्योन्याभावग्रहे त्वधिकरणयोग्यत्वमिति धर्म्मस्यातीन्द्रियत्वेऽपि सुखादौ योग्याधिकरणे तदन्योन्याभावस्य प्रत्यक्षं निराबाधमेवेति, यत्तु संसर्गाभावग्रहे प्रतियोग्यधिकरणोभययोग्यत्वं तन्त्रमिति केचिदुक्तं तन्न समीचीनं, तथा सति पाषाणे सौरभाभावस्य, गुडे तिक्ताभावस्य, वायौ रूपाभावस्य, आकाशे स्पर्शाभावस्य शब्दाभावस्य च प्रत्यक्षानुपपत्तेस्तत्तदधिकरणानां

सू॰ अभूतं नास्तीत्यनर्थान्तरम्॥ ९॥

---

उ॰ न्याभावग्रहः प्रतियोगित्वस्यान्योन्याभावविरहात्मत्वं तत-स्यान्योन्याभावग्रहाधीन एवान्योन्याभावग्रह इति चेन्ना-धिकरणावृत्तित्वेन ज्ञायमानो धर्म्म एव प्रतियोगिताव-च्छेदको न तु प्रतियोगितावच्छेदकत्वेनापि तद्ग्रहस्तन्त्र मित्युक्तत्वात्॥ ८॥

अथेदानीमत्यन्ताभावप्रत्यक्षतामाह।

भूतमिदानीं नास्तीतिप्रतीति र्ध्वंसमालम्बते भूतत्वं नोल्लिखति किन्त्विदं नास्तीतिमात्रोल्लेखिनी प्रत्यक्षप्र-तीतिरत्यन्ताभावमालम्बते, अभूतमित्युत्पादविनाशानाल-म्बनत्वं द्योतयति, अनर्थान्तरत्वमपि तदभिप्रायकमेव, यथा जले पृथिवीत्वं नास्ति पृथिव्यां न जलत्वमिति, यदि

---

वि॰ तत्तदिन्द्रियायोग्यत्वात्, अतएव त्वक्संयुक्तकालविशेषणतया वायु-स्पर्शनाशप्रत्यक्षं पक्षधरमिश्रैः स्वीकृतमिति संक्षेपः॥ ८॥

अत्यन्ताभावस्यापि प्रत्यक्षमाह।

अभूतमिति नास्ति भूतं अतीतं यत्र प्रत्यक्षे तादृशम्, नास्तीति यत् प्रत्यक्षम्, तदनर्थान्तरम्, नास्ति विषयतयाऽर्थान्तरम् अत्यन्ता-भावभिन्नं ध्वंसादिरूपं यत्र तत्, रक्तघटे श्यामो नास्तीतिप्रत्यक्षे भूतस्य श्यामरूपस्य विषयतया वर्त्तमानत्वेन तत्प्रत्यक्षं श्याम-ध्वंसविषयकम्, वायौ रूपं नास्तीति प्रत्यक्षञ्च न वायौ पूर्व्वोत्पन्नं

उ० हि जलावयविनि पृथिवीत्वं स्यात् उपलभ्येत नचोपल-भ्यते तस्मान्नास्तीतितर्कपुरस्कारोऽत्रापि द्रष्टव्यः। एवञ्च यद्वस्तु यत्र न कदाऽपि भविष्यति नच कदाचिद्भूतं तत्र वस्तुनस्तत्रात्यन्ताभावो मन्तव्यः। भूतभविष्यतोश्च तत्र प्रध्वंसप्रागभावालम्बन एव तत्राधिकरणे नास्तीति-प्रत्ययः। अतएवायमात्यन्तिकस्त्रैकालिक इत्यभिधीयते ॥ ९ ॥

ननु गेहे घटाभावो नात्यन्ताभावः कदाचित्तत्र घट-सत्त्वात्, नापि प्रागभावप्रध्वंसौ, तयोः समवायिकारण-मात्रवृत्तित्वात्, नाप्युत्पादविनाशशीलोऽत्यन्ताभाव एव, आत्यन्तिकस्योत्पादविनाशशीलत्वेति विरोधात्, नापि च-तुर्थ एवायं संसर्गाभावः, तस्य त्रैविध्यविभागव्याघातादि-त्यत आह।

---

वि० रूपं विषयीकरोति, तस्मात् तत्प्रत्ययं न ध्वंसविषयकं किन्त्वत्य-न्ताभावविषयकमेवेति, भूतपदं भविष्यतोऽप्युपलक्षकम्, तेन श्यामे रक्तं रूपं नास्तीति प्रागभावप्रत्ययस्यात्यन्ताभावाविषयक-त्वेऽपि न क्षतिः ॥ ९ ॥

ननु भूतलादौ यत्र पूर्व्वं घटोस्थितस्ततोऽपसारितस्तदानीं घटो नास्तीति प्रत्यक्षं न प्रागभावध्वंसाववगाहते तयोः समवा-यिकारणवृत्तित्वनियमेन भूतलादिदेशेऽसत्त्वात्, नाप्यत्यन्ताभा-वम्, तस्य नित्यत्वेन घटसत्त्वकालेऽपि तादृशप्रत्यक्षप्रसङ्गात्, तथाच तादृशप्रत्यक्षस्य कोविषय इत्याकाङ्क्षायामाह।

सू॰ नास्ति घटो गेहे इति सतोघटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥

---

उ॰ गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः, स च यदि कदाचिदपि न घटस्तदात्यन्ताभाव एव, भविष्यतः प्रागभावो भूतस्य प्रध्वंसाभावः । तर्हि घटसंसर्गो गेहे नास्तीति प्रतीत्या भवितव्यमिति चेत् प्रतीत्या भवितव्यमिति कोऽर्थः, यदि तद्विषयया प्रतीत्या भवितव्यमित्यापादनार्थस्तदेष्टापत्तिः, अथ तदुल्लेखिन्येति, तदा गेहे इत्यधिकरणोल्लेखस्यैव संसर्गोल्लेखपर्य्यवसानमाधारत्वस्यैव धर्म्मसम्बन्धाकारत्वात्, तत् किं घटस्तत्रास्त्येव, अस्त्येवेति कोऽर्थस्तत्र समवेतः संयुक्तोवा नाद्यः समवेतघटस्य तत्राभावात्, न द्वितीयः संयोगस्य निषेधात्, नन्वेवं घटादीनां केवलान्वयित्वप्रसङ्गः, तत् संयोगसमवायान्यतरस्यैव सर्व्वत्र निषेधादिति चेन्न तदुभयनिषेधस्यैव घटनिषेधात्मकत्वात्, तत् किं घटस्तत्सं-

---

वि॰ सतः पूर्व्वं तत्र वर्त्तमानस्य घटस्यैव गेहसंसर्गप्रतिषेधः गेहे संसर्गाभावः तद्विशेषोऽत्यन्ताभाव इति तु परमार्थः, नास्ति गेहे घट इति प्रत्यक्षविषय इति समुदितसूत्रार्थः, तथाच तादृशप्रत्यक्षे घटात्यन्ताभाव एव तत्तत्कालीनगेहाद्यात्मकेन स्वरूपसम्बन्धेन भासते, घटकाले तु तादृशसम्बन्धासत्त्वान्न तदत्यन्ताभावबुद्धिरितिभावः । केचित्तु नास्ति गेहे घट इति प्रत्यक्षस्य विषयोघटस्य गेहसंसर्गप्रतिषेधः गेहवृत्तित्वाभावः स च घटापसा-

उ॰ योगस्येत्येकं तत्त्वं, येन घटसंयोगनिषेधो घटनिषेधः स्यात्, तत् किं घटस्तत्संयोगसमवायावेकं तत्त्वं, येन तद्विधिरेव घटविधिः स्यात्, नहि तौ यत्र निषेध्येते तत्र घटान्वयो येन केवलान्वयित्वं तस्य स्यात्, तथाच यस्य योविधिस्तन्निषेध-एव तन्निषेध इति यद्वा घटस्य समवायितया गेहेऽत्यन्ता-भाव एव, स एव गेहे घटो नास्तीतिप्रतीतिविषयः, कपाले संयोगितयेव, एवं सति केवलान्वय्यत्यन्ताभावप्रतियोगि-तया घटोऽसन् स्यादिति चेत् भवेदेवं यदि संयोगित्वसम-वायित्वाभ्यां सर्व्वत्रासन् स्यादिति ॥ १० ॥

---

वि॰ रथाकालीनघटात्मकेन स्वरूपसम्बन्धेन घटेऽबाधित एवेति, नच घट इति प्रथमाऽनुपपत्तिरनुयोगिनि सप्तम्याः संसर्गाभावबोधे तन्त्रत्वादिति वाच्यं प्रातिपदिकार्थस्यात्यन्ताभावबोधस्थल एव अनुयोगिनि सप्तम्यपेक्षणादुक्तस्थले सप्तम्यर्थाभावस्य घटे भानात्, नचात्रास्तीति क्रियायाः कुत्रान्वयः, नञर्थे चेत् तदा घटौ न स्त-इत्यादौ द्विवचनाद्यनुपपत्तिः, घटे चेत् नञर्थस्य घटांशे विशेष्य-तावच्छेदकतया भानं न सम्भवति अन्यथा न घटः पटस्तिष्ठ-तीत्यादिप्रयोगस्यापि साधुत्वापत्तेरिति वाच्यं नञर्थप्रातिपदि-कार्थाभावस्य विशेष्यतावच्छेदकतया भानासम्भवेऽपि व्युत्पत्ति-वैचित्र्येण नञर्थस्य स्ववर्थाभावस्यास्तिक्रियाविशेष्यतावच्छेदकवि-धया भाने बाधकाभावात् । वस्तुतस्तु नास्ति गेहे घट इत्य-भिलापप्रयोजकत्वं तादृशप्रत्यक्षस्याबाधितमेव तादृशशब्दजन्य-बोधसमानाकारकत्वस्य तत्राप्रयोजकत्वादित्याहुः ॥ १० ॥

लौकिकसन्निकर्षजन्यं प्रत्यक्षं परीक्ष्यालौकिकयोगजसन्निकर्ष-

सू॰ आत्मन्यात्ममनसोः *संयोगविशेषादात्मप्रत्यक्षम्॥ ११॥

---

उ॰ तदेवं भावाभावविषयकं लौकिकप्रत्यक्षं निरूप्य योगिप्रत्यक्षं निरूपयितुं प्रकरणान्तरमारभते।

ज्ञानमुत्पद्यते इतिशेषः, द्विविधास्तावद्योगिनः समाहितान्तःकरणा ये युक्ता इत्यभिधीयन्ते, असमाहितान्तःकरणाश्च ये वियुक्ता इत्यभिधीयन्ते, तत्र युक्ताः साक्षात्कर्त्तव्ये वस्तुन्यादरेण मनोनिधाय निदिध्यासनवन्तः, तेषामात्मनि स्वात्मनि परात्मनि च ज्ञानमुत्पद्यते आत्मप्रत्यक्षमिति आत्मा प्रत्यक्षः साक्षात्कारविषयो यत्र ज्ञाने तत्तथा यद्यप्यस्मदादीनामपि कदाचिदात्मज्ञानमस्ति तथाप्यवि-

---

वि॰ जन्यं प्रत्यक्षं व्युत्पादयति।

आत्ममनसोः संयोगविशेषात् योगजधर्म्मसहकृतादात्ममनःसंयोगात्, आत्मनि बुद्ध्यारम्भे यत्ने सति "आत्मायत्नोद्दतिर्बुद्धिः" इतिकोषात्, बुद्ध्यारम्भयत्नजन्यायां चिन्तायां सत्यामितितु फलितार्थः, आत्मप्रत्यक्षं स्वात्मनः परात्मनाश्च प्रत्यक्षं, भवतीतिशेषः। अलौकिकसन्निकर्षस्तावत्त्रिविधः सामान्यलक्षणाज्ञानलक्षणायोगजधर्म्मभेदात्, तत्र योगजधर्म्मोयोगाभ्यासजनितो धर्म्मविशेषः श्रुतिपुराणादिप्रमाणकः, सोऽपि द्विविधः युक्तयुञ्जानरूपयोगिद्वैविध्यात्, तत्र योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धियुक्त इत्युच्यते अयमेव विशिष्टयोगवत्त्वा-

---

* सन्निकर्षविशेषादित्यपि क्वचित् पाठः।

सू॰ तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥१२॥

---

उ॰ व्यातिरक्ततत्वात् तदसत्कल्पमित्युक्तमात्ममनसोः सन्निकर्षविशेषादिति योगजधर्म्मानुग्रह आत्ममनसोः सन्निकर्षविशेषस्तस्मादित्यर्थः ॥ ११ ॥

तत् किमात्मन्येव युक्तानां ज्ञानं तत् कुतः सार्व्वज्ञ्यमित्यत आह ।

ज्ञानमुत्पद्यत इति प्रकरणायातम्, तथेति योगजधर्म्मानुगृहीतेनैव मनसा, द्रव्यान्तरेषु चतुर्व्वणुषु मनसि वायुदिक्कालाकाशेषु, द्रव्यपदेन तद्गतगुणकर्म्मसामान्यानां विशेषपदार्थस्य समवायस्य प्रत्यक्षगतस्यापि गुरुत्वस्थितिस्थापकादेरात्मगतस्यापि जीवनयोनियत्ननिर्व्विकल्पकभावनाधर्म्माधर्म्मादेः संग्रहः, सामग्र्या योगजधर्म्मोपग्रहस्य तुल्यत्वात् अन्यथा सार्व्वज्ञ्यमुक्तं न भवेत् ॥ १२ ॥

युक्तानां प्रत्यक्षं ज्ञानमभिधायेदानीं वियुक्तानामाह।

---

वि॰ वियुक्त इत्यप्युच्यते। युञ्जानो विषयव्यावृत्तमानसोध्यानसहकारान्निखिलपदार्थानां साक्षात्कर्त्ता, एतादृशयुञ्जानमभिप्रेत्यैवेदं सूत्रम् ॥ ११ ॥

ननु योगजधर्म्मैरात्ममात्रस्य साक्षात्कारोपगमे योगिनः सर्व्वज्ञत्वमनुपपन्नमत आह ।

उक्तयोगजधर्म्मसन्निकर्षान्नात्ममात्रे प्रत्यक्षं किन्तु द्रव्यान्तरेषु पृथिव्यादिष्वपि प्रत्यक्षं भवतीत्यर्थः ॥ १२ ॥

युञ्जानस्य प्रत्यक्षमुक्त्वा युक्तस्य तदाह ।

सू॰ असमाहितान्तःकरणा उपसंहृतसमाधयस्ते-
षाञ्च ॥ १३ ॥

उ॰ असमाहितान्तःकरणा इत्यस्यैव व्याख्यानमुपसंहृतसमाधय इति, यद्वा कथमसमाहितान्तःकरणा इत्यत आह उपसंहृतसमाधय इति उपसंहृतो दूरीकृतः समाधिर्निदिध्यासनात्मको यैस्ते तथा, ते हि समाधिप्रभावाद्धिकरणधर्माः अणिमाद्याः शरीरसिद्धी दूरश्रवणाद्यास्येन्द्रियसिद्धी-रान्नवन्तः समाधावप्यसंप्रत्ययमासादयन्तः "तावदेवास्य चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्यादिश्रुतिसमधिगतकृत्यान्तराभावाः भोगमात्रस्य कर्त्तव्यतामाकलय्य तेषु तेषु प्रदेशेषु द्वीपोपद्वीपादिषु तेन तेन जन्मना तुरङ्गमातङ्गविहङ्गभुजङ्गादिना यावदेव चिरं यावद्देवर्षिमानुषभावेन च पूर्व्वोपात्तान् कर्म्माशयानुपभुञ्जते तावत् प्रागेव निरपाया भूमिरित्याकलयन्तः सकलमर्थजातं योगजधर्म्मबलोपबृंहितेन्द्रियशक्तयोऽव्यवहितं विप्रकृष्टञ्च प्रत्यक्षीकुर्व्वन्ति ॥ १३ ॥

वि॰ असमाहितान्तःकरणाः असमाहितं समाधिरहितम् अन्तःकरणं येषां ते तथा, उपसंहृतः समापितः सफलीकृतः समाधिर्यैस्ते समाधेः फलं विविधाः सिद्धयस्ता येषामुत्पन्नास्तादृशाः ये युक्तास्तेषामपि आत्मनाम् अन्येषां अर्थानाञ्च प्रत्यक्षं भवतीति समुदितार्थः, युञ्जानस्य प्रत्यक्षे ध्यानापेक्षा, युक्तस्य प्रत्यक्षे तु ध्यानात्मकसमाध्यपेक्षा नास्तीति भावः ॥ १३ ॥

सू॰ तत्समवायात् कर्म्मगुणेषु ॥ १४ ॥

---

उ॰ ननु न तावत्तेषु मानसं ज्ञानं मनसोवहिरखातन्त्र्यात्, नापि वहिरिन्द्रियजन्यम्, तेषां सम्बद्धवर्त्तमानार्थग्राहित्वात् यथायोगं रूपोद्भवादिसापेक्षत्वात् आलोकादिसव्यपेक्षत्वाच्चेत्याशङ्क्य केषुचित् पदार्थेषु प्रत्यासत्तिमुपपादयन्नाह।

प्रत्यक्षज्ञानं जायते इतिशेषः। भौतिकानीन्द्रियाणि यदि सन्निकर्षमपेक्षन्ते तदा परमाण्वाकाशदिक्कालसमवेतेषु गुणसामान्येषु खमनःसंयोगिसमवायात् इतरद्रव्येषु च कायव्यूहोपभोगार्थोपगृहीतनानापण्डमनःसंयोगात् तत्संयुक्तसमवायात् तत्तद्द्रव्यगुणादिषु ज्ञानमुत्पद्यते, एतच्चोपपत्तिसौकर्य्यमनुरुध्योक्तम्, वस्तुतो वाह्येन्द्रियेषु मनसि च योगजएव धर्म्मः प्रत्यासत्तिस्तत एव सर्व्वानुपपत्तिशान्तेः, अगस्त्यसमुद्रपानं दण्डकारण्यनिर्म्माणञ्चात्र दृष्टान्तः ॥ १४ ॥

---

वि॰ ननु ज्यायां प्रत्यक्षसम्भवेऽपि सर्व्वज्ञत्वं योगिनोऽनुपपन्नमेव गुणादीनामज्ञानादत आह।

तस्य योगजधर्म्मसहकृतमनःसंयोगस्य, समवायात् युक्तयुञ्जानयोः कर्म्मसु गुणेषु च प्रत्यक्षमुत्पद्यते इत्यर्थः, अचिन्त्यो हि योगजधर्म्मप्रभावः, यद्बलेनागस्त्यमुनिः पारावारं पपौ, सौभरिश्च कायव्यूहं परिगृहीतवान्, वशिष्ठश्च दिलीपस्य सुरभिशापं ज्ञातवान्, तस्य योगजधर्म्मस्य पदार्थसार्थसाक्षात्कारसम्पादने

सू० आत्मसमवायादात्मगुणेषु ॥ १५ ॥

---

उ० तत् किं स्वकीयबुद्ध्यादिष्वपि मनसो द्रव्यान्तरसंयुक्तसमवाय एव प्रत्यासत्तिः, नेत्याह।

योगिनां प्रत्यक्षं ज्ञानमुत्पद्यते इति प्रकृतम्, आत्मसमवेतानान्तु बुद्ध्यादीनां संयुक्तसमवायादेव प्रत्यक्षं ज्ञानमुत्पद्यते ऽस्मदादीनामिवेति न तत्र सन्निकर्षान्तरापेक्षेत्यर्थः, तत्रेन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानं लौकिकप्रत्यक्षम्, आर्षजं वा, साक्षात्त्वयोगिज्ञानं प्रत्यक्षमिति लौकिकालौकिकसाधारणम् ॥ १५ ॥

इति श्रीशाङ्करे वैशेषिकसू*त्रोपस्कारे नवमाध्यायस्याद्यमाह्निकम् ॥ * ॥

---

वि० नासम्भावनीयमिति, कर्म्मगुणेत्युपलक्षणं सामान्यादिकमपि बोध्यम्, एवं सामान्यलक्षणाज्ञानलक्षणारूपालौकिकप्रत्यासत्तिजन्यं प्रत्यक्षमप्यूहनीयम् ॥ १४ ॥

तत् किं योगिनां लौकिकप्रत्यक्षं न भवतीत्यत आह।

आत्मसमवायात् मनःसंयुक्तात्मसमवायात् आत्मगुणेषु स्वात्मवृत्तिसुखादिगुणेषु योगिनां लौकिकमपि प्रत्यक्षं भवति तत्सामग्र्या वृत्तत्वादिति समुदितनिष्कर्षः ॥ १५ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ नवमाध्यायस्य प्रथममाह्निकम् ॥ * ॥

---

* सूत्रसंस्कारे इति क्वचित् पाठः।

सू॰ अस्येदं कार्य्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥

उ॰ तदेवं पूर्व्वाह्निके योगिप्रत्यक्षमयोगिप्रत्यक्षञ्च कारणतः स्वरूपतो लक्षणतश्च निरूपितम्, प्रमाणं द्विविधं प्रत्यक्षं लैङ्गिकञ्चेति यद्विभक्तं तत्र लैङ्गिकमिदानीं निरूपयितुमुपक्रमते।

ज्ञानमिति प्रकृतम्, लिङ्गाज्जातं लैङ्गिकं व्याप्तिविशिष्टः पक्षधर्म्मो लिङ्गम्, तत्र व्याप्तिरुक्ता, यस्मिन् साधयिषाविरोधिप्रमाणाभावो यत्र स तं प्रति पक्षः, तादृशं प्रमाणं साधकं बाधकञ्च, तदुभयाभाववतः पक्षत्वात्, नहि साधके बाधके वा प्रमाणे सति कस्यचित् संशयः सिषाधयिषा वा, अतएव सन्दिग्धसाध्यधर्म्मा धर्म्मी सिषाधयिषितसाध्यधर्म्मा धर्म्मी वा पक्ष इति प्राञ्चः, उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभावो यत्र स पक्ष इति

---

वि॰ इदानीमनुमितिरूपां बुद्धिं परीक्षितुमारभते।

लिङ्गेन व्याप्तिपक्षधर्म्मताविशिष्टेन जनितं ज्ञानं लैङ्गिकं प्रयोजकत्वं प्रयोज्यत्वं वा तृतीयार्थः, व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमिति तु फलितार्थः, नच परामर्शप्रत्यक्षमपि परामर्शजन्यमिति तत्रातिव्याप्तिः, वह्निसाध्यकपरामर्शोपादाने आलोकादिविधेयकानुमितावव्याप्तिश्चेति वाच्यं तादृशज्ञानवृत्तिप्रत्यक्षासमवेतजातिमत्त्वस्यानुमितिलक्षणत्वे तात्पर्य्यात्, स्मृतिवारणार्थं ज्ञाने जन्यान्तविशेषणम्, नच परामर्शजन्यस्मृत्यात्मकज्ञानमादाय तद्दोषतादवस्थ्यमिति वाच्यं व्याप्तिविशिष्टप-

उ॰ जीवनाथमिश्राः, सिषाधयिषाविरहसहकृतसाधकमाणा-भावो यत्र स पक्ष इति केचित्, एतन्मते बाधस्थलेऽपि पक्षता, तदेतदनुमानमयूखे द्रष्टव्यम्, तदेतस्य पक्षस्य धर्म्मो लिङ्गमित्युक्तं भवति, लिङ्गस्य दृष्टमनुमितं श्रुतं वा यदनुभवरूपं ज्ञानं जनयति तल्लैङ्गिकं तदुक्तम्,

"अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।

तदभावे तु नास्त्येव तल्लिङ्गमनुमापकम्" ॥ इति ॥

एतेन लिङ्गमेवानुमितिकरणं नतु तस्य परामर्शः तस्य निर्व्यापारत्वेनाकरणत्वात्, लिङ्गस्य तु स एव व्यापारः। यत्र धूमादेरतीतत्वमनागतत्वं वा तत्र कथमनुमितिरिति चेन्न साध्यस्याप्यतीतानागतत्वयोस्तत्रानुमानात्, तत्रैव प्रतिबन्धात् अतीतत्वमनागतत्वं वर्त्तमानत्वञ्च धूमादेर्यत्र न

---

वि॰ पक्षधर्म्मतानिश्चयत्वमात्रावच्छिन्नजनकतानिरूपितजन्यत्वस्य निवेशनीयत्वात, स्मृतिजनकतावच्छेदककोटौ उपेक्षान्यत्वस्याधिकस्य सत्त्वेन तादृशजनकतायास्तादृशनिश्चयत्वमात्रावच्छिन्नत्वाभावात्, नच तादृशजन्यत्वमपेक्ष्य स्मृत्यन्यत्वमेव लाघवान्निवेशयितुमुचितमिति वाच्यं यथासन्निवेशे वैयर्थ्याभावात् स्मृत्यन्यत्वघटितस्य तत्त्वान्तरत्वादिति यद्वा अन्यान्तं परिचायकं निवेशनन्तु यत्किञ्चिदनुमितियत्कलत्त्वाक्तित्वेनेति संक्षेपः। व्याप्तिः पूर्व्वमुक्ता, पक्षधर्म्मताच पक्षतावद्धर्म्मिवृत्तिता, पक्षताच प्राचांमते साध्यनिश्चयनिवर्त्त्यसंशयरूपा. तस्य विशेष्यतासम्बन्धेन पर्व्वतादौ सत्त्वम्, आचार्य्यमते सिषाधयिषा पक्षता, तस्याश्च विषयताविशेषसम्बन्धेन पक्षनिष्ठत्वम्, चिन्तामणिकृन्मते सि-

सू॰ निश्चितं तत्र कथमनुमितिरिति चेत्, न कथञ्चित्, तत्र साध्यस्यापि सन्देहात्, पूर्व्वापरदिग्भयोः सत्त्वनिश्चये मध्यदिगेतु सन्देहे कथमनुमितिरिति चेत् तद्दिगावच्छिन्नधूमादिना तद्दिगावच्छिन्नवह्न्यादेरनुमानात् तथैव व्याप्तेः कारणत्वावधारणात्, धूलीपटलात् कथं धूमभ्रमादनुमितिरिति चेत् व्याप्तत्वेन ज्ञातस्यैव लिङ्गत्वात् ज्ञानस्य च याथार्थ्यायाथार्थ्याभ्यामनुमितेस्तद्रूप्यात्, अन्यथा तवापि कथं तत्र परामर्शः करणं स्यात्, अतीन्द्रियलिङ्गस्थले परामर्शस्य तदभावतया कथं तद्व्यापारत्वमिति चेत् तत्सम्बन्धानिर्व्वाहकत्वरूपचैमिकसाधनतायास्तत्र व्यापारत्वघटकत्वात् अन्यथा समवायस्य श्रवणादेर्व्यापारत्वानुपपत्तेरिति, कार्य्यालिङ्गात् धूमालोकादेरम्याद्यनुमानं, कारणादपि यथा

---

वि॰ साध्यविषयाविरहविशिष्टसिद्ध्यभाव एव पक्षता, तस्य च स्वप्रतियोगिविशेष्यत्वसम्बन्धेन पर्व्वतादिवृत्तित्वम्, अनुमितिहेतुता तु पक्षताया आत्मनिष्ठप्रत्यासत्त्यैवेत्यवधेयम्, एतादृशपक्षतायास्तु धर्म्म्यंशे परिचायकतयैव निवेशो नतु विशेषणतयेति संक्षेपः। तदेतत् लैङ्गिकं ज्ञानं त्रिविधं पूर्व्ववत् शेषवत् सामान्यतोदृष्टञ्चेति, तत्र पूर्व्वं कारणं तद्वत् तल्लिङ्गकम्, शेषः कार्य्यं तद्वत् तल्लिङ्गकम्, सामान्यतोदृष्टं कार्य्यकारणभिन्नलिङ्गकमिति गौतमीयोक्तमेवाह अस्येदमिति, अस्य साध्यस्य इदं साधनं कार्य्यमिति व्यवहारो यत्र भवति अर्थात् कार्य्यलिङ्गकं यथा धूमादिलिङ्गेन वह्न्यादेरनुमानम्, अस्येदं कारणमिति कारणलिङ्गकं यथा मेघोन्नतिविशेषेण वृष्टेरनुमानम्, कार्य्यकारणभिन्नलिङ्गक-

उ० बधिरस्य भेरीदण्डसंयोगविशेषात् शब्दानुमानम्, यथा वा धार्म्मिकस्य यथाविधियागस्नानाद्यनुष्ठानाद्धर्म्मस्वर्गाद्यनुमानम्, यथाविधिकारीर्य्याद्यनुष्ठानाद्वा वर्षानुमानम्, पयःपूर्णनद्यादौ स्वन्यमानप्रवाहाद्वा जलनिःसरणानुमानम्, उपरि वृष्टिदर्शनाद्वा नदीवृद्ध्यनुमानम्, सचायं कार्य्यकारणभावलक्षण एकसम्बन्धः प्रकारद्वयेनोक्तः, संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम्, विरोधिनोविस्फूर्ज्जतोऽहेर्दर्शनाज्झाटाद्यन्तरितनकुलानुमानम्, समवायिना अन्योन्येन तत्सम्बद्धतेजोऽनुमानम्॥ १॥

नन्वव्यापकमिदं परिसङ्ख्यानम्, नहि चन्द्रोदयेन समुद्रजलवृद्धेः जलप्रसादेनागस्त्योदयस्य कुमुदप्रकाशेन चन्द्रोदयस्य चतुर्द्दशनक्षत्रोदयेनापरचतुर्द्दशनक्षत्रास्तमयस्य रसेन रूपस्य रूपविशेषेण वा रसविशेषस्यानुमानमनेन संगृह्यते इत्यत आह।

---

वि० रूपं यत् सामान्यतोदृष्टं तत् विविधं यथा लोहसंयोगिना मुषलविशेषलिङ्गेन उदूखलादौ संयोगेन लोहस्यानुमानम्, तथा नकुलविरोधिस्फूर्ज्जदहिविशेषदर्शने गुल्माद्यन्तरितनकुलस्यानुमानम् एवं वह्न्यनुयोगिकसमवायप्रतियोगिरूपवह्निसमवाय्युष्णस्पर्शेन भर्ज्जनकपालादौ वह्न्यादेरनुमानमिति॥ १॥

ननूक्तानुमानानां सामान्यतोदृष्टत्वे पृथिवीत्वादिना श्यत्वानुमानं पद्मस्य विकासेन दिनस्यानुमानं कुमुदविकासेन रजन्या अनुमानं रसादिना गुरुत्वाद्यनुमानञ्च कुत्रान्तर्भविष्यतीत्यत आह।

सू॰ अस्येदं कार्य्यकारणसम्बन्धश्चावयवाद्भवति ॥२॥

उ॰ अस्येदमित्येतावदेव प्रयोजकं भवतीति, अस्य साधनस्य धूमादेरिदं साध्यं वह्न्यादि यद्वाऽस्य व्यापकस्य वह्न्यादेरिदं व्याप्यं धूमादि, तथाच व्याप्यत्वग्रहमात्रं तन्त्रं नतु कार्य्यकारणभावादिरपि, ननु पूर्व्वसूत्रे तर्हि परिसङ्ख्यानमतन्त्रमत आह कार्य्यकारणसम्बन्ध इति, अनेन चोक्तं सम्बन्धान्तरमप्युपलक्षयति सम्बन्धपदे च विषयिलक्षणा तेन सम्बन्ध इति सम्बन्धोपन्यास इत्यर्थः। कुतस्तदुपन्यास इत्यत आह अवयवात् एकदेशात् उदाहरणमात्रात् ल्यब्लोपे पञ्चमी, तेनोदाहरणमनुरुध्य कार्य्यकारणभावादेः सम्बन्धस्योपन्यास इह दर्शने साङ्ख्यादिदर्शने च भवतीत्यर्थः। एवञ्च स्वाभाविकसम्बन्धश्चालिलं व्याप्यत्वम्, स्वाभाविकत्वञ्चानौपाधिकत्वम्, तच्च प्रत्यक्षाणां केषाञ्चित् साध्याव्यापकत्वनिश्चयात्, केषाञ्चित् साधनव्यापकत्वनिश्चयादेवानुपाधित्वं ज्ञेयम्, अतीन्द्रियाणाञ्च प्रमाणसिद्धानां केषाञ्चिदुभयव्यापकत्वम् उभयाव्यापकत्वं साधनमात्रव्यापकत्वं साध्यमात्राव्यापकत्वं वा, तत्राद्ये साधनव्यापकत्वात् द्वितीये साध्या-

वि॰ अस्य व्यापकस्य साध्यस्य इदं साधनं व्याप्यमिति ज्ञानाल्लैङ्गिकं भवति, कार्य्यकारणाभ्यां सहितः सम्बन्धः कार्य्यकारणसम्बन्धः सम्बन्धपदमपि मत्वर्थीयाच्प्रत्ययेन सम्बन्धिबोधकम्? अवयवात् प्रतीकात् लैङ्गिकविशेषात् लैङ्गिकविशेषमधिकृत्य लिङ्गं

उ॰ व्यापकत्वात्, चतुर्थेऽपि साधनव्यापकत्वादेवानुपाधित्वं निश्चेयम्, तृतीयेऽपि व्यापकस्य तन्मात्रव्यापकत्वानुपपत्तिरितरस्य तु कथं तन्मात्रव्यापकत्वमित्यत्र तर्कोऽनुसन्धेय इति तुल्ययोगक्षेमत्वादिनाऽनुपाधित्वमध्यवसेयम्। भविष्यति कश्चिदत्रोपाधिरितिशङ्कापिशाची सकलविधिनिषेधव्यवहारानास्कन्दतीत्यनादेयेत्यनौपाधिकत्वनिश्चयसम्भवात्, उपाधिलक्षणं व्याप्तिलक्षणस्योक्तम्। तत्रानुमानं द्विविधं स्वार्थं परार्थञ्च, तत्र स्वार्थं स्वयमेव व्याप्तिपक्षधर्मतयोरनुसन्धानात्, परार्थञ्च परोदीरितन्यायजन्यव्याप्तिपक्षधर्मताज्ञानात्, न्यायश्च तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम्, तदवयवाश्च पञ्च, तत्रावयवत्वं तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम्, तानि च वाक्यानि प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, तत्र प्रतिज्ञा उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं न्यायावयववाक्यम्, हेतुश्च प्रकृतसाधनगतपञ्चम्यन्तो न्यायावयवः, उदाहरणन्तु प्रकृतसाध्यसाधनाविनाभावप्रतिपादको न्यायावयवः, उपनयश्चा-

---

वि॰ भवतीति समुदितार्थः, तथाच कार्यं यत्र लिङ्गं तत् शेषवत्, कारणं यत्र लिङ्गं तत् पूर्ववत्, सम्बन्धि कार्यकारणभिन्नं साध्यस्य यथाकथञ्चित् सम्बन्धविशिष्टं यत्र लिङ्गं तत् सामान्यतोदृष्टमित्युक्तानुमानानां सामान्यतोदृष्ट एवान्तर्भाव इति भावः, येतु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेनानुमानस्य त्रै-

सू० एतेन शाब्दं व्याख्यातम् ॥ ३ ॥

---

उ० विनाभावविशिष्टस्य हेतोः पक्षवैशिष्ट्यप्रतिपादको न्यायावयवः, निगमनन्तु पक्षे प्रकृतसाध्यवैशिष्ट्यप्रतिपादकोन्यायावयवः। एवञ्च प्रवर्त्तते न्यायः, शब्दोऽनित्यः, कृतकत्वात्, यद् यत् कृतकं तदनित्यम्, अनित्यत्वव्याप्यकृतकत्ववांश्चायम्, तस्मादनित्यः। एतेषामेव प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नाया इत्यन्वर्था वैशेषिकाणां संज्ञाः, अत्रच वादजल्पवितण्डानां प्रवृत्तिप्रकारच्छलजातिनिग्रहस्थानलक्षणानि च वादिविनोदेऽन्वेष्टव्यानि ॥ २ ॥

प्रमाणान्तराणि लैङ्गिकेऽन्तर्भावयितुं प्रकरणान्तरमारभते।

शाब्दं शब्दकरणकं ज्ञानमिदमिति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनैव व्याख्यातं यथा व्याप्तिपक्षधर्म्मताप्रतिसन्धानापेक्षं लैङ्गिकं तथा शाब्दमपि, तथाहि एते पदार्थाः मिथः संसर्गवन्तः आका-

---

वि० विध्यं वर्णयन्ति तेत्विदं सूत्रद्वयमन्यथैव व्याचक्षते, तद्व्याख्यानन्तु ग्रन्थगौरवभयान्नोद्भावितमस्माभिः ॥ २ ॥

शाब्दबोधस्यानैवान्तर्भवतीत्याह।

एतेन लैङ्गिकज्ञानकथनेन शाब्दं शब्दज्ञानजन्यं ज्ञानमपि व्याख्यातं कथितमित्यर्थः नैयायिकप्रभृतिभिरन्वयबोधनामकं प्रत्यक्षानुमितिभिन्नमनुभवरूपं ज्ञानं मन्यते, वैशेषिकमतेतु न

उ० ङ्क्षादिमद्भिः स्मारितत्वात् गामभ्याजेति पदार्थसार्थवत्, तच्चहि आकाङ्क्षादिमत्पदकदम्बस्मारितत्वं पदार्थानां मिथः-संसर्गवत्त्वव्याप्यं गृहीत्वैव संसर्गवत्त्वमनुमिमीते किं कल्पनीयप्रमाणभावेन शब्देन, ननु नदीतीरे पञ्च फलानि सन्तीत्यनाप्तवाक्ये व्यभिचारान्नेदमनुमानमिति चेन्न आप्तोक्तत्वेनापि विशेषणात्, आप्तत्वं हि प्रकृतवाक्यार्थगोचरयथार्थवाक्यार्थज्ञानवत्त्वं नत्वप्रतारकत्वमात्रं तच्च वाक्यार्थप्रतीतेः पूर्व्वं दुर्ग्रहमिति चेन्न शब्दप्रामाण्यवादिभिरपि व्यभिचारिशब्दव्यावर्त्तकस्याप्तोक्तत्वस्य ग्राह्यत्वेनाभिमतत्वात्, तेषां प्रामाण्यग्रहणार्थं तदपेक्षा शाब्दन्तु ज्ञानं तद्ग्रहमन्तरेणाप्युपपद्यते तवतु यादृशं लिङ्गं तादृशग्रहणमावश्यकं व्याप्यत्वाप्तोक्तत्वविशिष्टमिति चेन्न अयमत्राभ्रान्तइति सामान्यतो ग्रहणसम्भवात्, नन्वत्रेति प्रकृतसंसर्गे इत्येव पर्य्यवस्यति तथा च पूर्व्वमशक्यमेव तद्ग्रहणमिति चेन्न प्रकरणसमभिव्यवहारादिमाहात्म्यात् सामान्यत आप्तत्वनिश्चयसम्भवेन लिङ्गनिश्चयसम्भवात्, कदाचित्तत्र विसंवादेऽपि वाष्पादौ धूमधर्म्मेणेवानुमानप्रवृत्तेः। नन्वेते पदार्थाः

---

वि० तदङ्गीकारः, पदज्ञानस्थले पदार्थसंसर्गस्यानुमितिरेव भवति, तथाहि गौरस्तीतिवाक्यश्रवणान्तरं गौरस्तितावान् सधर्म्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत्, अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वाद्वा चक्षुर्वदित्यनुमानमेव नतु शब्दजन्यो विलक्षणो बोधः, पदानामेकवाक्यतापन्नत्वरूपसम-

उ० संसृष्टा एवेति वा साध्यम्, सम्भावितसंसर्गा इति वा, नाद्यः अनाप्तोक्ते व्यभिचारात्, न द्वितीयः योग्यतामात्रसिद्धावपि संसर्गानिश्चयान्निष्कम्पप्रवृत्त्यनुपपत्तेः, योग्यतायाश्च पूर्व्वमेव हेतुविशेषणत्वेन ज्ञातत्वात् किमनुमानेनेति चेन्न नियमस्यैव साध्यत्वात् आप्तोक्तत्वेन विशेषणाच्च न व्यभिचार इत्युक्तत्वात्, नन्वाकाङ्क्षा श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः स च स्वरूपसन्नेव हेतुस्तज्ज्ञाने च संसर्गज्ञानस्य पूर्व्वमेव भावादनुमानवैयर्थ्यमिति चेन्न नहि संसर्गावगमप्रागभावमात्रमाकाङ्क्षां ब्रूमः, किं तर्हि स्मारिततदाक्षिप्ताविनाभावविशिष्टम्, तथा च विशेषणांशज्ञानादेवाकाङ्क्षाया ज्ञानात्, तर्हि तावदेवाकाङ्क्षाऽस्त्विति चेन्न विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्रापि नदीकच्छयोरविनाभावसत्त्वेनान्वयबोधापत्तेः नीलमुत्पलमित्यत्र नीलोत्पलयोरविनाभावाभावेऽपि तदाक्षिप्तयो र्द्रव्यगुणयोरविनाभावसम्भवात्, यद्वा पदस्मारितगोचरा जिज्ञासैवाकाङ्क्षा अभिधानापर्य्यवसानं वा तथापि तज्ज्ञानमावश्यकं ज्ञायमानकारणे ज्ञानोपयुक्तव्यभिचारिवैलक्षण्यात्

---

वि० भिथ्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्व्वं तस्यावश्यकत्वात्, नच विनष्टे भाविनि वा घटचक्षुरादौ व्यभिचारः, स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्करत्वात् एकविधव्यभिचारग्रहसत्त्वेऽपि अन्यविधव्याप्तिनिश्चयस्य सम्भवाच्च समानप्रकारकस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात्

उ° व्याप्तिवत्, अत एवानन्वयनिश्चयविरहो वा, बाधकप्रमाणाभावो वा, सजातीये दर्शनं वा, इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावाप्रतियोगित्वप्रमाविशेष्यत्वं वा योग्यताऽस्तु, तज्ज्ञानमावश्यकम्, आसत्तेरप्यव्यवधानेन स्मरणरूपाया ज्ञानं तन्त्रम्, संसर्गे च संसृज्यमानविशेषादेव विशेष इति नानभिमतविशेषसिद्धिः। यद्वा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्व्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बत्वात् गामभ्याजेतिपदकदम्बवदित्यनुमानात् ज्ञानावच्छेदकतयाऽभिमतविशेषसिद्धिः। यत्तु एतानि पदानि स्मारितार्थसंसर्गवन्तीति साध्यम्, तत् पदानां पदार्थसंसर्गवत्त्वं बाधितमित्युपेक्षणीयम्, नच लिङ्गतया संसर्गज्ञापकत्वमेव पदानां संसर्गवत्त्वम्, तस्यानुमानात् पूर्व्वमसिद्धत्वेन व्याप्तेरग्रहात्। केचिच्चेष्टाप्रमाणान्तरमिति वदन्ति, तन्नोच्यते चेष्टा द्विविधा कृतसमयाऽकृतसमया च, तत्र कृतसमया अभिप्रायस्थं शब्दं स्मारयति नतु संसर्गप्रमामपि जनयति लिपिवत्, स्मृत्यारूढः शब्द एव तत्र प्रमाणं शब्दस्य च लिङ्गत्वमुक्तं नच शब्दस्मरणं चेष्टाया अवान्तरव्यापारः,

---

वि° अथवा गौःपदमस्तित्ववद्गोगोचरज्ञानपूर्व्वकम् अस्तिपदसाकाङ्क्षगौःपदत्वात् यन्नैवं तन्नैवं यथाकाशमित्येवं पदपक्षकानुमानमिति, यद्वा सामान्यत एवानुमानं तथाहि एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षादिमत्पदस्मारितत्वाद्दण्डेन गामभ्याजेति पदार्थसार्थवत, किं वा एतानि पदानि स्मारितपदार्थसंस-

उ॰ चेष्टामन्तरेणापि शब्दादर्थप्रत्ययात् व्यापारत्वे तु चेष्टा-नैयत्यापत्तेः। नन्वेवं कथमेडमूकस्य चेष्टाधीनो व्यवहारस्तस्य तत्र समयग्रहाभावादिति चेन्न तस्य चेष्टातः कथमर्थेऽपि संप्रत्यय इति चिन्तनीयत्वात् तस्यार्थेऽपि सङ्गतिग्रहाभा-वात्, व्यवहारस्तु तस्याविनाभावग्रहात् करितुरगयोरिव कशाङ्कुशाभिघातात्तत्तद्व्यवहारपाटवोपपत्तेः। अकृतस-मयातु या कृत्यान्वयिनी, सा प्रयोजकाभिप्रायं स्मारयन्ती प्रयोज्यं प्रवर्त्तयति, नतु कुत्रचित्प्रमां जनयति, यथा शङ्खध्वनौ त्वयागन्तव्यमिति श्रुतशङ्खध्वनिः प्रतिष्ठते, तथा यदा मया तर्ज्जन्यूर्द्धीक्रियते तदा त्वयाऽसौ ताडनीय इति तदा ताडयति,नतु किञ्चित् प्रमिणोति। शब्दान्वयिनी त्व-कृतसमया यथा दशानामङ्गुलीनामूर्द्धकरणेन दशसङ्ख्या-मुद्राणां पुराणानां वा त्वया ज्ञातव्येतिकारकप्रधाना, हस्ताकुञ्चनदर्शनात्त्वया ममागन्तव्यमिति क्रियाप्रधाना, तथाचानया चेष्टया पदार्था एव स्वतन्त्राः परं स्मार्य्यन्ते नतु तेषां परस्परमन्वयोऽपि बोध्यते, तद्बोधककर्तृकर्म्मादिवि-

---

वि॰ शंसानपूर्व्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् दण्डेन गामभ्याजेति पदकदम्बवदित्येवानुमानम्, नच व्याप्तिज्ञानविरहस्थले कथं तादृ-शानुमितिरिति वाच्यं तत्र विशिष्टबोधस्यानङ्गीकारात् तावत्-पदार्थस्मृतितः परस्परं संसर्गावगाह्यलौकिकमानसप्रत्यक्षा-त्मकविशिष्टबोधसम्भवाच। एतेन चेष्टाऽपि व्याख्यातेति संक्षेपः। ॥ २ ॥

सू० हेतुरपदेशोलिङ्गं प्रमाणं करणमित्यनर्थान्त-
रम् ॥ ४ ॥

---

उ० भक्तिवत् प्रकृतेचेष्टैकदेशानां नियतानामभावात्, तर्हि संसर्गबोधमन्तरेण चेष्टातः कथं प्रवृत्तिनिवृत्ती इति चेत् संशयप्रतिभयोरन्यतरस्मादितिम्टष्याण, तस्मान्न चेष्टाऽपि प्रमाणमिति ॥ ३ ॥

नतु शब्दः कथं लिङ्गं शब्दस्यापदेशत्वभावत्वेन लिङ्गभिन्नत्वादित्याशङ्क्याह ।

अपदिश्यते कथ्यतेऽनेनार्थ इत्यपदेशः शब्दः, स च हेतुलिङ्गपर्य्याय एव, प्रमाणमिति लिङ्गविधया प्रमाकरणमित्यर्थः, एवं करणशब्दोऽपि लैङ्गिकज्ञानकरणे लिङ्ग एव वर्त्तते, द्वयी हि करणगतिः, किञ्चित् सन्निकर्षाधीनप्रवृत्ति, किञ्चिचाविनाभावबलप्रवृत्ति, शब्दस्य तु अर्थेन न सन्निकर्षोनाप्यविनाभाव इति कथमर्थं गमयेत्, सङ्केताद्गमयतीति चेत् सङ्केतोहि पदार्थे नतु तत्संसर्गे,

---

वि० नतु शब्दस्यापदेशपदवाच्यस्य कथं लिङ्गत्वमपदेशस्यानुमिजनकत्वस्योक्तत्वादिति तदाशङ्कां निरस्यति।

अपदेशशब्दो यद्यपि परिभाषया हेत्वाभासे वर्त्तते तथापि अपदिश्यते कथ्यतेऽनेनेतिव्युत्पत्त्या शब्देऽपि स वर्त्तते, शब्दश्च लिङ्गविधया लैङ्गिकज्ञान एवहेतुरिति, अनुमितिप्रमितिकरणश्च शब्दोऽपि, एवं लिङ्गविधया करणत्वमपि शब्दे वर्त्तते, तथाच

सू॰ अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥

उ॰ तथापि सङ्केत इति चेन्न तस्यानेकविधत्वेन सङ्केतविषयभावानुपपत्तेः, पदार्थसङ्केतबलादेव वाक्यार्थोऽपि भासते इति चेन्न अन्वयसङ्केतेनान्योपस्थितावतिप्रसङ्गात्, शब्दस्मारितसंसर्गत्वेन नियम इति चेत् तथा चैतन्नियमबलेनानुमानस्यैव सम्भावधरत्वात्, सङ्केतस्यापि इच्छामात्रत्वेनातिप्रसक्तत्वात्, ईश्वरेच्छा नातिप्रसक्तेति चेन्न तदिच्छामन्तरेणापि गङ्गादिपदात्तीराद्युपस्थितेरित्यलं नैयायिकेषु धृष्टतयेति॥ ४ ॥

उपमानादीनामपि पराभिमतानां अविनाभावबलप्रवृत्तिकानां लैङ्गिक एवान्तर्भाव इति प्रतिपादयितुमाह।

उपमानार्थापत्तिसम्भवाभावानामितिशेषः। अस्य व्यापकस्य इदं व्याप्यमित्याकारा या बुद्धिः सा अनकत्वेनापेक्षिता येषां ते तदपेक्षितास्तस्य भावस्तदपेक्षितत्वं तस्मादित्यर्थः आहिताग्निपाठात् क्तान्तेन बहुव्रीहिः, तारकादिपाठा-

विं॰ हेतुरपदेशोलिङ्गं प्रमाणं करणमित्यनर्थान्तरं एते शब्दा एकस्य लिङ्गस्य बोधकाः नतु हेत्वाभासमात्रबोधकाः हेत्वाभासस्यानगुमापकत्वेऽपि शब्दस्यानुमापकत्वे न काचिदनुपपत्तिरित्याशङ्कितु र्भ्रान्तिर्भवतीतिभावः ॥ ४ ॥

उपमानादेरप्यनुमान एवान्तर्भाव इति प्रतिपादयति।

अस्य व्यापकस्य साध्यस्य इदं साधनं व्याप्यमिति बुद्धेर्याऽपेक्षा सा जाता येषां तस्मात्, व्याप्तिज्ञानसापेक्षत्वादिति तु फलि-

उ० द्वितीया, तत्रोपमानं तावदनुमानमेव शब्दद्वारा, तथाहि गोसदृशो गवय इति वाक्यन्तावत् आरण्यकेन कीदृक् गवय इति नागरिकजिज्ञासायामभिधीयते तत्र यो गोसदृशः स गवयशब्दवाच्य इतिसामानाधिकरण्यबलात् अतिदेशवाक्यश्रवणानन्तरमेव परिच्छिनत्ति, वनं गतस्तु तादृशं पिण्डमुपलभ्यायमसौ गवयशब्दवाच्य इति प्रतिसन्धत्ते, अतिदेशवाक्यश्रवणसमये गवयत्वं प्रवृत्तिनिमित्तं न ज्ञातमतः कथं संज्ञापरिच्छेद इति चेत् लक्षणया तत्प्रतीतिसम्भवात्, गोसदृशो गवय इति वाक्ये ऽन्वयानुपपत्तिविरहात् कथं लक्षणेति चेत् तात्पर्य्यानुपपत्तेः सत्त्वात्, नह्यव्युत्पितसुं प्रति गोसादृश्यस्य सखण्डस्य प्रवृत्तिनिमित्तत्वेनोपदर्शनमुचितं तस्मादखण्डजातिविशेषे तात्पर्य्यमस्येति लक्षणासम्भवात्, यद्वा गवयशब्दोगवयवाचकः असति वृत्त्यन्तरे शिष्टैस्तत्र प्रयुज्यमानत्वात् असति वृ-

---

वि० तार्थः, उपमानार्थापत्तिसम्भवैतिह्यस्यणीयबुद्धीनां लैङ्गिकत्वमिति शेषः। तत्रोपमानजन्या बुद्धिस्तावत् ग्रामीणस्य प्राथमिकगवयचक्षुःसंयोगानन्तरमयं गोसदृश इति प्रात्यक्षिकं ज्ञानं ततो गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं तत एतज्जातीयो गवयपदवाच्य इति या बुद्धिरुदेति सोपमितिरिति न्यायमतानुसारिणः, काणादमते तु साऽनुमितिरेव गोसादृश्यविशिष्टेन गवयपदवाच्यत्वव्याप्यतया गृहीतेन गवयपदवाच्यत्वस्यानुमितेरेव तदानीं जननात्, व्यभिचारिविरहदशायाञ्च न भवत्येव गवयपदवाच्यत्वधीरिति। अथवा गवयप्रत्यक्षानन्तरं गवयपदं गवय-

उ० स्थलान्तरे यः शब्दोयत्र शिष्टैः प्रयुज्यते स तस्य वाचको यथा गोशब्दोगोरित्यनुमानादेव गवयसंज्ञां परिच्छिनत्ति, तर्कश्च यस्तस्योपमानसहकारीवाच्यः स वरमनुमाने क्लृप्तप्रमाण-भावेऽस्तु किं कल्पनीयप्रमाणभावेनोपमानेनेति, अनुमान-मयूखे विस्तरोऽवान्वेष्टव्यः। अर्थापत्तिरप्यनुमानमेव तथा-हि दृष्टार्थापत्तिस्तावज्जीवतश्चैत्रस्य गृहासत्त्वेन दृढतर-प्रमाणावधृतेन वहिः सत्त्वं कल्पयति, तत्रोपपाद्योपपादकयो र्व्याप्यव्यापकभावावधारणाधीनैव वहिःसत्त्वप्रतीतिः, भव-ति हि जीवतोगृहासत्त्वं वहिःसत्त्वेन सहचरितं, वहिःसत्त्वं विना जीवतो गृहासत्त्वमनुपपन्नमिति वा ज्ञानम्, तत्राद्ये-ऽन्वयव्याप्तिरेवान्त्ये तु व्यतिरेकव्याप्तेरेव ग्रह इति,व्याप्तिरस्ति न तस्य ग्रहणमिहोपयुज्यत इति चेत् व्याप्तिग्रहमन्तरे-

---

वि० त्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्, यद्वा गवयपदं सप्रवृत्ति-निमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्म्मताबलाद्गवयत्व-प्रवृत्तिनिमित्तकत्वं भासते इति। मीमांसका अर्थापत्तिं प्रमाणान्तरं मन्यन्ते तथाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनोगृहासत्त्वञ्च प्रत्यक्षादवगतं। तत्र शतवर्षजीवित्वान्यथानुपपत्त्या वहिःसत्त्वं कल्प्यते, तदनुमानेन गतार्थत्वान्नेष्यते, तथाहि जीवित्वस्य वहिःसत्त्वगृहसत्त्वान्यतर-व्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधात् वहिःसत्त्वमनुमितौ भासते, एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वागमाद्भोजनं सिद्ध्यत् दिवाभो-

उ० सार्थापत्त्याभासानवकाशात्, स्वरूपसत्या व्याप्त्या वस्तुतोऽय- दुपपादकं तस्यैव कल्पना स्यादिति दिक्। संशयकरणि- काया विरोधकरणिकायाश्चानुमानान्तर्भाव ऊहनीयः। विरोधस्यापि सहानवस्थाननियमलक्षणस्य व्याप्तिघटि- तत्वात्। श्रुतार्थापत्तिरप्यनुमितानुमानं पीनोदेवदत्तो दिवा न भुङ्क्ते इत्यनेन वाक्येन पीनत्वमनुमितं तेन च पीन- त्वेन रात्रिभोजनानुमानम्, देवदत्तो रात्रौ भुङ्क्ते दिवाऽभो- जित्वे सति पीनत्वान्मतवदिति। सम्भवोऽप्यनुमानमेव, तदु- दाहरणं हि सम्भवति खार्य्यां द्रोणः सम्भवति द्रोणे आढ- कम् सम्भवति सहस्रे शतमित्यादि, तत्रेयं खारी द्रोणवती तद्घटितत्वात् यद्येन घटितं तत्तेन तद्वत् यथाऽवयववान् घटः, एवमन्यदप्यूह्यम्। यत्तु सम्भवति ब्राह्मणे विद्या,

---

वि० अनवाधे रात्रिभोजनं सिध्यति। एवं सम्भवैतिह्ययोरपि प्रमा- णान्तरत्वं मन्यन्ते पौराणिकाः, तथाहि सम्भवो भूयःसहचारा- धीनज्ञानं यथा सम्भवति ब्राह्मणे विद्या सम्भवति सहस्रे शत- मत्र च व्याप्तिर्नापेक्षितेति तेषामाशयः, एवमैतिह्यमिति होच- रित्यनेन प्रकारेण यदुच्यते, तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यं, यथा वटेवटे यक्ष इत्यादि, तस्याप्तोक्तत्वानिश्चयान्न शब्दे- ऽन्तर्भाव इति पौराणिकानामभिसन्धिः, तदेतन्मतं न समीची- नम्, ऐतिह्यस्य शब्दरूपतयाऽनुमानएवान्तर्भावात्, सम्भवोऽपि व्याप्तिसापेक्षोऽनुमान एवान्तर्भवति, तन्निरपेक्षस्तु प्रमाणमेव न, तदुक्तं गौतमीये "शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्ति-

सम्भवति क्षत्रिये शौर्य्यमित्यादि, तत्प्रमाणमेव न भवति अनिश्चायकत्वात्। अभावोऽपि न मानान्तरं कार्य्येण कारणानुमानवत् कार्य्याभावेन कारणाभावानुमानस्य व्याप्तिमूलकत्वेनानुमान एवान्तर्भावात्। भट्टमतन्तु भूतलादावभावग्राहकं प्रमाणमनुपलब्ध्याख्यं, तत् क्वचित् प्रत्यक्षे क्वचिच्चानुमानेऽन्तर्भूतं चक्षुरादिनैवाभावग्रहात्, नचेन्द्रियमधिकरणग्रह एवोपक्षीणम्, अभावग्रहपर्य्यन्तं तद्व्यापारसत्त्वात्। ऐतिह्यमविज्ञातप्रवक्तृकं प्रवादपारम्पर्य्यम्, इतिहेतिनिपातसमुदायः पुरावृत्ते वर्त्तते, तस्य भाव ऐतिह्यं, तद् यदि वाधितार्थं न भवति तदा शब्दान्तर्निवेशादनुमानम्, यदिह वटे यक्षोमधूकतरौ गौरीत्यादि तद् यद्याप्तोक्तं तदा पूर्व्ववत्, नाप्तोक्तञ्चेत्तदा न प्रमाणम्, तदेवं प्रत्यक्षमनुमानञ्चेति सिद्धं द्वयमेव प्रमाणमिति ॥ ५ ॥

लैङ्गिकं व्याख्याय इदानीं प्रकरणान्तरमारभते।

---

सम्भवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः” इति, भट्टमते वेदान्तमते चानुपलब्धेरपि प्रमाणान्तरत्वमस्ति तयाचाभावग्रहो भवतीति, तन्मतमपि न मनोरमम्, अनुपलब्धिसत्त्वे इन्द्रियसम्बद्धविशेषणताप्रत्यासत्त्या प्रत्यक्षमेव भवतीति तत्र चानुपलब्धेः कारणत्वं न विप्रतिपद्यामहे प्रमाणान्तरत्वन्तु तस्या न युक्तिपदवीं स्पृशतीति संक्षेपः ॥ ५ ॥

द्विविधामनुभूतिरूपां बुद्धिं परीक्ष्य स्मृतिरूपां बुद्धिं परीक्षितुमारभते।

सू० आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥

उ० उत्पद्यत इतिशेषः, संयोगविशेषः प्रणिधानादिसन्निधानम्, एतस्मादसमवायिकारणादात्मनि समवायिनि स्मृति र्विद्याविशेष उत्पद्यते, निमित्तकारणमाह संस्कारादिति चकारेण व्यापारी पूर्व्वानुभवः समुच्चीयते, अनुभवयाथार्थ्यायाथार्थ्यमियमनुविधत्ते, रज्जुं भुजङ्गतयोपलभ्य पलायितस्य तथैव स्मृतेः, नच सततं स्मृतिप्रसङ्गः, संस्कारोद्बोधाधीनत्वात्, तदुक्तं प्रशस्तदेवपादैः "लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद्दृष्टश्रुतानुभूतेषु शेषानुव्यवसायस्मरणेच्छाद्वेषहेतुरतीतविषया स्मृतिः" इति। आर्षं ज्ञानं सूत्रकृता पृथङ्न लक्षितं, योगिप्रत्यक्षान्तर्भावितं, पदार्थप्रदेशाख्ये तु प्रकरणे तदुक्तं तद्यथा "आम्नायविधातॄणामृषीणामतीतानागतवर्त्तमानेष्वतीन्द्रियेष्वर्थेषु धर्म्मादिषु ग्रन्थोपनिबद्धेषु वा लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद्धर्म्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम्" इति तच्च कदा-

वि० आत्ममनसोः संयोगविशेषात् सुसूर्षादिसहितादात्ममनःसंयोगात्, संस्कारात् समानाकारकात् भावनाख्यात्, चकारादुद्बोधकाच्च स्मृति र्भवति तत्र च उपेक्षानात्मकनिश्चयः कारणं, संस्कारोव्यापारः, उद्बोधकास्तत् सहकारिणः, आत्ममनः-

सू॰ तथा स्वप्नः ॥ ७ ॥

उ॰ पिण्डीकिकानामपि भवति यथा कन्यका वदति श्वो मे भ्राता गन्तेति हृदयं मे कथयतीति ॥ ६ ॥

तदेवं चतुर्व्विधां विद्यां व्युत्पाद्य इदानीमविद्यां व्युत्पादयितुमर्हति, तत्र संशयविपर्य्ययौ प्रसङ्गात् पूर्व्वमेव निरूपितौ, स्वप्नं निरूपयितुमाह।

यथात्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः। उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेण यदनुभवनं मानसम्, तत् स्वप्नज्ञानम्, तच्च त्रिविधं किञ्चित् संस्कारपाटवात् कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्ज्जुनीयं

वि॰ संयोगोऽसमवायिकारणं सुसूक्ष्मालपप्रणिधानादिकं निमित्तकारणमित्यर्थः ॥ ६ ॥

स्मृतौ यथा संस्कारः कारणं तथा स्वप्नसंज्ञकमानसज्ञानेऽपीत्याह।

तथा आत्ममनःसंयोगविशेषात् पूर्व्वानुभवजनितसंस्काराच्च स्वप्नोमानसज्ञानविशेषो भवति, अत्र संयोगे विशेषोमेध्यामन ; संयोगात्मकदोषविशिष्टत्वम् अतएव तदानीं भ्रम एव भवति, पूर्व्वानुभवश्च ऐहिकोजन्मान्तरीयो वा, नच नद्यादे र्दमयन्त्यादिदर्शनमुष्ट्रादेरनिवद्धादिदर्शनं पुराणादिप्रसिद्धं कथं सङ्गच्छते तज्जन्मन्यनुभवात् जन्मान्तरे च विषयस्याभाततेना-

उ० यद्वृत्तमिदमित्याकारम्, किञ्चिद्धातूनां वातपित्तश्लेष्मणां दोषात्, तत्र वातदोषादाकाशगमन-वसुन्धरापर्य्यटन-व्याघ्रादिभयपलायनादीनि पश्यति, पित्तोपचयदोषमहिम्ना वह्निप्रवेश-वह्निज्वालालिङ्गन-कनकपर्व्वत-विद्युल्लताविस्फुरद्दिग्दाहादिकं पश्यति, श्लेष्मदोषप्राबल्यात्तु समुद्रसन्तरणनदीमज्जन-धारासारवर्षण-रजतपर्व्वतादि पश्यति, अदृष्टवशादपि तज्जन्मानुभूतेषु जन्मान्तरानुभूते वा निद्रोपप्लुतान्तःकरणस्य यज्ज्ञानमुत्पद्यते तत्र शुभावेदकं धर्मात् गजारोहण-पर्व्वतारोहण-छत्रलाभ-पायसभक्षण-राजसन्दर्शनादिविषयकम्, अधर्मात्तु तैलाभ्यञ्जनान्धकूपपतनोष्ट्रारोहण-पङ्कमज्जन-स्वविवाहदर्शनादिविषयकं स्वप्नज्ञानमुत्पद्यते त्रयाणां मिलितानामेवात्र कारणत्वं गुणप्रधानभावमाश्रित्यायं विभागो द्रष्टव्यः ॥ ७ ॥

ननु यज्ज्ञानं स्वप्नमध्ये स्वप्नज्ञानानुभूतस्यैवार्थस्य स-

---

वि० शुभवासम्भवाच्चेति वाच्यं संसारस्यानादितया जन्मान्तरानुभूततत्तद्विषयसंस्कारेण तत्तद्विषयस्वप्नसम्भवात्, न च "अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्ज्जनदर्शनातिथिम्" इति श्रीहर्षवाक्यस्यासङ्गतिरिति वाच्यं तत्रादृष्टपदस्य तज्जन्मादृष्टार्थकत्वात्, तत्र किञ्चित् स्वप्नज्ञानं वातदोषाधीनमाकाशगमनादिविषयकम्, किञ्चिच्च पित्तदोषाधीनं विद्युद्दर्शनादिविषयकम्, किञ्चित्तु श्लेष्मदोषाधीनं नदीमज्जनादिविषयकम्, तत्र कानिचिज्ज्ञानानि शुभसूचकानि, कानिचिच्चाशुभसूचकानि तदुक्तम्,

सू॰ स्वप्नान्तिकम् ॥ ८ ॥

---

उ॰ तिरूपं जायते तत्र स्वप्नत्वं न वर्त्तते स्वप्नस्यानुभवरूपत्वात् तथाच कस्मात् कारणात्तदुत्पत्तिरित्यत आह।

तथेति पूर्व्वसूत्रादनुवर्त्तते तेनात्ममनसोः संयोगविशेषात् संस्काराच्च यथा स्वप्नस्तथा स्वप्नान्तिकमपीत्यर्थः। एतावानेव विशेषो यत् स्वप्नज्ञानं पूर्व्वानुभवजनितात् संस्कारात्, स्वप्नान्तिकन्तु तत्कालोत्पन्नानुभवजनितसंस्कारादेव, तदुक्तं प्रशस्तदेवाचार्य्यैः "अतीतज्ञानप्रत्यवेक्षणात् स्मृतिरेव" इति। उक्तञ्च वृत्तिकारैः "अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम्" इति।

---

वि॰ "आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम्।
आरुह्य नौकां प्रविशेच्च वीणां भुक्त्वा रुदित्वा ध्रुवमर्थलाभः"।

इति,

"शुक्लाम्बरधरा नारी शुक्लगन्धानुलेपना।
उपगूहति यं स्वप्ने तस्य लक्ष्मीर्न संशयः"।

इत्यादि च, अत्रच मानसं ज्ञानं ज्ञानलक्षणरूपालौकिकसन्निकर्षाद्भवति स्मरणञ्च संस्कारादिति विशेषः ॥ ७ ॥

स्वप्नान्तिकसंज्ञकेऽपि ज्ञाने एतदेव कारणमित्याह।

तथेत्यस्य पूर्व्वसूत्रस्थस्याचानुषङ्गो बोध्यः। तथाच स्वप्नज्ञानं यथात्ममनःसंयोगविशेषसंस्कारोभयजन्यं तथा स्वप्नान्तिकाख्यं ज्ञानमपीत्यर्थः। इदञ्च ज्ञानं स्वप्नावस्थाजातानुभवजनितसंस्कारेण जायते, किन्तु स्मृत्यात्मकम्, न मानसमिति विशेषः ॥ ८ ॥

सू० धर्म्माच्च ॥ ९ ॥

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥

---

उ० स्वप्नमध्ये प्रमाभूतं यज्ज्ञानं तत् स्वप्नान्तिकमिति केचित् यथा शय्यायां शयानोऽस्मीत्यादि ॥ ८ ॥

स्वप्नस्वप्नान्तिकयोः कारणं समुच्चिनोति ।

अधर्म्मसमुच्चयार्थश्चकारः, कृतव्याख्यानमेतत् ॥ ९ ॥

इदानीं पर्य्यायमधिकृत्याह ।

अविद्येति सामान्यवाच्यपि पदं विपर्य्यये वर्त्तते प्रकरणात् संशयस्वप्नानध्यवसायानामुक्तत्वात्, तत्रेन्द्रियदोषोवातपित्ताद्यभिभवकृतमपाटवम्, संस्कारदोषोविशेषादर्शनसाहित्यं तदधीनं हि मिथ्याज्ञानं जायते ॥ १० ॥

---

वि० स्वप्नस्वप्नान्तिकयोरदृष्टमप्यसाधारणं कारणमित्याह ।

चकारादधर्म्मस्य संग्रहः। केचित्तु संस्कारं विनैव धर्म्मादिमात्रादपि किञ्चित् स्वप्नादिकं जायते इतिप्रतिपादनायेदं सूत्रम्, अतएव पूर्व्वोक्तश्रीहर्षकाव्यमपि साधु सङ्गच्छते इत्याहुः ॥ ९ ॥

प्रकारान्तरेणापि बुद्धिर्द्विविधा प्रमाऽप्रमाचेति तत्राप्रमायाः कारणमाह ।

इन्द्रियदोषः काचादिः, संस्कारदोषोऽप्रमानुभवजत्वादिः, चकाराद्दूरत्वादिरूपाणामसन्निकृष्टपरामर्शादिरूपाणाञ्च दोषाणां संग्रहः, तथाचाविद्यायामप्रमायां दोषः कारणं दोषस्तु पित्तदूरत्वादिरूपो नानाविध इत्यर्थः ॥ १० ॥

अविद्याया लक्षणमाह ।

सू॰ तद्दुष्टज्ञानम्॥ ११॥
अदुष्टं विद्या॥ १२॥

---

उ॰ अविद्यासामान्यलक्षणमाह।

तदित्यव्ययपदं सर्व्वनामसमानार्थकमविद्यां परामृशति, साऽविद्या, दुष्टज्ञानं व्यभिचारिज्ञानमतस्मिं स्तदितिज्ञानं व्यधिकरणप्रकारावच्छिन्नं विशेष्यावृत्तिप्रकारकमिति यावत्, दोषस्य ज्ञानस्यानिश्चयरूपत्वमपि, तेनैककोटिसत्त्वेऽपि संशयोदुष्ट एवानवधारणात्मकत्वात्, तदनेन संशयविपर्य्ययस्वप्नानध्यवसायानामन्तर्णामण्युपपन्नः॥ ११॥

ज्ञानमित्यनुवर्त्तते अदुष्टमदुष्टेन्द्रियजन्यं यत्र यदस्ति तत्र तदनुभवो वा समानाधिकरणप्रकारानुभवो वा विशेष्यावृत्त्यप्रकारकानुभवो वा विद्येत्यर्थः, तच्चाध्यचं लैङ्गिकञ्च द्वयमेव॥ १२॥

---

वि॰ सर्व्वनामसमानार्थकं तदित्यव्ययं नातस्तेनाविद्यापरामर्शानुपपत्तिः, दोषजन्यं ज्ञानं सा अविद्येति अविद्यालक्षणम्, अत्र दोषाणामन्यतमत्वेन निवेशः, उपलक्षणञ्चैतत् तदभाववति तत्प्रकारकं विशेष्यावृत्तिप्रकारकं वा ज्ञानमित्यप्यविद्यालक्षणं द्रष्टव्यम्॥ ११॥

प्रमालक्षणमाह।

दोषानधीनं ज्ञानं प्रमेति प्रमालक्षणं भ्रमसामान्यभिन्नज्ञानं प्रमेत्यपि लक्षणं द्रष्टव्यम्, आंशिकप्रमाया अलक्ष्यत्वमेव, तद्वति तत्प्रकारकं ज्ञानं तत्प्रमेति विशेषलक्षणम्, एतच्च रङ्गरजतयोरि-

सू० आर्षं सिद्धदर्शनञ्च धर्म्मेभ्यः ॥ १३ ॥

---

उ० नन्वार्षमपि ज्ञानं समानाधिकरणप्रकारकमेव तच्च नेन्द्रियजन्यमसन्निकृष्टार्थगोचरत्वात्, न लैङ्गिकं लिङ्गानुसन्धानमन्तरेण जायमानत्वात्, तथा चैतत्करणं तृतीयं प्रमाणमायातमत आह।

ऋषीणां गालवप्रभृतीनां यदतीतानागतविषयकं ज्ञानं तदार्षम्, यच्च सिद्धानां मन्त्रौषधिगुटिकाञ्जनादिना व्यवहितविप्रकृष्टार्थगोचरज्ञानं प्रतिसिद्धिगतानां यद्दर्शनं तदुभयं धर्म्मेभ्यो यथार्थसाक्षात्कारिज्ञानं जायते, तद्योगिप्रत्यक्षेऽन्तर्भावान्न विद्यान्तरमिति वृत्तिकृतः, आर्षं ज्ञानं चतुर्थी विद्यैव साच ऋषीणां लौकिकानाञ्च भवति, तच्च मानसं प्रत्यक्षमेव उत्प्रेक्षासहकृतेन मनसा जनितं नियम-

---

वि० मे रजते इत्याद्यांशिकप्रमासाधारणम्, स्मृतिव्यावृत्तप्रमालक्षणे च अनुभवत्वं निवेशनीयमित्यन्यत्र विस्तरः ॥ १२ ॥

ननु योगिनां ज्ञानं कथमविद्या न भवति दूरत्वादिरूपविषयदोषस्य तत्रापि सम्भवादत आह।

आर्षमृषीणां योगजधर्म्मेण जनितं यत् सिद्धदर्शनं सिद्धानां सतां सर्व्वेषां वस्तूनां दर्शनं तद्धर्म्मेभ्यो जायते नतु तत्राधर्म्मः कारणमिति न तत् कदाचिदपि भ्रमरूपं, भ्रमं प्रति अधर्म्मस्य हेतुत्वात्, योगिनां ज्ञानन्तु धर्म्ममात्राधीनं प्रमारूपमेव भवति दूरत्वादेर्विषयदोषस्य तत्र भ्रमत्वासम्पादकत्वात्, दोषाणां भ्रमजनकत्वमधर्म्मसहकारेणैवेति हृदयम्,केचित्तु सिद्धेन मन्त्राद्यभि-

उ० सच्छर्गनादि-सिद्धजनितं वा, प्रागभवीयसंस्काराधीनैवाच व्याप्तिधीः, स्नानपानेष्टसाधनताव्याप्तिग्रहवत्। प्रशस्तपादा-र्थ्यास्तु सिद्धदर्शनं न ज्ञानान्तरमित्याहुः तथाहि यदि सिद्धानां गुटिकाञ्जनादिसिद्धनिमित्तप्रभवं व्यवहितवि-प्रकृष्टविषयं तदुच्यते तदा प्रत्यक्षमेव, यदितु दिव्यान्तरी-क्षभौमानां ग्रहनक्षत्रसञ्चारादिनिमित्ताधीनं तदा तल्लैङ्गि-कमेव तथा सञ्चारदर्शनेन व्याप्तिपरिच्छेदादिति॥ १३॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे नवमोऽध्यायः।

समाप्तश्चायं नवमोऽध्यायः।

---

वि० मन्त्रितेन गुटिकाञ्जनविशेषादिना यद्दर्शनं भवति तदपि आर्षं-वत् धर्म्मेभ्य एव भवति अतएव रघुवंशे "अतीन्द्रियेष्वप्युपपन्नद-र्शनोबभूव भावेषु दिलीपनन्दनः" इत्यादिकमपि साधु सङ्गच्छते, तथाच तादृशज्ञानमपि धर्म्ममात्राधीनतया प्रमारूपमेव भवती-तिभाव इति व्याचक्षते॥ १३॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां क-णादसूत्रविवृतौ नवमाध्यायस्य द्वितीयमाह्निकम्॥ ०॥

समाप्तश्चायं नवमोऽध्यायः।

---

सू॰ इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥

---

उ॰ आत्मगुणानां कारणतोभेदव्युत्पादनं दशमाध्यायार्थः, तत्र "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति गौतमीये प्रमेयविभागसूत्रे सुखस्यानभिधानात् दुःखाभिन्नमेव सुखमिति भ्रमनिरासार्थं सुखदुःखयोरेव प्रथमं भेदमाह।

सुखदुःखयोर्मिथः परस्परमर्थान्तरभावोभेदो वैजात्यमितियावत् कुत इत्यत आह इष्टानिष्टकारणविशेषात् इष्टं इष्यमाणं स्रक्चन्दनवनितादि, अनिष्टमनिष्यमाणमहिकण्टकादि, तद्रूपं यत्कारणं तस्य विशेषाद्भेदात् कारणवैजात्याधीनं कार्य्यवैजात्यमावश्यकं यतः, भेदकान्तरमाह विरोधात् सहानवस्थानलक्षणात् नह्येकस्मिन्नात्म-

---

वि॰ जगन्मोहनपादाब्जपरागनिकरं परं।
स्मारं स्मारं पुरःपूरं तरेयं विघ्नवारिधेः ॥

क्रमप्राप्ते सुखदुःखे परीक्षिषिषु स्तयोर्भेदमावश्यकं व्यापयति।

गौतमीयेन "दुःखविकल्पे सुखाभिमानाच्च" इति सूत्रेण दुःखस्य सुखाभिमानविषयत्वमुक्तं तेनापाततो दुःखमेव सुखं नतु तद्भिन्नं गुणान्तरमितिबोधोभवति तद्भ्रमनिरासार्थमयमारम्भः। सुखदुःखयोरर्थान्तरभावो नैकत्वम्, इष्टं स्रक्चन्दनवनितादिकम्, अनिष्टमहिकण्टकवैरिपूतिगन्धादिकम्, तद्रूपं यत्कारणं तस्य वि-

उ० न्येकदा सुखदुःखयोरनुभवः। चकाराद्नयोः कार्य्यभेदं भेदकं समुच्चिनोति, तथाहि अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य, दैन्यमुखमालिन्यादि दुःखस्य कार्य्यमिति ततोऽप्यनयोर्भेदः। तदुक्तं प्रशस्ताचार्य्यैः "अनुग्रहलक्षणं सुखं स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगाद्यदृग्नुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम्" इति, तदिदमतीतेषु स्रक्चन्दनादिषु स्मृतिजमनागतेषु सङ्कल्पजम्, गौतमीये सूत्रे सुखापरिगणनं वैराग्याय सुखमपि दुःखत्वेन भावयतो वैराग्यं स्यादेतदर्थमिति ॥ १ ॥

नन्वात्मा सुखदुःखे परस्परं भिन्ने ज्ञानादभिन्ने स्यातां स्मृत्यनुभववदित्यत आह।

---

वि० प्रयोगात् वैलक्षण्यात् मिथः परस्परं विरोधात् एकात्मनि युगपदनुत्पद्यमानत्वाच्च नहि विजातीयकारणकयो र्विरुद्धयो र्वाऽभेदः सम्भावनापदवीमधिरोहति, गौतमीयं सूत्रन्तु सुखं दुःखत्वेन भावनीयं वैराग्यार्थमित्येतत्परमिति। वस्तुतः सर्व्वजनसंवेदनसिद्धं सुखं दुःखं वाऽपह्नोतुं न शक्नोति गीर्व्वाणगुरुरपीतिसंक्षेपः॥ १॥

ननु सुखदुःखे ज्ञानविशेषावेव यथेन्द्रियत्वमेन्द्रिके ननु भिद्येते तत इत्यत आह।

सू० संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥

---

उ० सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानभिन्नत्वे संशयनिर्णयाभ्यन्तरत्वाभावो हेतु लिङ्गमित्यर्थः, तदयमर्थः सुखं दुःखं वा ज्ञानं भवत् संशयरूपं वा स्यात् निर्णयरूपं वा, नाद्यः कोटिद्वयानुल्लेखित्वात्, न द्वितीयः एककोट्यनुल्लेखित्वात्, तथाच यावद्विशेषबाधात् सामान्यबाधः, द्वावेव हि ज्ञानस्य विशेषौ संशयत्वं निर्णयत्वञ्च, तदुभयञ्च सुखे दुःखे च बाधितमिति ज्ञानत्वमपि तत्र बाधितम्, चकारादनुभवबाधं समुच्चिनोति सुखदुःखयोरहं सुखी दुःखीतिमानसोऽनुभवो नत्वहं जाने सन्देह्मि निश्चिनोमीत्याकारोऽनुभव इति ॥ २ ॥

भेदकान्तरमाह।

---

वि० सुखदुःखयोर्ज्ञानान्तरत्वे ज्ञानगुणभिन्नत्वे संशयनिर्णयान्तराभावः संशयनिश्चयान्तर्गतत्वाभावो हेतुः। ज्ञानगुणोहि द्विविधः सन्देहोनिश्चयश्चेति नहि तयोरन्यतरस्मिन्नपि सुखं दुःखं वाऽन्तर्भवितुमर्हति नहि सुखं दुःखं वा विरुद्धकोटिद्वयप्रकारकं येन तयोः सन्देहत्वं सम्भाव्येत, नापि तदभावाप्रकारकं सत्तत्प्रकारकं येन निर्णयत्वं सम्भावनीयमिति, ज्ञानस्य तृतीयप्रकारस्तु प्रश्नविधायायमानः, नातस्तत्र सुखं दुःखं वा प्रवेष्टुमीष्टे इति। २।

ननु यथा निर्व्विकल्पकं ज्ञानं न संशयोनापि निश्चयस्तथा सुखदुःखेऽपि स्यातामत आह।

सू० तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम्॥ २॥

उ० तयोः संशयनिर्णययोर्निष्पत्तिरुत्पत्तिः प्रत्यक्षाल्लिङ्गाच्च सुखं दुःखं वा न प्रत्यक्षसामग्रीजन्यं न वा लिङ्गजन्यम्, चतुर्विधं हि सुखं वैषयिकं मानोरथिकम् आभिमानिकमाभ्यासिकञ्च, तत्र चयाणामिन्द्रियसन्निकर्षप्रभवत्वं नास्त्येव प्रथममिन्द्रियार्थसन्निकर्षजत्वात् ज्ञानं स्यादिति चेन्न सामग्र्येकदेशस्य कार्य्यस्य साजात्यानापादकत्वात् अन्यथा दिक्कालसाधारण्येन सकलकार्य्यैकजात्यापत्तेः, किञ्च इन्द्रियार्थसन्निकर्षानुत्पन्नमानं सुखं निर्व्विकल्पकं वा स्यात् सविकल्पकं वा, नाद्यः अतीन्द्रियत्वप्रसङ्गात्, न द्वितीयः विशेष्यविशेषणभावेन द्वयोरनाकलनरूपत्वात्, किञ्च सुखदुःखयोरवश्यसंवेद्यत्वात् ज्ञानस्यावश्यसंवेद्यत्वेऽनवस्थाप्रसङ्गात्, लैङ्गिकमिति लिङ्गमेव वैषयिकवत्। वृत्तिकृतस्तु तयोर्ज्ञानसुखयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां प्रत्यक्षलैङ्गिकज्ञानव्याख्यानाभ्यां व्याख्याता, प्रत्यक्षं ज्ञानमिन्द्रियजम्, लैङ्गिकन्तु लिङ्गजम्, सुखादिकन्तु नैतादृशमिति व्याचक्रुः॥ २॥

वि० तयोःसुखदुःखयोर्निष्पत्तिः सिद्धिः प्रत्यक्षलैङ्गिकाभ्यां स्वात्मनि सुखदुःखे प्रत्यक्षसिद्धे परात्मनि नयनप्रसादादिना सुखस्य मुखमालिन्यादिना दुःखस्यानुमानं भवति तथाच तयोर्निर्व्विकल्पकज्ञानरूपत्वे प्रत्यक्षानुपपत्तिः मुखप्रसादमालिन्यादिलिङ्गकानुमितिविषयत्वानुपपत्तिश्चातो ज्ञानान्तर्गतत्वं न सुखदुःखयोरितिभावः॥ २॥

सू० अभूदित्यपि ॥ ४ ॥
सति च कार्य्यादर्शनात् ॥ ५ ॥

---

उ० लैङ्गिकज्ञानात्सुखादेः प्रकारभेदाधीनं भेदमाह ।

इतिशब्दः प्रकारे, अपिशब्दो भविष्यतीत्याकारान्तरसमुच्चये, तथाच पर्व्वते वह्निरभूद्भविष्यति वेति लैङ्गिके ज्ञानेऽतीतादिः प्रकारोदृश्यते नचैवंप्रकारं सुखं दुःखं वा उत्पद्यमानमुपलभ्यम् ॥ ४ ॥

भेदकान्तरं समुच्चिनोति ।

सति इन्द्रियार्थसन्निकर्षे सति च व्याप्तिपक्षधर्मतादिप्रतिसन्धाने कार्य्यस्य सुखस्य दुःखस्य वाऽदर्शनात् न प्रत्यक्षमात्रं सुखं दुःखं वा न लैङ्गिकमात्रं वा, तदयमर्थः ज्ञानसामान्यं तावत् सुखदुःखे न भवत इत्युक्तं ज्ञानविशेषः

---

वि० भेदकान्तरमपि दर्शयति ।

पर्व्वते वह्निरभूत् पर्व्वते वह्निरस्ति पर्व्वते वह्निर्भविष्यतीत्याद्याकारा अपि ज्ञानस्य ज्ञानसुखाद्योर्भेदकाः, ज्ञानं हि अतीतानागतवर्त्तमानविषयकं भवति नहि सुखस्य दुःखस्य वा कोऽपि विद्यते विषयः, अतः सविषयकत्वनिर्व्विषयकत्वरूपविरुद्धधर्म्माध्यासान्न ज्ञानाभेदः सुखादीनामितिभावः ॥ ४ ॥

इतोऽपि सुखदुःखे भिद्येते ज्ञानादित्याह ।

सति ज्ञानकारणे सति, कार्य्ययोः सुखदुःखयोः, अदर्शनात् अननुभवात्, न सुखदुःखयोर्ज्ञानान्तर्भावः, प्रत्यक्षसामग्र्यामनुमितिसामग्र्याञ्च सत्यां प्रत्यक्षमनुमितिर्वा भवति, तत्र घटं पश्या-

सू० एकार्थसमवायिकारणान्तरेषु दृष्टत्वात्॥ ६ ॥

---

उ० प्रत्यक्षज्ञानं वा भवेदनुमितिरूपं वा इन्द्रियार्थसन्निकर्षे स्रक्चन्दनादिप्रत्यक्षे सुखत्वानुभवाभावात्, न द्वितीयः चन्दनाद्यनुमितौ वह्न्याद्यनुमितौ वा सुखत्वदुःखत्वान्यतराननुभवात् एवं प्रत्यक्षविशेषेऽनुमितिविशेषे वा सुखदुःखयोरननुभवाच्च तद्विशेषोऽपीति॥ ५ ॥

भेदकान्तरमाह।

सुखदुःखयोरितिशेषः, सुखं प्रति एकार्थसमवेतानि असाधारणकारणानि, धर्मः, सुखे रागः, सुखकारणेच्छा, तदुपादानयत्नः, स्रक्चन्दनादिज्ञानम्, दुःखं प्रति तु अधर्मः, अनिष्टकण्टकादिज्ञानम्, एषु एकार्थसमवायिषु कारणेषु दृष्टत्वादित्यर्थः, ज्ञानन्तु निर्विकल्पकमेकार्थसमवेतमसाधारणकारणं नापेक्षत एव, सविकल्पकन्त्वपेक्षते विशेषणज्ञानं तच्च कारणान्तरं स्वविजातीयं कारणं न भवति,

---

वि० मि वह्निमनुमिनोमीत्याद्यनुभवो भवति नत्वहं सुखी दुःखी वेति सुखं दुःखं वा नैव भवितुमर्हति ज्ञानविशेष इति भावः। ५।

निर्विकल्पकात् विशेषकान्तरमाह।

एकार्थसमवायिकारणान्तरेषु स्वसमानाधिकरणविजातीयकारणेषु सत्सु दृष्टत्वात् सुखदुःखयोरितिशेषः। तथाच सुखं धर्म्मसुखरागसुखकारणेच्छासुखकारणोपादानगोचरप्रयत्नरूपान् स्वसमानाधिकरणविजातीयगुणान् दुःखञ्चाधर्म्मकण्टकादिज्ञानरूपान् अपेक्षते निर्विकल्पकञ्च विषयेन्द्रियसन्निकर्षादेव

सू० एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्म्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥

---

उ० मनःसंयोगस्तु साधारणत्वादविवक्षितः। यद्यपि स्मृतिः संस्कारमसाधारणमपेक्षते तथापि तद्भेदः स्फुटसिद्ध एवेत्य-नुभवमादाय भेदचिन्तनात्। लैङ्गिके यद्यपि व्याप्तिस्मृतिप-क्षधर्म्मतादिज्ञानापेक्षा तथाप्यन्तरशब्देनैव तद्युदासः। तदयं प्रमाणार्थः सुखदुःखे अनुभवभिन्ने स्वसमानाधिकरणस्व-जातीयासाधारणकारणजन्यत्वात् स्मृतिवदाद्यशब्दवच्च ॥ ६ ॥

ननु यदि कारणभेदाधीनोऽज्ञानात् सुखदुःखयोः सुखाच्च दुःखस्य स्तम्भकुम्भादिवदेव परस्परं भेदः तदा शरीरस्य तदवयवानाञ्च शिरःपादपृष्ठोदरादीनां न परस्परं भेदः स्यात् तत्र हि परमाणुद्व्यणुकादीनां लोहित-रेतसोर्वा कारणानामविशेषादित्यत आह।

एकदेश इति अवयवे इत्यर्थः, एकस्मिन्निति शरीरे इत्य-

---

वि० जायते न स्वसमानाधिकरणासाधारणकारणमपेक्षते, मनः-संयोगादृष्टादिकन्तु तत्र साधारणकारणमेव एवञ्च सुखं दुःखं वा कथं निर्व्विकल्पकज्ञानात्मभूतं भवितुमर्हति कारण-वैषम्यादित्यर्थः ॥ ६ ॥

ननु यदि कारणवैलक्षण्यात् कार्य्यभेदस्तदा देहस्य तदवय-वानां करचरणशिरःपृष्ठोदरादीनाञ्चाभेदप्रसङ्गः सर्व्वेषैकविध-योः शुक्रशोणितयोर्हेतुत्वादित्यत आह।

एकस्मिन् देहे एकदेशे अवयवे शिरः पृष्ठम् उदरं मर्म्माणीति-

र्थः, शिर इत्येकदेशः उदरं पृष्ठं मर्म्माणि च स्नायुप्रभृतीनि, तेषां विशेषोवैजात्यम्, तद्विशेषेभ्यस्तत्कारणविशेषेभ्यः, तत्रापि कारणवैजात्यादेव वैजात्यं नहि यज्जातीयं शिरःसमवायि-कारणं तज्जातीयमेवोदरपृष्ठादेरपि, तन्तुकपालाद्युपादान-वैजात्यात् पटघटादौ वैजात्यवत्, तत्रापि वैजात्यसम्भवात् तन्तुकपालादेरपि अंशुशर्करादिवैजात्यात् एवं तत्र तत्राप्यूहनीयं परमाणूनां साधारण्येऽपि स्वस्वोपादानवैजात्यस्य सर्व्वत्र वैजात्यप्रयोजकत्वात् द्रव्यत्वेन तूपादानसाजात्यं न वैजात्यप्रयोजकमितिदिक् ॥ ७ ॥

इति श्रीशाङ्करे वैशेषिकसूत्रोपस्कारे दशमाध्यायस्य प्रथमाह्निकम् ॥ * ॥

---

वि० व्यवहारविशेषा भवन्तीति पूरणीयम्, इतिकारश्च मर्म्माणीत्यनन्तरं योजनीयः, तथाच व्यवहाराणां वैलक्षण्यात् व्यवहर्त्तव्यानामपि वैलक्षण्यमावश्यकम्, तद्विशेषः व्यवहर्त्तव्यानां शिरःप्रभृतीनां वैलक्षण्यञ्च तद्विशेषेभ्यस्तेषां कारणानां ये विशेषास्तेभ्य एव, इत्यञ्च घटपटादीनामिव शिरःप्रभृतीनामवयवानामपि स्वस्वसमवायिकारणवैजात्यादेव वैजात्यं समवायिकारणवैजात्यमपि तत्समवायिकारणवैजात्यप्रयोज्यमेवं क्रमेण त्रसरेणुवैजात्यपर्य्यन्तं वाच्यम्, द्व्यणुकवैजात्यन्तु तत्तद्विजातीयकार्य्यजनकतावच्छेदकतया सिद्धम्, एवमसमवायिकारणसंयोगवैजात्यादपि केषाञ्चिद्वैजात्यं वक्तव्यमधिकमन्यथानुसन्धेयमिति । ७ ।

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ दशमाध्यायस्याद्यमाह्निकम् । * ।

सू० कारणमिति द्रव्ये कार्य्यसमवायात्॥ १॥
संयोगाद्वा॥ २॥

---

उ० इदानीं प्रसक्तत्रयाणां कारणानां विशेषविवेचनमारभते।

कारणं समवायिकारणमिदमिति प्रतीतिप्रयोगौ द्रव्ये द्रष्टव्यौ, कुत एवमत आह कार्य्यसमवायात् कार्य्याणि द्रव्यगुणकर्म्माणि तत्रैव समवयन्ति यतः॥ १॥

तत् किं समवायिकारणत्वमात्रं द्रव्याणामत आह।

पटोत्पत्तौ तन्तूनां समवायिकारणत्ववत् निमित्तका-

---

वि० प्रसङ्गात् कारणनिरूपणमारभते।

कारणमिति समवायिकारणमिति व्यवहारोद्रव्य एव भवति कार्य्यसमवायात् समवायेन कार्य्याश्रयत्वात् नहि कार्य्यस्य कस्यापि समवायेनाधारता द्रव्यभिन्नेषु पदार्थेषु विद्यते येन तत्रापि तद्व्यवहारः प्रसज्येतेत्यर्थः। अन्यथासिद्धिशून्यत्वे सति नियतपूर्व्ववर्त्तित्वं कारणत्वमिति कारणसामान्यलक्षणम्, कारणं त्रिविधं समवायिकारणासमवायिकारणनिमित्तकारणभेदात्, तत्र समवायसम्बन्धेन तत्कार्य्याश्रयत्वं तत्समवायिकारणत्वं समवायेन कार्य्याश्रयत्वन्तु सामान्यतः समवायिकारणत्वम्, तच्च द्रव्य एव नान्यत्रेतिभावः॥ १॥

न केवलं द्रव्यस्य समवायिकारणत्वं कार्य्यसमवायिवत्त्वा किन्तु असमवायिकारणाश्रयतयाऽपीत्याह।

संयोगात् असमवायिकारणसंयोगाश्रयत्वाद्वा द्रव्ये समवायि-

उ॰ रणत्वमपि, तुरीतन्तुसंयोगस्यापि पटकारणत्वात् तत्संयोगद्वारा तुर्य्यास्तन्तोश्च पटनिमित्तकारणत्वमपि, चाकारः समुच्चये तुरीतन्तुसंयोगं प्रति तन्तोः समवायिकारणत्वेऽपि पटं प्रति तद्द्वारा निमित्तकारणत्वात्॥ २॥

---

वि॰ कारणमितिव्यवहार इत्यर्थः, अत्र संयोगपदमसमवायिकारणमात्रोपलक्षकम्, नह्यसमवायिकारणाश्रयत्वं द्रव्यादन्यस्मिन्नस्ति येनातिप्रसक्तिः सम्भावनीया, असमवायिकारणत्वस्य गुणकर्म्ममात्रवृत्तित्वात्, नच घटरूपस्यासमवायिकारणं यत्कपालरूपं तदाश्रयत्वस्य कपाले सत्वात् घटरूपस्य समवायिकारणं कपालमिति व्यवहारः स्यात् न स्याच्च घटोघटरूपस्य समवायिकारणमितिव्यवहार इति वाच्यं कारणताघटकसम्बन्धेनासमवायिकारणाश्रयत्वस्यैव तादृशव्यवहारनिर्व्वाहकत्वात्, कपालरूपस्य स्वसमवायिसमवायसम्बन्धेनैव कार्य्यजनकत्वात् तादृशसम्बन्धेन तस्य कपालेऽसत्त्वात् घटेसत्त्वाच्च,नच कपालीयगुणकर्म्मसामान्येष्वपि तादृशसम्बन्धेन तदीयरूपस्य विद्यमानत्वात्तेषु तादृशव्यवहारप्रसङ्ग इति वाच्यमसमवायिकारणाश्रयद्रव्यत्वस्यैव समवायिकारणव्यवहारनियामकत्वोपगमात्, वस्तुतः समवायिकारणमितिसामान्यव्यवहारनियामकमसमवायिकारणसंयोगाद्याश्रयत्वमित्येवैतत्सूत्रेण सूचितं नतु विशेषव्यवहारनियामकं तदित्येव तत्त्वम्, अतएव चितन्तुकपटरूपस्य समवायिकारणं पञ्चतन्तुकः पट इति व्यवहारःस्यात् तदसमवायिकारणस्य तन्तुरूपस्य स्वसमवायिसमवायसम्बन्धेन पञ्चतन्तुकपटेऽपि सत्त्वात न स्याच्च शैलः श्येनशैलसंयोगस्य समवायिकारणमिति व्यवहारस्तदसमवायिकारणस्य कर्म्मणः शैलेऽसत्त्वादिति पूर्व्वपक्षोऽपि निरस्त इति संक्षेपः॥ २॥

सू॰ कारणे समवायात् कर्म्माणि ॥ ३ ॥

---

उ॰ कर्म्मणि यादृशकारणत्वं तदाह।

असमवायिकारणानीतिशेषः असमवायिकारणत्वञ्च कार्य्यकारणभावसम्बन्धैकार्थसमवेतकारणत्वं तच्च कार्य्यैकार्थसमवायात् कारणैकार्थसमवायाद्वा तत्राद्या लघ्वी द्वितीया महतीति वैशेषिकपरिभाषा, तत्र कयाप्रत्यासत्त्या संयोगविभागसंस्कारान् प्रति कर्म्मणामसमवायिकारणत्वमित्यत आह कारणे समवायात् कारणे संयोगादिसमवायिकारणे समवायात् तथाच कार्य्यैकार्थसमवायलक्षणया लघ्व्या प्रत्यासत्त्या संयोगादौ कर्म्मणोऽसमवायिकारणत्वमित्यर्थः ॥३॥

---

वि॰ असमवायिकारणव्यवहारः कुत्र भवतीत्याकाङ्क्षायामाह।

कर्म्माणि असमवायिकारणानीतिव्यवहारः कारणे संयोगविभागवेगस्थितिस्थापकानां समवायिकारणे समवायात् समवायसम्बन्धेन सत्त्वात्, तथाच समवायस्वसमवायिसमवायान्यतरसम्बन्धेन समवायिकारणप्रत्यासन्नत्वे सति कारणत्वमेवासमवायिकारणत्वं तत्र संयोगादीनामसमवायिकारणे कर्म्मणि समवायसम्बन्धेन तत्समवायिकारणप्रत्यासन्नत्वादसमवायिकारणव्यवहारः। नच इच्छादिकार्य्याणां ज्ञानादिकारणेऽसमवायिकारणव्यवहारापत्तिः, सामान्यलक्षणे आत्मविशेषगुणभिन्नत्वस्य विशेषणीयत्वात्, नच तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वापत्तिः एवं वेगादीनामभिघाताद्यसमवायिकारणत्वापत्तिरिति वाच्यं पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वस्या-

सू० तथा रूपे कारणैकार्थसमवायाच्च ॥ ४ ॥

उ० रूपादीनां गुणानामवयववर्त्तिनामवयविगुणादिषु कीदृशी कारणतेत्यपेक्षायामाह।

रूप इति रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वगुरुत्वद्रवत्वस्नेहाद्युपलक्षयति, तथेत्यसमवायिकारणत्वमतिदिशति, कारणैकार्थसमवायादिति अवयविरूपादीनां समवायिकारणं यदवयवि तेन सहैकार्थसमवायेन महत्या प्रत्यासत्त्याऽवयविरूपादिकमारभते, तद्यथा कपालरूपादि घटे रूपादिकमारभते इति सर्व्वत्र द्रष्टव्यम्, चकारादमीषां क्वचिन्निमित्तत्वमपि समुच्चिनोति॥ ४ ॥

वि० भिघाताद्यसमवायिकारणलक्षणे वेगादिभिन्नत्वस्य पानायत्वाविशेषणीयत्वात्, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रति वेगादिकं वेगस्पन्दादिकं प्रत्यसमवायिकारणं भवत्येवेति तत्तल्लक्षणे तत्तद्भिन्नत्वं न देयमेवेति संक्षेपः॥ ३ ॥

अवयवरूपादीनामवयविरूपादिकं प्रति परम्परयैवासमवायिकारणत्वमित्याह।

रूपेऽवयवगतरूपादिषु कारणैकार्थसमवायात् स्वसमवायिसमवायरूपप्रत्यासत्तितः तथा ऽवयविगतरूपादीनामसमवायिकारणत्वव्यवहार इत्यर्थः, कपालरूपादिकं स्वसमवायिसमवायसम्बन्धेन घटाद्यवयविनि समवायिकारणे वर्त्तमानं घटरूपाद्यसमवायिकारणं भवति तत्र परम्परासम्बन्धसत्त्वेऽसमवायिकारणतायामहतीति वैशेषिकाणां परिभाषा साक्षात् सम्बन्धसत्त्वे च अल्पीति परिभाषेति संक्षेपः॥ ४॥

सू० कारणसमवायात् संयोगः पटस्य ॥ ५ ॥
कारणकारणसमवायाच्च ॥ ६ ॥

---

उ० द्रव्यारम्भे संयोगस्यासमवायिकारणस्य सर्वां प्रत्यासत्तिमाह।

कारणे समवायिकारणे समवायात् संयोगोऽपि पटादौ कार्य्ये कार्य्यैकार्थसमवायलक्षणया प्रत्यासत्त्याऽसमवायिकारणमित्यर्थः, पटपदेन कार्य्यद्रव्यमात्रमुपलक्षयति यदि त्ववयवावयवसंयोगोऽपि पटादेरसमवायिकारणं तदा कारणैकार्थसमवायोऽपीति किञ्चित् ॥ ५ ॥

संयोगस्य क्वचित् महत्त्वा प्रत्यासत्त्या कारणत्वमित्याह।

तूलपिण्डावयवे वर्त्तमानः प्रचयाख्यः संयोगस्तूलकपिण्डे महत्त्वमारभते तत्र कारणैकार्थसमवायः प्रत्यासत्तिरित्यर्थः ॥ ६ ॥

---

वि० द्रव्ये संयोगस्याऽपि साक्षात् सम्बन्धेनैवासमवायिकारणत्वमित्याह।

समवायिकारणे तन्तौ समवायेनैव तन्त्वोः संयोगो वर्त्तते इति घटं प्रति साक्षात् सम्बन्धेनैवासमवायिकारणमित्यर्थः ॥ ५ ॥

संयोगस्य क्वचित् कार्य्ये परम्परयाप्यसमवायिकारणत्वमस्तीत्याह।

कारणस्य समवायिकारणस्य कारणे समवायिकारणे समवायात् समवायसम्बन्धेन वर्त्तमानत्वात् संयोगः क्वचित् असम-

सू० संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥

---

उ० एवं समवायिनिरूपितां कारणतां निरूप्य निमित्तकारणतां निरूपयितुं प्रकरणान्तरमारभते।

अग्नेर्वैशेषिकं विशेषगुणश्चौष्ण्यं संयुक्तसमवायात् पाकजेषु निमित्तकारणम्। उपलक्षणञ्चैतत् ज्ञानं प्रति सर्व्वेषां निमित्तकारणत्वं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वमेव सुखादीनां भेदप्रतिपादनाय प्रपञ्चोऽयं द्रष्टव्यः ॥ ७ ॥

इदानीमाम्नायप्रामाण्यं द्रढयितुमुक्तमेवार्थमाह।

---

वि० वायिकारणं भवति, यथा तूलकपिण्डमहत्परिमाणरूपकार्य्ये तदवयवगतः शिथिलाख्यसंयोग इति ॥ ६ ॥

निमित्तकारणतां निरूपयति।

अग्नेर्वैशेषिकं विशेषगुणात्मकमौष्ण्यं संयुक्तसमवायात् पाकजरूपादौ निमित्तकारणम्, तथाच पाकजं प्रति स्वाश्रयसंयोगसम्बन्धेन उष्णस्पर्शो निमित्तकारणम्, समवायिकारणासमवायिकारणभिन्नं कारणं निमित्तकारणमिति सामान्यलक्षणं बोध्यम्। अवशिष्टानां परीक्षा उक्तदिशैव कर्त्तव्येति मुनीनामभिप्रायः नातस्तेषां न्यूनतेति।

तदेवं पदार्था निरूपिताः साधर्म्यं वैधर्म्यञ्च निरूपितम्, कर्म्मभिः शुद्धचित्तानामेवैतच्छास्त्रात् मननं भवति नाशुद्धचित्तानाम्, कर्म्मणां चित्तशुद्धिजनकत्वञ्च विविदिषन्तीति श्रुत्योक्तं तत्पूर्व्वोक्तमपि शास्त्रार्थं पुनराह।

सू॰ दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय॥ ८॥

---

उ॰ दृष्टानां प्रमाणत उपलब्धानां कर्म्मणां यागदानस्नानादीनां दृष्टप्रयोजनानां दृष्टमुपदिष्टं प्रयोजनं येषां तथाहि "स्वर्गकामोयजेत" "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादौ विधिसमभिव्याहृतमेव फलम्, क्वचिदार्थवादिकं यथा "यएता रात्रीरधीयीत तस्य पितरोघृतकुल्यामधुकुल्याःक्षरन्ति" इत्यादौ, क्वचिच्चौपादानिकम्, यथा "विश्वजितायजेत" इत्यादौ, अत्र हि न विधिसमभिव्याहृतं नार्थवादोपस्थितमित्यौपादानिकं काल्पनिकं स्वर्गस्यैव स्वतः सुन्दरस्य फलस्य कल्पनीयत्वात्, तथाचाशुतरविनाशिनामेतेषां कर्म्मणां चिरभाविने फलाय कारणत्वमनुपपद्यमानमतएतेषां प्रयोगोऽनुष्ठानमभ्युदयायापूर्व्वायेत्यर्थः। ननु श्रुतिप्रामाण्ये सति स्यादेवं तदेव तु दुर्लभं नहि मीमांसकानामिव नित्यनिर्द्दोषत्वेन श्रुतिप्रामाण्यं त्वयेष्यते पौरुषेयत्वे-

---

वि॰ दृष्टानां विधिदृष्टानां दृष्टप्रयोजनानां दृष्टं विध्यर्थवादादिना ज्ञातं प्रयोजनं येषां तथाविधानां कर्म्मणां यज्ञदानतपःप्रभृतीनां प्रयोगोऽनुष्ठानं दृष्टानां तत्तत्कर्म्मफलानामभावे तत्तत् फलकामनाविरहादसम्भवे अभ्युदयाय चित्तशुद्धिप्रयुक्तविविदिषात्मकफलाय भवति तथाच "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिविधिविहितानां स्वर्गाद्यात्मकप्रतिनियतप्रयोजनानां कर्म्मणां

सू० तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ९ ॥

उ० नाभ्युपगमात्, पुरुषस्य च भ्रमप्रमादविप्रलिप्सादिसम्भवादत आह दुष्टाभाव इति दुष्टं पुरुषान्तरेऽस्मदादौ भ्रमप्रमादलिप्सादिकं पुरुषदूषणं तदभावे सतीत्यर्थः। क्षितिकर्तृत्वेन वेदवक्तृत्वेन वाऽनुमितस्य पुरुषधौरेयस्य निर्दोषत्वेनैवोपस्थितेः, तथाच तद्वचसां न निरभिधेयता न विपरीताभिधेयता न निष्प्रयोजनाभिधेयता, भूतेन्द्रियमनसां दोषात् भ्रमप्रमादकरणापाटवादिप्रयुक्ता एव वचसामविशुद्धयः सम्भाव्यन्ते, न चेश्वरवचसि तासां सम्भवः, तदुक्तम् "रागाज्ञानादिभिर्वक्ता ग्रस्तत्वादनृतं वदेत्। ते चेश्वरे न विद्यन्ते स ब्रूयात् कथमन्यथेति ॥ ८ ॥

ननु तेनेश्वरेण वेदः प्रणीत इत्यत्रैव विप्रतिपत्तिरत आह।

इति शास्त्रपरिसमाप्तौ तद्वचनात्तेनेश्वरेण वचनात् प्रण-

वि० निष्कामेश्व ग्रतानां न स्वर्गादिफलजनकत्वं किन्तु चित्तशुद्ध्याद्यात्मकफलजनकत्वमेव "विविदिषन्ति" इत्यादिश्रुतेः, "कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते" इत्यादिस्मृतेश्चेतिभावः ॥ ८ ॥

ननु श्रुतेः प्रामाण्यञ्चेत्तदा तदुक्तकर्म्मणामपि सफलत्वं भवेत् श्रुतेः प्रामाण्यञ्चाद्यापि सन्दिग्धमित्याशङ्कायां पूर्व्वोक्तमपि शास्त्रार्थमादरार्थञ्च पुनराह।

इतिकारः शास्त्रसमाप्तिसूचकः सूत्रमिदं व्याख्यातं प्रथमाध्याये ॥ ९ ॥

उ० यथादाम्नायस्य वेदस्य प्रामाण्यं तथाहि वेदास्तावत् पौरुषेया वाक्यत्वादितिसाधितं नचास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः सम्भावन्ते, अतीन्द्रियार्थत्वात्, नचातीन्द्रियार्थदर्शिनोऽस्मदादयः, किञ्चाप्तोक्ता वेदा महाजनपरिगृहीतत्वात्, यन्नाप्तोक्तं न तन्महाजनपरिगृहीतं महाजनपरिगृहीतञ्चेदं तस्मादाप्तोक्तम्, स्वतन्त्रपुरुषप्रणीतत्वञ्चाप्तोक्तत्वम्, महाजनपरिगृहीतत्वञ्च सर्व्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम्, क्वचित् फलाभावः कर्म्मकर्तृसाधनवैगुण्यादित्युक्तम्, कर्तृस्मरणाभावान्नैवमिति चेन्न कर्तृस्मरणस्य पूर्व्वमेव साधितत्वात्, तत्प्रणीतत्वञ्च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम्, न त्वस्मदादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात्। किञ्च प्रमाया गुणजन्यत्वेन वैदिकप्रमायाऽपि गुणजन्यत्वमावश्यकं तत्र च गुणोवक्तृयथार्थवाक्यार्थ

---

वि० अथ संक्षेपतः शास्त्रार्थसंग्रहः। वैशेषिकमते पदार्थः सप्तविधः द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावभेदात् शक्तिसंख्यासादृश्यादयोनातिरिक्ताः पदार्थाः, वह्निरिव मण्याद्यभावोऽपि दाहादौ हेतुरतोमण्यादिसन्निधाने वह्नेर्न दाहः,वह्नौ दाहानुकूलानन्तशक्तितत्प्रागभावतत्प्रध्वंसकल्पनायां गौरवात्, संख्यापि द्रव्यमतागुणप्रभेद एव, एवं रूपं रूपे नोऽस्ति रूपाणीत्यादिव्यवहारविषयैकत्वादिकन्तु बुद्धिविशेषरूपमेव, सादृश्यमपि तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वम्, पदार्थविभाजकाः सप्त द्रव्यत्वगुणत्वकर्म्मत्व सामान्यत्वविशेषत्वसमवायत्वाभावत्वानि, तत्र द्रव्यत्व-गुणत्व-

उ० ज्ञानमेव वाच्यस्तथाच तादृश एव वेदे वक्ता, यः स्वर्गापूर्व्वादिविषयकसाक्षात्कारवान्, तादृशश्च नेश्वरादन्य इति सुष्ठु॥ ९॥

अकृत भवानीतनयो भवनाथसुतो भवार्च्चने निरतः।
एतं कणादसूत्रोपस्कारं शङ्करः श्रीमान्॥
श्लाघास्पदं यद्यपि नेतरेषामियं कृतिः स्यादुपहासयोग्या
तथापि शिष्यैर्गुरुगौरवेण परःसहस्रैः समुपासनीया॥

इति महामहोपाध्यायमिश्रभवनाथात्मजमिश्रश्रीशङ्करकृते वैशेषिकसूत्रोपस्कारे दशमोऽध्यायः समाप्तः॥ * ॥

समाप्तश्चेदं शास्त्रम्।

---

वि० कर्म्मत्वानि जातयः, नित्यत्वे सत्यनेकसमवेतत्वं सामान्यत्वम्, सद्भिन्नत्वे सत्येकमात्रसमवेतत्वं विशेषत्वम्, नित्यसम्बन्धत्वं समवायत्वम्, द्रव्यादिषट्कभिन्नत्वमभावत्वम्, द्रव्याणि नव क्षितिजलतेजोवाय्वाकाशकालदिगात्ममनांसि, तत्र सावयवानि द्रव्याण्यनित्यानि, निरवयवानि तु नित्यानि, तत्र कार्य्यस्य, संयोगस्य, विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः, अन्धकारस्तु तेजोविशेषसामान्याभाव एव, नतु द्रव्यान्तरम्, तत्र गुणक्रियादिबुद्धिर्भ्रान्तिरेव, द्रव्यविभाजकानि नव पृथिवीत्वजलत्वतेजस्त्ववायुत्वाकाशत्वकालत्वदिक्त्वात्मत्वमनस्त्वानि, तेष्वपि आकाशत्वकालत्वदिक्त्वानि न जातयः तदितराणि षट् जातयः। तत्र गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिः सिद्ध्यति, पृथिवी रूपरसगन्धस्पर्शसङ्ख्यापरिमितिपृथक्त्वसंयोगवि-

वि॰ भागपरत्वापरत्वगुरुत्वद्रवत्ववेगाख्यस्थितिस्थापकगुणवती, तत्र नील-शुक्लपीतरक्तहरितकपिशचित्रात्मकानि सप्त रूपाणि वर्त्तन्ते, कषायमधुरलवणकटुतिक्ताम्लभेदेन षड्विधोरसः पृथिव्याम्, गन्धस्तु तत्र सौरभासौरभभेदेन द्विविधः, पाषाणेऽप्यनुत्कटोगन्धोऽस्त्येव तद्भस्मनि गन्धोपलब्धेस्तदुपादानोपादेयत्वेन पाषाणस्य पृथिवीत्वं तेन च गन्धानुमानात्, स्पर्शोऽप्यनुष्णाशीतः क्वचित् पाकजः क्वचित् कारणगुणजनितश्च। पृथिवी द्विविधा नित्यानित्यभेदात्, तत्र परमाणुरूपा नित्या तदन्याऽवयवयोगिन्यनित्या, साऽपि त्रिविधा शरीरेन्द्रियविषयभेदात्, तत्र शरीरं जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्व्विधम्, जरायुजाः मनुष्यपश्वाद्याः, अण्डजाः पक्षिसर्पाद्याः, स्वेदजा दंशमशकाद्याः, उद्भिज्जास्तरुगुल्माद्याः, घ्राणेन्द्रियं पार्थिवम्, विषयास्तु द्व्यणुकादिब्रह्माण्डपर्य्यन्ताः, तत्र द्वाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्रसरेणुरित्यादिक्रमेणावयविनामुत्पत्तिः॥ ※॥

जलत्वेह्समवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः, रूपरसस्पर्शसङ्ख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा जलस्य गुणाः, तत्र रूपं शुक्लमेव, कालिन्दीजलादौ नीलत्वप्रतीतिस्तु भ्रान्तिरेव तस्यैव वियति विक्षिप्तस्य धवलिमोपलब्धेः। रसस्तु मधुर एव हरीतक्यादिभक्षणानन्तरं रसनेन्द्रियेण जलमाधुर्य्योपलब्धेः। जम्बीररसादौ चाम्लरसोपलब्धिस्तु आश्रयौपाधिकी, स्पर्शश्च शीत एव, तेजःसंयोगात्तत्राष्णप्रतीतिर्भ्रान्तिरेव, द्रवत्वन्तु तत्र सांसिद्धिकम्, जलमपि नित्यानित्यभेदाद्द्विविधं परमाणुरूपं नित्यम्, द्व्यणुकादिरूपमनित्यम्, तदपि त्रिविधं शरीरेन्द्रियविषयभेदात्, तत्र जलीयशरीरमयोनिजं वरुणलोके प्रसिद्धम्, जलीयमिन्द्रियन्तु रसनम्, विषयास्तु हिमकरकाकासारसरित्सागरादयः।

वि॰ हिमकरकादेरुत्पत्तिस्तु विलक्षणादिव्यतेजःसंयोगात्, न च हिमकरकयोः काठिन्यान्न जलत्वम्, उष्मणा विलीनयोस्तयोर्जलत्वस्य प्रत्यक्षसिद्धत्वात्, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्त्या हिमकरकयोर्जलोपादानकत्वसिद्धौ जलत्वसिद्धेरिति। मुक्तावलीकारस्तु अदृष्टविशेषेण तत्र द्रवत्वप्रतिरोधः, काठिन्यप्रत्ययस्तु भ्रान्त एवेत्याह। तत्र दृढतरसंयोग एव काठिन्यम्, परन्तु दिव्यतेजसा प्रतिबद्धं द्रवत्वमभिभूतं तिष्ठतीत्येके। केचित्तु दिव्यतेजोऽनुप्रवेशात् द्रवत्वं तत्र नश्यति उष्मसंयोगेन दिव्यतेजःसंयोगविगमे पुनर्द्रवत्वमुत्पद्यते इत्याहुः। तैलादावपि जलस्य द्रवत्वं प्रकृष्टस्नेहवत्त्वाद्दहनानुकूल्यमिति, घृतचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्त्तिशीततरसलिलस्यैव, एवं वाय्वादावपि तत्संयुक्तसूक्ष्मजलस्यैव शैत्योपलब्धिरिति संक्षेपः ॥ * ॥

जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया तेजस्त्वजातिसिद्धिः, उष्णत्वञ्च स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धम्, तेजस्त्वं जातिः परमाणावप्यस्ति "नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावः" इति नियमस्याप्रयोजकत्वात्, चन्द्रकिरणादौ तदन्तःपातिजलस्पर्शेनाभिभवात् मरकतकिरणादौ पार्थिवस्पर्शेनाभिभवात् चक्षुरादौ चानुद्भूतत्वादुष्णस्पर्शस्य नोपलब्धिः। तेजसि रूपस्पर्शसङ्ख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्ववेगा गुणाः सन्ति, तत्र भास्वरशुक्लरूपमेव तेजसि, वह्नौ मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लरूपानुपलब्धिः, वह्न्यादीनां प्रत्यक्षन्तु पार्थिवरूपोपलब्ध्या भवति शङ्खस्येव पित्तपीतिम्ना, केचित्तु वह्न्यादेः शुक्लरूपं नाभिभूतं किन्तु तस्य शुक्लत्वमेवाभिभूतमित्याहुः। द्रवत्वन्तु नैमित्तिकं सुवर्णादौ तेजसि। तेजोऽपि द्विविधं नित्यमनित्यञ्च, तत्र परमाणुरूपं नित्यं द्व्यणुकादिरूपन्त्वनित्यम्, अनित्यं तेजस्त्रिविधं शरीरेन्द्रियविषयभेदात्, तत्र तैजसं शरीरमयो-

वि॰ निजमेव सूर्य्यलोकादौ प्रसिद्धम्, तैजसमिन्द्रियं नयनम्, विषयोवह्निसुवर्णादिः, सुवर्णस्य तेजस्त्वे मानञ्च सुवर्णं तैजसमसति प्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवीत्यनुमानम्, नचेदमप्रयोजकं पृथिवीद्रवत्वस्य अन्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात्, नच पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात् तत्र व्यभिचार इति वाच्यं जलमध्यस्थमसीच्चोदवत् तस्याद्रुतत्वात्, केचित्तु अग्निसंयोगे पीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगेऽपि पूर्व्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् जलमध्यस्थपीतपटवदिति तादृशद्रवद्रव्यस्य च पृथिवीजलभिन्नस्य तेजस्त्वसिद्धिरित्याहुः॥ ❋ ॥

अन्यविजातीयस्पर्शसमवायिकारणतावच्छेदकं वायुत्वं जातिविशेषः। वायौ नव गुणाः स्पर्शसङ्ख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगा वर्त्तन्ते, वायोरपाकजानुष्णाशीतस्पर्शः, तेन विजातीयस्पर्शेन, विलक्षणशब्देन, तृणतूलादीनां धृत्या, शाखादीनां कम्पेन च वायोरनुमानं भवति उद्भूतरूपाभावाच्च न प्रत्यक्षमिति प्राञ्चः। नव्यास्तु उद्भूतरूपस्य चाक्षुषं प्रत्येव हेतुत्वाद्वायोः स्पार्शनप्रत्यक्षं भवत्येव तत्रोद्भूतस्पर्शस्य हेतुत्वादित्याहुः। वायुर्द्विविधो नित्योऽनित्यश्च, परमाणुरूपो नित्यस्तदन्योऽनित्यः, सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात्, वायवीयं शरीरमयोनिजमेव पिशाचादीनाम्, शरीरव्यापकं वायवीयमिन्द्रियं त्वक्, वायवीयो विषयस्तु प्राणादिमहावायुपर्य्यन्तः, प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नाना संज्ञा लभते॥ ❋ ॥

शब्दाश्रयत्वम् आकाशत्वम्, आकाशस्य षड् गुणाः सङ्ख्याद्याः पञ्च शब्दश्चेति, आकाश एकोऽपि उपाधेः कर्णशष्कुल्या भेदाद्भिन्नं

वि० श्रोत्रात्मकमिन्द्रियं भवतीति। प्रथमं तावत् शब्दोविशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानम्, ततः शब्दोद्रव्यसमवेतोगुणत्वात् संयोगवदित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अपाकजत्वे सत्यकारणगुणपूर्व्वकप्रत्यक्षत्वात् सुखवत्, पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम्,पीलुपाकवादिमते तु सत्यन्तं न देयमेव, पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्व्वकेति, जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति, शब्दो न दिक्कालमनोगुणोविशेषगुणत्वात्, नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत्, इत्यञ्च शब्दाधिकरणं नवमद्रव्यं गगननामकं सिद्ध्यतीति, नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्व्वकः शब्द उत्पद्यतामिति वाच्यम् अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावसिद्धेः, अयावद्द्रव्यभावित्वञ्च स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत् तद्भिन्नत्वम्, तच्चाशुविनाशिनि शब्दे निराबाधमेव, अत्र व्यतिरेकेण वायुस्पर्शोदृष्टान्तोज्ञेय इति संक्षेपः॥ * ।

द्रव्यात्मकः कालोनित्य एकश्च, तत्र सङ्ख्याद्याः पञ्च गुणाः सन्ति, सच कालिकेन जगतामाश्रयः, एवं जन्यमात्रं प्रति निमित्तकारणं कालिकपरत्वापरत्वासमवायिकारणसंयोगानुयोगी च, तादृशसंयोगाधारतया महाकालस्य सिद्धिः, एवमिदानीं घट इति ज्ञाने सूर्य्यक्रियारूपैतत्काले घटस्याधारता भासते, साच न साक्षात्सम्बन्धेन बाधितत्वात् किन्तु स्वसंयुक्तसंयोगितपनाश्रितत्वसम्बन्धेन, घटादिना संयुक्तः कालस्तत्संयोगी तपनस्तदाश्रितत्वं तत्क्रियायामस्तीति घटादेः सूर्य्यक्रियायां वर्त्तमानस्य परम्परासम्बन्धस्य घटकः कालोऽवश्यं स्वीकार्य्यः, वस्तुतस्तु तत्र कालिकसम्बन्धावच्छिन्नाधारतैव भासते सूर्य्यक्रियाया अपि कालत्वात्।

"कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः"।

वि० इत्याद्यागमस्तु क्षणे प्रमाणमिति ध्येयम्, क्षण एकोऽप्युपाधिभेदात् क्षणलवमुहूर्त्तयामादिव्यवहारविषयः, उपाधिश्च क्षणव्यवहारे स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म, पूर्व्वसंयोगावच्छिन्नविभागोवा, पूर्व्वसंयोगनाशावच्छिन्न उत्तरसंयोगप्रागभावोवा, उत्तरसंयोगावच्छिन्नं कर्म्म वा, स्वरूत्तिध्वंसप्रतियोग्यनाधारः शब्दोवा, तादृशक्षणन्यशब्द एव, महाप्रलये क्षणव्यवहारस्तु परमध्वंसेनोपपादनीयः, मुहूर्त्तयामादिव्यवहारस्तु तत्तत्क्षणकूटैरितिसंक्षेपः ॥ ❋ ॥

दैशिकपरत्वापरत्वरूपदूरत्वान्तिकत्वासमवायिकारणसंयोगानुयोगितया दिक् सिद्ध्यति, तस्यां सङ्ख्याद्याः पञ्च गुणाः सन्ति, तस्या एकस्या अपि तत्तदुपाधिभेदेन प्राच्यादिव्यवहारनियामकत्वम्, यस्य पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य प्राची, उदयगिरिव्यवहिताच प्रतीची, एवं तत्पुरुषीयसुमेरुसन्निहिता दिगुदीची, तद्व्यवहितात्ववाची, "सर्व्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इति नियमात्, एवमुदयगिरिसन्निहिता मेरुसन्निहिता चैशानीत्यादिक्रमेण विदिशोऽपि निरूपणीया-इति संक्षेपः ॥ ❋ ॥

सुखादिसमवायिकारणतावच्छेदकतयात्मत्वं जातिः सिद्ध्यति, साचेश्वरेऽस्त्येवाद्दष्टरूपकारणविरहात्तु न तत्र सुखाद्युत्पत्तिः, केचित्तु आत्मपदशक्यतावच्छेदकतया सा जातिः सिद्ध्यतीत्याहुः। अन्येतु सा जातिरीश्वरे नास्त्येव प्रमाणाभावात् ज्ञानवत्त्वेन जीवेश्वरयोर्विभागान्न दशमद्रव्यत्वमीश्वरस्येति वदन्ति, संसार्य्यात्मनि बुद्ध्यादिषट्कं सङ्ख्यादिपञ्चकं धर्म्माधर्म्मौ भावनाख्यसंस्कारश्चेति चतुर्द्दश गुणाः सन्ति, ईश्वरे च संख्यादिपञ्चकं बुद्धीच्छायत्नाश्चेत्यष्टौ गुणा वर्त्तन्ते । ❋ ॥

कुठारादीनां छिदादिकरणानां कर्त्तारमन्तरेण फलानुपधानं

वि० दृष्टम्, एवं चक्षुरादीनां ज्ञानकरणानां प्रत्येकविधानमपि कर्त्तारमन्तरेण नोपपद्यते इत्यतिरिक्तः कर्त्ता संसार्य्यात्मा कल्प्यते। चार्व्वाकास्तु देह एवात्मेति चैतन्यं तस्यैव धर्म्मः, स एव कर्त्ता चक्षुरादिप्रेरक इत्याहुस्तन्न मनोरमम्, तथा सति बाल्ये विलोकितस्य यौवने स्थाविरे वा स्मरणानुपपत्तेः यथा चैत्रदृष्टं मैत्रो न स्मरति, नच बाल्ययौवनवार्द्धक्येषु शरीरमेकमेवेति वाच्यं परिमाणभेदेन द्रव्यभेदस्यावश्यकत्वात्, नच कारणेनानुभूतस्य कार्य्येण स्मरणं स्यात्, मातृदृष्टानां पुत्रेण स्मरणप्रसङ्गात्, एवं शरीरस्य चैतन्ये बालकस्य स्तनपानादौ वानरशिशूनां गर्भनिःसरणदशायां शाखावलम्बने च प्रवृत्तिर्न स्यात् तत्कारणस्य इष्टसाधनताज्ञानस्य तदानीमसम्भवात्, मन्मते तु जन्मान्तरानुभूतेष्टसाधनतायास्तदानीं स्मरणादेव प्रवृत्तिः, नच जन्मान्तरानुभूतानामन्येषामपि कथं न स्मरणम्, उद्बोधकाभावात्, अत्र त्वगत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते, इत्थञ्च संसारस्यानादितया आत्मनोऽप्यनादित्वसिद्धौ अनादिभावस्य नाशासम्भवान्नित्यत्वं सिध्यतीति,मनसि ज्ञानाद्यङ्गीकारे तत्प्रत्यक्षानुपपत्ते र्मनसि महत्त्वाभावात्। वेदान्तिनस्तु नित्यविज्ञानमेवात्मा “अविनाशी वाअरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म” इति श्रुते रित्याहु स्तन्नमनोरमम्, नित्यविज्ञानस्य जगद्विषयत्वे सर्व्वज्ञत्वापत्तेः यत्किञ्चिद्विषयत्वे विनिगमकाभावात् निर्व्विषयत्वे ज्ञानत्वव्याघातात् “सत्यं ज्ञानम्” इत्यादिश्रुतिस्त्वीश्वरपरा न जीवेषु प्रमाणभावमावहति, नच जीवेश्वरयोर्न भेद इति वाच्यं ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां परस्परं भेदसिद्धौ ईश्वराभेदस्यासम्भवदुक्तिकत्वात्, अन्यथा बन्धमोक्षव्यवस्था व्याहन्येत, नच “तत्त्वमसि” इत्यादिश्रुतिरेव जीवेश्वरयोरभेदे मानमिति वाच्यं तस्या ईश्वराभेदेनेश्वरीयत्वप्रतिपादकतयास्तुत्यर्थवादत्वेन अभेदभावनाद्युपयोगविधेर्वे आत्मसा-

वि० ह्यात्कारोपयिके यत्नः करणीय इत्येतावन्मात्रपरत्वात्, नच संसारदशायां जीवेश्वरयोर्भेदेऽपि मुक्तिदशायामभेदो जायते इति वाच्यं भेदस्य नित्यत्वेन नाशायोगात् तन्नाशेऽपि पूर्व्वावस्थितव्यक्तिद्वयावस्थानस्यानिवारणाच्च, नच तदानीं द्वित्वस्यापि नाशात् व्यक्तिद्वयावस्थानं न सम्भवतीति वाच्यं तव निर्धर्म्मके ब्रह्मणि सत्वाभावेऽपि सत्यस्वरूपं तदित्यस्येव द्वित्वाभावेऽपि द्वयात्मकौ तावित्यस्य सुवचत्वात्, नच मिथ्यात्वाभावोऽधिकरणस्वरूपो ब्रह्मणि सत्यत्वमित्यस्माकं नाद्वैतभङ्गो नवा सत्यव्यवहारस्यानुपपत्तिरिति वाच्यम् एकत्वाभावस्य व्यक्तिद्वयात्मकस्य द्वित्वस्वरूपतया द्वयव्यवहारसम्पादकताया अप्यस्माभिरङ्गीकर्त्तव्यत्वात्,प्रत्येकमेकत्वेऽपि क्षितिजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्व्वजनसिद्धत्वात्, नच "ब्रह्मविद्ब्रह्मैव भवति" इतिश्रुतेस्तदानीमभेदः सिद्ध्यतीति वाच्यं तस्या निर्दुःखत्वादिना ज्ञानिनामीश्वरसाम्यस्य बोधकत्वात् सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इति लौकिकाभेदबोधकवाक्ये साम्यपरत्वस्य दृष्टत्वात् "तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुत्या साम्यस्य स्पष्टतया प्रतिपादनाच्च, अतएव "द्वासुपर्णासयुजासखायासमानं वृक्षम्" इत्यादिश्रुतेः "द्वे ब्रह्मणी वेदितव्ये" इत्यादिश्रुतेश्च भेदबोधिकाया नासङ्कोचिरिति श्रुतियुक्त्यनुभवसिद्धं द्वैतमपलपन्तोवेदान्तिमानिनोभियं क्रियच्च त्यक्तवन्तः । * ।

ईश्वरोऽपि न ज्ञानसुखाद्यात्मकः किन्तु ज्ञानाद्याश्रयः "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतौ विज्ञानपदस्य विशिष्टं ज्ञानं यस्येति व्युत्पत्त्या ज्ञानाश्रयबोधकत्वात् "यः सर्व्वज्ञः" इति श्रुत्यनुरोधात्, आनन्दमित्यस्यापि मत्वर्थीयाच्प्रत्ययेनानन्दवदित्यर्थः, अन्यथा नपुंसकत्वानुपपत्तेः, आनन्दोऽपि दुःखाभावे उपचर्य्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन

वि० सुखितप्रत्ययात्, ज्ञानवत् नित्यं सुखं वा ईश्वरे स्वीकार्य्यं सुखविशिष्टस्य नित्यत्वबोधकश्रुत्या विशेषणस्य सुखस्यापि नित्यत्वप्रतिपादनात्, ननु ईश्वरः सुखाभिन्नः "आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन" इत्यत्र भेदस्य स्पष्टतया प्रतिपादनादित्यलं पल्लवितेन ॥ ॥

एतेन योगाचाराणां क्षणिकविज्ञानात्मवादोऽपि निरस्तः, सर्व्वेषां सार्व्वज्ञ्यापत्तेः सुषुप्तिदशायामपि विषयावभासप्रसङ्गात् अद्यजातबालकस्य स्तनपानादौ प्रवृत्त्यनुपपत्तेश्च ॥ ॥

साङ्ख्यास्तु प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः, चेतनोऽहङ्करोमीति बुद्धिगतचैतन्याभिमानान्यथानुपपत्तेश्चेतनकल्पनम्, प्रकृतेश्च प्रथमः परिणामो बुद्धिः, तस्याः महत्तत्त्वम्, अन्तःकरणञ्चेति संज्ञाद्वयमपि, तत्संसर्गिणि पुरुषे तद्गतदुःखस्य प्रतिबिम्बः पुरुषस्य संसारः, विवेकख्यातिसंज्ञकेन तत्त्वज्ञानेन बुद्धौ तिरोभूतायां प्रतिबिम्बितदुःखनिवृत्तिरेव पुरुषस्यापवर्गः, बुद्धौ स्वच्छायामिन्द्रियप्रणाडिकया विषयसम्बन्धो ज्ञानाख्यो बुद्धेः परिणामविशेषः, सा च बुद्धिरंशत्रयवती, तत्र ममेदं कर्त्तव्यमित्यत्र मदंशः पुरुषोपरागः बुद्धेः स्वच्छतया चेतनप्रतिबिम्बादतात्त्विकः दर्पणस्येव मुखोपरागः, इदमिति विषयोपराग इन्द्रियप्रणाडिकया परिणामविशेषस्तात्त्विकः, निःश्वासाभिहतदर्पणस्येव मलिनिमा, कर्त्तव्यमिति व्यापारावेशस्तदुभयायत्तः। ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धोदर्पणमलिनेव मुखस्योपलभ्यते, ज्ञानवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव, कृतिसामानाधिकरण्येन प्रतीतेः, नच बुद्धिश्चेतना, परिणामित्वात्, बुद्धेः परिणामोऽहंकारतत्त्वम्, अहङ्कारतत्त्वस्य परिणामः पञ्चतन्मात्राणि एकादशेन्द्रियाणि च, तन्मात्राणां परिणामाः पञ्च महाभूतानीत्याहुस्तदपि न समीचीनं चेतनोऽहं

वि० करोमीति चैतन्यस्य कृतिसामानाधिकरण्यप्रतीतेः, नच सा चैतन्यांशे भ्रान्तिरूपा, तदंशे कृत्यंशे चेत्येकांशेषस्य कर्त्तुमशक्यत्वात्, अन्यथा बुद्धेर्नित्यत्वे पुरुषस्य मोक्षाभावप्रसङ्गः, अनित्यत्वे तत्पूर्व्वमसंसारापत्तिः, नचाचेतनायाः प्रकृतेः कार्य्यत्वाद्बुद्धेर्न चैतन्यं कार्य्यकारणयोस्तादात्म्यादिति वाच्यं कर्त्तुर्जन्यत्वस्यासिद्धेरन्यथा बालस्य स्तनपाने प्रवृत्त्यनुपपत्तेः, तस्मात् कर्त्तुरनादित्वमनायत्योपेयम्, अनादेर्भावस्य नाशासम्भवादविनाशित्वमिति किं प्रकृत्यादिकल्पनेन । नच

"प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः ।

अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते" ॥

इति गीतावचनविरोध इति वाच्यं प्रकृतेर्मूलकारणस्याहङ्कस्य गुणैरदृष्टमन्यैर्गुणैरिच्छादिभिः कर्त्ताऽहं कर्त्ताहमेवेत्यस्य तदर्थत्वात्।

"तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः" ।

इत्यादि वचनेनायमर्थोऽग्रेप्रकटीकृतो भगवतेत्यलमनल्पजल्पनेन ॥ * ॥

विशेषगुणयोगादात्मनो लौकिकं मानसं भवति, तद्गतस्य बुद्ध्यादिषट्कस्यापि लौकिकमानसविषयत्वम्, आत्मनएकत्वसङ्ख्याऽपि मनोग्राह्येति शङ्करमिश्राः, आत्मन एकत्वं परममहत्परिमाणञ्च द्वयमपि मनोग्राह्यमिति सिद्धान्तमञ्जर्य्यामाचार्य्य-चूड़ामणयः, तात्पर्य्यटीकायान्तु वाचस्पतिमिश्राणां मतेऽपि तदुभयं मनोग्राह्यम्, परात्मनाम् न प्रत्यक्षं, किन्तु चेष्टयाऽनुमितिरेवेति संक्षेपः ॥ * ॥

ईश्वरात्मनि तु संख्यादिपञ्चकं बुद्धीच्छायत्नाश्च वर्त्तन्ते, तस्य बुद्धीच्छायत्नास्तु नित्याः सर्व्वविषयकाश्च, तत्रेश्वरे प्रमाणन्तु क्षित्यङ्कुरादिकं सकर्त्तृकं कार्य्यत्वाद्घटादिवदित्याद्यनुमानम्, नच कर्त्तजन्यत्वसाधकेन शरीराजन्यत्वेन सत्प्रतिपक्ष इति वाच्यं

वि० तस्याप्रयोजकत्वात्, मम तु कर्तृत्वेन कार्य्यत्वेन कार्य्यकारणभाव एवानुकूलतर्कसम्पादक इति, एवं "द्यावाभूमी जनयन् देव एक विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्याद्यागमा अपीश्वरे प्रमाणमिति संक्षेपः॥ ※ ॥

मानसप्रत्यक्षकारणतावच्छेदकतया मनस्त्वं जातिः सिद्ध्यति, मनसि सङ्ख्यादिसमकं वेगश्चेत्यष्टौ गुणाः सन्ति, सुखसाक्षात्कारः सकरणकोजन्यसाक्षात्कारत्वात् चाक्षुषवदित्यनुमानेन मनसः सिद्धिः। चाक्षुषरासनादीनामेककालोत्पत्तिरूपं यौगपद्यं नास्तीत्यनुभवसिद्धम्, तत्र विषयसन्निकर्षादौ सत्यपि यत्सम्बन्धादेकमिन्द्रियं ज्ञानं जनयति नापरम्, तत् अणुरूपं मनःस्वीकार्य्यम्, मनसो महत्परिमाणस्वीकारे वेन सह युगपन्नानेन्द्रियाणां सम्बन्धसम्भवात् चाक्षुषरासनादीनां यौगपद्यापत्तेः, नच दीर्घशष्कुलीभक्षणादौ नानाऽवधानभाजाच कथमेकदा नानेन्द्रियजन्यं ज्ञानमिति वाच्यं मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धात् नानाज्ञानोत्पत्तेः, उत्पलपत्रशतव्यतिभेद इव तत्रापि यौगपद्यप्रत्ययस्य भ्रमरूपत्वात्, नच मनसः सङ्कोचदशायामयौगपद्यं विकासदशायाञ्च यौगपद्यं भवतीति वाच्यमनन्तावयवतन्नाशतत्प्रागभावादिकल्पने गौरवात् लाघवान्निरवयवस्यैवैकस्य मनस एकैकशरीरे कल्पनादिति, कायव्यूहस्थले अदृष्टविशेषोपगृहीत-नानापक्षमनोभिरेव तत्तद्भोगनिर्व्वाहात्, एवं छिन्नहस्तिकादिस्थलद्वयेऽपि बोध्यमिति संक्षेपः॥ ※ ॥

इति द्रव्यपदार्थ निरूपणम्॥ ※ ॥

गुणाश्चतुर्व्विंशतिसंख्याकाः रूपरसगन्धस्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दरूपाः। द्रव्यकर्म्मभिन्नसामान्यवन्निष्ठकारणतावच्छेदकतया गुणत्वं जातिः सिद्ध्यति, गुण-

वि॰ विभागजानि रूपत्वरसत्वादीनि चतुर्व्विंशतिर्जातयः, संस्कारत्वस्य जातित्वं तु सूत्रिकारैर्न मन्यते, रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्त्तगुणाः, बुद्ध्यादयः षट् धर्म्माधर्म्मभावनाशब्दाश्चामूर्त्तगुणाः, संख्यादयस्तु पञ्च उभयगुणाः, संयोगविभागद्वित्वादिसंख्याद्विपृथक्त्वादिपृथक्त्वानि चानेकाश्रितगुणास्तद्भिन्नगुणास्तु एकैकमात्रवृत्तयः, रूपरसगन्धस्पर्शा बुद्ध्यादयः षट् धर्म्माधर्म्मभावनाशब्दाश्च विशेषगुणाः, संख्यादयः सप्त नैमित्तिकद्रवत्वगुरुत्ववेगाश्च सामान्यगुणाः, स्थितिस्थापकस्तु क्षितिमात्रवृत्तिरिति मते स विशेषगुणः, मतान्तरे तु सामान्यगुण एव, संख्यादयः सप्त द्रवत्वस्नेहवेगाश्च द्वीन्द्रियग्राह्याः, रूपरसगन्धस्पर्शशब्दाः बाह्यैकैकेन्द्रियग्राह्याः, गुरुत्वजीवनयोनियत्नस्थितिस्थापक संस्कारनिर्व्विकल्पकज्ञानानुद्भूतरूपरसगन्धस्पर्शभावनाधर्म्माधर्म्मा अतीन्द्रियाः, बुद्ध्यादिषट्कं धर्म्माधर्म्मभावनाशब्दाश्चाकारणगुणोत्पन्नाः। अपाकजा रूपरसगन्धस्पर्शाः सांसिद्धिकद्रवत्वं स्नेहवेगगुरुत्वैकत्वैकपृथक्त्वपरिमाणस्थितिस्थापकाश्च कारणगुणोत्पन्नाः, संयोगविभागवेगाः कर्म्मजाः, रूपरसगन्धानुष्णस्पर्शपरिमाणैकत्वैकपृथक्त्वस्नेहस्थितिस्थापकसांसिद्धिकद्रवत्वशब्देषु असमवायिकारणत्वम्, आत्मविशेषगुणेषु निमित्तकारणत्वमात्रम्, गुरुत्वोष्णस्पर्शवेगद्रवत्वसंयोगविभागेषु निमित्तकारणत्वमसमवायिकारणत्वञ्च तिष्ठति, आत्मविशेषगुणसंयोगविभागाः अव्याप्यवृत्तयः। ❊ ॥

रूपत्वजातिः प्रत्यक्षसिद्धा, शुक्लनीलरक्तपीतहरितकपिशचित्रभेदेन रूपं सप्तविधमिति तर्कामृते जगदीशः, नानाविधमिति विश्वनाथः, रूपशब्दोल्लेखिनी प्रतीतिर्नास्ति, नीलोवर्ण इति व्यपदेशोल्लेखिन्येवेति केचित्, रूपं क्षितिजलतेजःसु वर्त्तते, तत्र क्षितौ नीलादिकं सर्व्वप्रकारम्, जले शुक्लमात्रम्, तेजसि भास्वरशुक्लमात्रम्,

वि० उद्भूतानुद्भूतभेदादपि रूपं द्विविधम्, तत्र भर्जनकपालस्थवह्न्यादौ योग्योग्यचक्षुरादौ चानुद्भूतरूपम्, उद्भूतरूपन्तु घटपटादौ, बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपं कारणम्, एवं तद्गतगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षेऽपि तदेव परम्परया कारणमिति प्राञ्चः, नव्यास्तु द्रव्यादिचाक्षुषं प्रत्येवोद्भूतरूपं कारणम्, स्पार्शनप्रत्यक्षे तु उद्भूतस्पर्शः कारणम्, अतएव वायोर्न चाक्षुषं किन्तु स्पार्शनं भवत्येव, प्रभाया उद्भूतस्पर्शाभावान्न स्पार्शनं किन्तु चाक्षुषं भवत्येव, बहिर्द्रव्यप्रत्यक्षे तु चात्मावृत्तिशब्देतरोद्भूतविशेषगुणवत्त्वं तन्त्रमित्याहुः। एकैका एव नीलादिव्यक्तयो यावन्नीलद्रव्यादिगता नित्या इति केचित् नीलो नष्ट इत्यादिप्रतीतेर्नीलनीलतरनीलतमादिप्रतीतेश्चानुपपत्तेस्तन्मतं न समीचीनम्। शुक्लनीलरक्तपीतादिभिस्तन्तुभिरारब्धे पटे चित्रं रूपमुत्पद्यते, तस्य नीरूपत्वे प्रत्यक्षानुपपत्तेरेतेन विजातीयस्पर्शवदवयवारब्धावयविनि चित्रस्पर्शोऽपि व्याख्यात इति प्राञ्चः सिद्धान्तरहस्ये मथुरानाथोऽप्येवमेवाह, अन्ये तु नानारूपवदवयवारब्धावयविनि अव्याप्यवृत्तीनि नानारूपाण्येवोत्पद्यन्ते व्याप्यवृत्तिजातीयानामव्याप्यवृत्तित्वस्वीकारे बाधकाभावात्, अतएव

"लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते"॥

इत्यादिस्मृतिरपि साधु सङ्गच्छते, एतेन स्पर्शोऽपि व्याख्यात इत्याहुः। रूपं जलतेजःपरमाणुषु नित्यमन्यदनित्यम्। पार्थिवपरमाणौ पाकाद्रूपनाशः॥ * ॥

रसत्वजातिः प्रत्यक्षसिद्धा, रसः क्षितिजलयोरेवास्ति, स च षड्विधः कषायमधुरलवणकटुतिक्ताम्लभेदात्, जले तु मधुर एव रसः हरीतक्यादिकं तत्सूचकम्, नानारसवदवयवारब्धावयविनि कोऽपि रसो न भवति तत्रावयवगतानामेव रसानामुपलब्धिः, रसस्तु रसनेन्द्रियमात्रेण गृह्यते, अनुद्भूतरसस्त्वतीन्द्रियः॥ * ॥

वि० गन्धत्वजातिरपि प्रत्यक्षसिद्धा, गन्धो द्विविधः सौरभासौरभभेदात्, गन्धस्य नित्यो नास्ति, अयन्तु घ्राणेन्द्रियमात्रग्राह्यः, अनुत्कटो गन्धः पाषाणादावतीन्द्रियः, गन्धः पृथिव्यामेव वर्त्तते ।*।

स्पर्शत्वजातिरपि प्रत्यक्षसिद्धा, स्पर्शः क्षितिजलतेजोवायूनां गुणः, स च त्रिविधः शीत उष्णः अनुष्णाशीतश्चेति, तत्र शीतस्पर्शो जले, तेजसि उष्णस्पर्शः, पृथिवीपवनयोरनुष्णाशीतस्पर्शः, तत्रापि पृथिव्यां पाकजोऽपि, वायौ तु अपाकजो विजातीय एव स्पर्शः, जलतेजोवायुपरमाणुषु अयं नित्यः, अन्यत्र द्रव्येऽनित्यः, कठिनसुकुमारस्पर्शौ पृथिव्यामेव, काठिन्यादिकन्तु संयोगविशेषः स च हिमकरकादावपीति केचित्, अन्ये तु काठिन्यादिकं न संयोगविशेषः चक्षुर्ग्राह्यत्वापत्तेः, किन्तु स्पर्शविशेष एव, हिमकरकादौ काठिन्यप्रतीतिस्तु भ्रान्तिरूपैवेत्याहुः। स्पर्शोऽप्यनुद्भूतोऽतीन्द्रियः प्रभादौ बोध्यः ॥*॥

रूपरसगन्धस्पर्शाः पृथिव्यामेव पाकजाः, तत्रापि परमाणावेव पाक इति पीलुपाकवादिनो वैशेषिकाः। तेषामयमभिप्रायः, अवयविनाऽवष्टब्धेषु अवयवेषु पाको न सम्भवति, किन्तु विजातीयवह्निसंयोगेन नष्टेषु अवयविषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च विजातीयवह्निसंयोगेन पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण महावयविपर्य्यन्तानामुत्पत्तिः। वह्नेर्वेगातिशयात् पूर्व्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति अत्र नवक्षणादिप्रक्रियाऽन्यत्र द्रष्टव्या ग्रन्थगौरवभिया परित्यक्ता ।*।

न्यायानुसारिणः पिठरपाकवादिनस्तु अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते वैशेषिकमतेऽनन्तावयवादिकल्पने गौरवं सोऽयं घट इत्यादिप्रत्यभिज्ञाविरोधश्च स्यात्, यत्र तु पाकानन्तरं न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियते इत्याहुः ।*।

वि० गणनव्यवहारकारणं संख्या, सा च नवस्वेव द्रव्येषु वर्त्तते, तत्र नित्यगतमेकत्वं नित्यम्, अनित्यगतमनित्यम्, द्वित्वाद्याः परार्द्ध-पर्य्यन्ताः संख्या अपेक्षाबुद्धिजन्या अपेक्षाबुद्धिनाशनाश्या व्यास-ज्यवृत्तयश्च, अनेकैकत्वबुद्धिरपेक्षाबुद्धिः, सा क्षणत्रयं तिष्ठ-ति, आदावपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो द्वित्वनिर्व्विकल्पकं ततो द्वित्वविशिष्टप्रत्यक्षं भवति, निर्व्विकल्पककाले अपेक्षाबुद्धेर्नाशे तत्परक्षणे द्वित्वनाशाद्विशिष्टप्रत्यक्षानुपपत्तेः, कालान्तरे तद्-द्वित्वस्य प्रत्यक्षाभावात् द्वित्वोत्पादिकाया अपेक्षाबुद्धेर्नाशस्यैव द्वित्वनाशकत्वं कल्प्यते, अतएव तत्पुरुषीयापेक्षाबुद्धिजन्यं द्वित्वा-दिकं तत्पुरुषेणैव गृह्यते इति कथ्यते, सर्गाद्यकालीनपरमाण्वा-दिगतद्वित्वस्य जनिकाऽपेक्षाबुद्धिरीश्वरस्य ब्रह्माण्डान्तरवर्त्ति-योगिनां वा, एवमतीन्द्रियान्तरेऽपि ज्ञेयम्, अथानियतैकत्वबु-द्धिसत्त्वे त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते इति कन्दलीकारः। आचार्य्यास्तु त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः तथाच त्रित्वादि-कमेव बहुत्वम्, सेनावनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो-दोषात्, इत्थञ्च इतोबहुकेयं सेनेति प्रतीतिरुपपद्यते बहु-त्वस्य संख्यान्तरत्वे तत्तारतम्याभावादित्याहुः। ※ ॥

परिमितिव्यवहारासाधारणकारणं परिमाणम्, तच्च सर्व्व-द्रव्यगतं नित्येनित्यमनित्येऽनित्यम्, तच्चतुर्व्विधमणु महत् दीर्घं ह्रस्वञ्चेति, अनित्यं त्रिविधं संख्याजन्यं परिमाणजन्यं प्रचयजन्यञ्च, द्व्यणुकपरिमाणंप्रति परमाणुगतं द्वित्वं त्रसरेणुपरिमाणे च द्व्यणु-कगतं त्रित्वं कारणम्, तूलकपरिमाणविशेषे प्रचयाख्यशिथिलसं-योगः कारणम्, घटादिपरिमाणे कपालादिपरिमाणं कारणम्, आश्रयनाशः परिमाणनाशे हेतुः, अवयवोपचयापचयस्थलेऽसम-वायिकारणनाशात् पूर्व्वद्रव्यनाशस्तत्परिमाणनाश इति, पूर्व्व-घटादिसत्त्वे तदवयवे न घटाद्यन्तरोत्पत्तिसम्भवः मूर्त्तयोः समान-

वि० दृश्यताविरोधात् एकदा नानाद्रव्यवत्त्वस्यानुपलब्धिबाधितत्वाच्च· क्वचित् पूर्व्वावयविप्रत्यभिज्ञानन्तु साजात्यविषयकं सैवेयं दीपकलिकेतिवदित्यधिकमन्यत्रानुसन्धेयम् । * ।

पृथगिति प्रतीत्यसाधारणकारणं पृथक्त्वम्, तच्च सर्व्वेषु द्रव्येषु तिष्ठति, नित्यद्रव्यगतैकपृथक्त्वं नित्यम्, अनित्यगतन्त्वाश्रयनाशनाश्यम्, द्विपृथक्त्वादिकमपेक्षाबुद्धिजन्यं तन्नाशनाश्यम्, घटात् पृथक् घटोनेत्यादिप्रतीत्योर्वैलक्षण्यान्नान्योन्याभावेनास्य चरितार्थता, यदर्थकयोगे पञ्चमी सोऽर्थोनञर्थभेदाद्भिन्नोगुणान्तरमन्यथा घटोनेत्यत्रापि पञ्चम्यापत्तेरिति संक्षेपः । * ।

संयोगः सर्व्वद्रव्यवृत्तिर्गुणः, स त्रिविधः अन्यतरकर्म्मजोभयकर्म्मजसंयोगजभेदात्, तत्र श्येनशैलादिसंयोगः प्रथमः, मेषयोः संयोगोद्वितीयः, कपालतरुसंयोगजन्यो घटतरुसंयोगस्तृतीयः, क्रियाजन्यसंयोगोऽपि द्विविधः अभिघातनोदनभेदात, तत्र शब्दहेतुः संयोग आदिमः, तदहेतु र्द्वितीय इति संक्षेपः । * ।

विभागोऽपि नवद्रव्यवृत्तिर्विभक्तप्रत्ययासाधारणकारणम्,सोऽपि त्रिविधः, एकक्रियाजन्योभयक्रियाजन्यविभागजभेदात्, तत्राद्यः श्येनशैलाद्यो द्वितीयोमेषयोः तृतीयस्तु कारणमात्रविभागजन्यकारणाकारणविभागजन्यभेदाद् द्विविधः, तत्राद्योयथा प्रथमं कपाले कर्म्म, ततः कपालद्वयविभागः, ततोघटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेन कपालविभागेन कपालस्य देशान्तरविभागो जन्यते, ततो देशान्तरसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्म्मनाश इति, नच देशान्तरविभागे तत् कर्म्म कारणम्, आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्य कर्म्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वासम्भवात्, अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्, नच घटनाशात् पूर्व्वं कथं देशान्तरविभागो न जायते इति वाच्यमारम्भक-

वि० संयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। द्वितीयोयथा यत्र हस्तक्रियया हस्ततरुविभागस्ततस्तज्जनितः शरीरतरुविभागः तत्र शरीरतरुविभागे व्यधिकरणहस्तक्रिया न कारणम्, शरीरे तु तदानीं क्रिया नास्ति अवयविक्रियाया यावदवयवक्रियानियतत्वात्, तस्मात्तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागोजन्यत इति, अयं विभक्तोऽस्मादितिप्रत्ययसिद्धोविभागो न संयोगनाशेनान्यथासिद्ध इति संक्षेपः॥ ※॥

परापरव्यवहारासाधारणकारणे परत्वापरत्वे, तेच क्षित्यप्तेजोवायुमनःसु तिष्ठतः। ते च द्विविधे दैशिके कालिके च, तत्र दैशिकपरत्वे सूर्य्यसंयोगभूयस्त्वज्ञानं हेतुः, दैशिकापरत्वं प्रति सूर्य्यसंयोगाल्पत्वज्ञानं हेतुः, अत्रावधित्वार्थकद्वितीयापेक्षा, यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः, पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति व्यवहारः, एवं तदुभयं प्रति तदुभयाश्रये दिक्संयोगोऽसमवायिकारणम्, कालिकपरत्वापरत्वे प्रति तदाश्रये कालसंयोगोऽसमवायिकारणम्, एते तु प्राणिभिन्ने न तिष्ठत इति बहवः, यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठस्तत्र परत्वम्, यस्य च न्यूनः स कनिष्ठस्तत्रापरत्वम्, एते तु जन्यद्रव्य एवेति विश्वनाथः, तथा सूर्य्यक्रियापूर्व्वोत्पन्नत्वज्ञानं परत्वस्य कारणम्, तदनन्तरोत्पन्नत्वज्ञानमपरत्वस्य कारणम्, तादृशापेक्षाबुद्धिनाशात् परत्वापरत्वयोर्नाश इति संक्षेपः॥ ※॥

बुद्धिरात्मनि तिष्ठति, सा द्विविधा अनुभूतिस्मृतिभेदात्, अनुभूतिरपि काणादमते द्विविधा प्रत्यक्षलैङ्गिकभेदात्, प्रत्यक्षमपि षड्विधं घ्राणजरासनचाक्षुषस्पार्शनश्रावणमानसभेदात्, तत्रच घ्राणजं गन्धस्य तद्गतजातीनाञ्च भवति, रसस्य तद्गतजाती-

वि० नाञ्च रासनम्, उद्भूतरूप-तदधिकरणद्रव्य-योग्य*वृत्तिसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगद्रवत्वक्रियाजातीनां चाक्षुषप्रत्यक्षं भवति ॥ * ॥

उद्भूतरूपतद्गतजातिभिन्नानां चक्षुर्ग्राह्याणामुद्भूतस्पर्शस्य तद्गतजातीनाञ्च स्पार्शनप्रत्यक्षं भवति, नव्यानां मते वायोरपि, वल्लभाचार्य्यमते गुरुत्वस्यापि, बहिर्द्रव्यप्रत्यक्षं प्रति रूपस्य कारणत्वात् नीरूपस्य द्रव्यस्य स्पार्शनमपि न भवतीति प्राञ्चः, स्पार्शनप्रत्यक्षे उद्भूतस्पर्शोऽपि हेतुर्नातः प्रभायास्तद्गतगुणादीनाञ्च स्पार्शनम् ॥ * ॥

श्रावणप्रत्यक्षं शब्दस्य तद्गतजातीनाञ्च भवति ॥ * ॥

बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नानां तद्गतजातीनाञ्च मानसं प्रत्यक्षं भवति आत्मनस्तद्गतजातीनाञ्च विशेषगुणयोगेनैव, अहं सुखीत्याद्येव प्रत्यक्षं नत्वहमिति, आत्मगतैकत्वपरममहत्परिमाणयोरपि मानसं भवतीति तात्पर्य्यटीकाकृतः, निर्व्विकल्पकज्ञानजीवनयोनियत्नयोर्न लौकिकं मानसमस्ति तयोरतीन्द्रियत्वात् ॥ * ॥

अत्र यदिन्द्रियस्य ग्राह्यं यत्, तत्संसर्गाभावतदनुयोगिकभेदावपि तदिन्द्रियग्राह्यौ, प्रत्यक्षमात्रे महत्परिमाणं हेतुर्नातः परमाणुद्व्यणुकयोस्तद्गुणादेर्वा प्रत्यक्षम्, तत्रापि द्रव्यप्रत्यक्षे समवायसम्बन्धेन, द्रव्यसमवेतप्रत्यक्षे स्वसमवायिसमवायसम्बन्धेन, द्रव्यसमवेतसमवेतप्रत्यक्षे स्वसमवायिसमवेतसमवायसम्बन्धेन महत्त्वस्य हेतुता बोध्या, एवमन्यत्राप्यूह्यम्। षड्विधप्रत्यक्षे इन्द्रियं करणम्, तदपि षड्विधं घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात्, इन्द्रियत्वन्तु अखण्डोपाधिरिति न्यायसूत्रवृत्तिकारः, शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वमित्यन्ये, प्रत्यक्षं फलम्, तल्लक्षणन्तु साक्षात्कारत्वजातिवि-

---

* अत्र योग्यवृत्तित्वस्य संख्यादिद्वारकसम्बन्धो द्वन्द्वसमाससामर्थ्यात्।

वि॰ शिष्टत्वं ज्ञानाकरणकज्ञानत्वं वा, अत्र व्यापारोविषयेन्द्रियसम्बन्धः, सोऽपि षड्विधः संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-कर्णविवरावच्छिन्नसमवाय समवेतसमवाय-विशेषणताभेदात्, तत्र संयोगेन द्रव्यस्य, संयुक्तसमवायेन द्रव्यसमवेतानाम्, संयुक्तसमवेतसमवायेन द्रव्यसमवेतसमवेतानां गुणकर्म्मगतजातीनाम्, कर्णविवरावच्छिन्नसमवायेन शब्दानाम्, समवेतसमवायेन शब्दगतजातीनाम्, विशेषणतया अभावानां प्रत्यक्षं भवति, विशेषणताऽपि संयुक्तविशेषणता-संयुक्तसमवेतविशेषणता-संयुक्तसमवेतसमवेतविशेषणता-श्रोत्रावच्छिन्नविशेषणता-श्रोत्रावच्छिन्नसमवेतविशेषणता-विशेषणविशेषणतादिभेदेन नानाविधा, तयाच द्रव्य-तत्समवेत-तत्समवेतवृत्तीनामभावानामाकाशगतस्य शब्दाभावस्य शब्दवृत्तीनां कत्वाद्यभावानामभाववृत्तीनामभावानाञ्च प्रत्यक्षं भवतीति। यत्र घटस्य मध्यदेशावच्छेदेनालोकसंयोगोबहिर्देशावच्छेदेन च चक्षुःसंयोगस्तत्र घटादेस्तद्गतगुणकर्म्मसामान्यानां तद्गताभावानाञ्च प्रत्यक्षं न भवतीत्यतश्चाक्षुषप्रत्यक्षकारणतावच्छेदककोटौ चक्षुःसंयोगांशे आलोकसंयोगावच्छिन्नत्वं निवेशनीयम्, एवमुद्भूतरूपावच्छिन्नत्वं महत्त्वावच्छिन्नत्वञ्च चक्षुःसंयोगे निवेशनीयं तेन परमाणौ चक्षुःसंयोगदशायां तद्गतायाः सत्तायाः तदीयरूपगतस्य नीलत्वादिसामान्यस्य च न चाक्षुषम्, नवा वायौ चक्षुःसंयोगदशायां तद्गतायाः सत्तायाः तत्स्पर्शगतगुणत्वादिसामान्यस्य च चाक्षुषम्, प्राञ्चस्तु अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्, साच अत्र यदि प्रतियोगी स्यात्तदा उपलभ्येतेत्याकारकतर्कसहकृता प्रतियोग्यग्रहाभावात्मिका,अतो नान्धकारादौ घटाभावादिचाक्षुषं तत्र तादृशतर्कस्यासम्भवादित्याहुः। प्रत्यक्षं लौकिकालौकिकभेदेनापि द्विविधम्, तत्रालौकिकसन्निकर्षजन्यं यत्प्रत्यक्षं तदलौकिकम्, अलौकिकसन्निकर्षश्च त्रि-

वि० विधः सामान्यलक्षणाज्ञानलक्षणायोगजधर्म्मभेदात्, तत्र सामान्यलक्षणा घटत्वादिसामान्यज्ञानं तेन निखिलतदाश्रयस्यालौकिकं प्रत्यक्षं भवति, ज्ञानलक्षणासन्निकर्षेण तु रज्ज्वादौ सर्पत्वादिप्रकारकं प्रत्यक्षम्, अन्यथा सर्पत्वादेस्तदानीमसन्निकृष्टतया भ्रमे तद्भानानुपपत्तेः, एवं सुरभिचन्दनमिति चाक्षुषे सौरभत्वादेरपि ज्ञानलक्षणयैव भानम्, योगजधर्म्मस्तु द्विविधः युक्तयुञ्जानयोगिद्वैविध्यात्, तत्र योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते तस्य ध्यानं विनैव सर्व्वेषु पदार्थेषु सदा प्रत्यक्षम्, युञ्जानस्तु विषयव्यावृत्तमानसः, तस्य तु ध्यानसहकारेणैव सर्व्वत्र प्रत्यक्षं भवतीति संक्षेपः ॥ * ॥

लैङ्गिकमनुमितिरूपं यज्ज्ञानं तत्र व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः । व्याप्तिस्तु साध्यवदन्यावृत्तित्वरूपा स्वव्यापकसाध्यसामानाधिकरण्यरूपा वा, व्यतिरेकव्याप्तिस्तु साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा, तत्र व्याप्तिप्रत्यक्षे व्यभिचारज्ञानाभावः सहचारज्ञानञ्च हेतुः, तत्र व्याप्तिज्ञानं वह्निव्याप्योधूम इत्याद्याकारकम्, परामर्शस्तु वह्निव्याप्यधूमवान् पर्व्वत इत्याद्याकारकं ज्ञानम्, पक्षताऽपि अनुमितौ हेतुः, सा च सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपा, तेन पक्षे साध्यनिश्चयदशायां सिषाधयिषामन्तरेण नानुमितिः, एवमनुमित्साविरहविशिष्टप्रत्यक्षसामग्री अनुमितौ कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका, एवं प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिकेत्यन्यत्र विस्तरः ॥ * ॥

अनुमितितत्कारणज्ञानान्यतरविरोधिज्ञानविषयो हेतुदोषस्तद्वान् हेतुर्दुष्टः, स च हेत्वाभास इत्युच्यते, स तु पञ्चविधः सव्यभिचारविरुद्धासिद्धसत्प्रतिपक्षबाधितभेदात्, तत्र सव्यभिचारस्त्रिविधः साधारणासाधारणानुपसंहारिभेदात्, तत्र स-

वि० पक्षविपक्षवृत्तिर्हेतुः साधारणः यथा द्रव्यं सत्त्वादित्यादिः, स पक्षविपक्षव्यावृत्तो हेतुरसाधारणः यथा शब्दोऽनित्यः शब्दत्वादित्यादिः, केवलान्वयिपक्षकोऽनुपसंहारी सर्व्वमनित्यं प्रमेयत्वादित्यादिः ॥ * ॥

साध्यवदवृत्तिर्हेतुर्विरुद्धः गोत्ववान् अश्वत्वादित्यादौ, असिद्धस्त्रिविधः आश्रयासिद्ध-स्वरूपासिद्ध-व्याप्यत्वासिद्धभेदात्, यत्र पक्षोऽसिद्धस्तत्र पक्षासिद्धिः काञ्चनमयपर्व्वतो वह्निमानित्यादौ, यत्र पक्षो न हेतुमान् तत्र स्वरूपासिद्धिः ह्रदोद्रव्यं धूमादित्यादौ, यत्र व्यर्थविशेषणघटितो हेतुस्तत्र व्याप्यत्वासिद्धिः वह्निमान् नीलधूमादित्यादौ, यत्र पक्षे साध्यपरामर्शस्तदभावपरामर्शश्च वर्त्तते स सत्प्रतिपक्षित इति प्राञ्चः, साध्याभावव्याप्यवत्पक्षादिः सत्प्रतिपक्षस्तत्रत्यो हेतुः सत्प्रतिपक्षित इति तु नव्याः, साध्याभाववत्पक्षादिर्बाधस्तत्रत्यो हेतुर्बाधितः उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ, केचिद्वैशेषिकानुयायिनः सव्यभिचारविरुद्धासिद्धास्त्रय एव हेत्वाभासा इत्याहुः, "अनध्यवसितोऽपि षष्ठो हेत्वाभास इति केचित्, यथाहुः साध्यासाधकः पक्ष एव वर्त्तमानो हेतुरनध्यवसित इति तस्यासाधारणादिषु यथासम्भवमन्तर्भावान्न पञ्चभ्योऽतिरेक इति" इतितु वरदराजेन तार्किकरक्षाव्याख्याने उक्तम् ॥ * ॥

वरदराजेनानुमानस्य त्रैविध्यमप्युक्तं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्, तत्रेदं वाच्यं ज्ञेयत्वादित्यादिकं केवलान्वयि, पृथिवीतरेभ्योभिद्यते गन्धवत्त्वादित्यादिकं केवलव्यतिरेकि, वह्निमान् धूमादित्यादिकमन्वयव्यतिरेकीति ॥ * ॥

स्वार्थपरार्थभेदेनापि द्विविधमनुमानं तत्र परार्थं न्यायसाध्यम्, न्यायश्च पञ्चावयवात्मकवाक्यव्यूहः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति पञ्चावयवाः, पर्व्वतोवह्निमानित्यादिवाक्यं प्रतिज्ञा,

वि॰ धूमादित्यादिकं हेतुः,योयोधूमवान् स वह्निमान् यथा महानस-मित्यादिकमुदाहरणम्, वह्निव्याप्यधूमवानयमित्यादिकमुपनयवा-क्यम्,तस्माद्वह्निमानित्यादिकं निगमनवाक्यमित्यन्यत्र विस्तरः॥✻॥

उपमितिशाब्दबोधयोरनुमितावन्तर्भावस्तत्प्रकारस्तु पूर्व्वं प्रप-ञ्चित इति विरम्यते ॥ ✻ ॥

स्मृतिस्तु पूर्व्वानुभवजनितसंस्काराधीनोज्ञानविशेषः, तत्र उ-पेक्षानात्मकनिश्चयः कारणम्, भावनाख्यसंस्कारोव्यापारः ॥ ✻ ॥

ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगोहेतुर्नातः सुषुप्तिप्राक्का-लोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च मानसप्रत्यक्षम्, तदानीं पु-रीतति वर्त्तमानस्य मनसस्त्वचा सह संयोगाभावात्, नच रासनादिकाले त्वङ्मनःसंयोगसत्त्वे ज्ञानयौगपद्यापत्तिरिति वाच्यमनायत्या रासनादिसामग्र्याःस्पार्शनं प्रति प्रतिबन्धकत्वस्य स्वीकरणीयत्वात्, पक्षधरमिश्रास्तु सुषुप्तिदशायामक्षप्रत्यक्षवार-णाय चर्म्ममनःसंयोगस्य ज्ञानसामान्यं प्रति हेतुत्वमिति न पूर्व्वोक्तप्रतिबन्धकताकल्पनमित्याहुः ॥ ✻ ॥

विद्याऽविद्याभेदेनापि बुद्धिर्द्विविधा, तत्र विद्या प्रमा भ्रमसा-मान्यभिन्नं ज्ञानम्, अविद्या अप्रमा तदभाववति तत्प्रकारकं ज्ञा-नम्, अविद्याऽपि द्विविधा संशयविपर्य्यासभेदात्, तत्रैकधर्म्मिणि विरुद्धभावाभावप्रकारकज्ञानं संशयः, सच साधारणधर्म्मज्ञा-नजन्यासाधारणधर्म्मज्ञानजन्यविप्रतिपत्तिवाक्यज्ञानजन्यभेदात् त्रिविधः, विपर्य्यासो निश्चयात्मकोभ्रमः,देहे आत्मनोऽभेदनिश्चयः गौरोऽहमित्यादिः पीतः शङ्ख इत्यादिश्च, तत्राविद्यायां दोषः कारणम्,सतु पित्तदूरत्वादिरूपो नानाविधः,प्रमायान्तु गुणः का-रणम्,तत्र विशेषणवताविशेष्येण सन्निकर्षः प्रत्यक्षे गुणः,साध्यवि-शिष्टपक्षे परामर्शोऽनुमितौ गुण इति, प्रमात्वं स्वतोग्राह्यमिति गुरुभट्टमुरारिमिश्राः, तन्न सम्यक् तथा सति प्रमात्वस्य संश-

वि० यानुपपत्तेः,किन्तु इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्याद्यनुमानं प्रमात्वग्राहकमिति संक्षेपः ॥ ✱ ॥

सुखन्तु सर्व्वेषामभिलाषविषयः धर्म्मेण जायते, तत्रैहिकं सुखं दुःखानुविद्धम्, पारत्रिकं स्वर्गसुखन्तु न दुःखावच्छेदकशरीरावच्छिन्नमिति विशेषः ॥ ✱ ॥

दुःखन्तु सर्व्वेषां द्वेषविषयः अधर्म्मेण जायते नारकिणां यत् दुःखं तन्न सुखावच्छेदकशरीरावच्छिन्नमिति विशेषः ॥ ✱ ॥

इच्छा द्विविधा फलेच्छा उपायेच्छा च,तत्र फलं सुखं दुःखनिवृत्तिश्च,तत्र फलेच्छां प्रति फलज्ञानं कारणम्, उपायोभोजनौषधपानादिः, तद्विषयिणीच्छा तु इष्टस्य सुखदुःखनिवृत्त्यन्यतरस्य साधनताज्ञानजन्या,एवं तदुपायादावपि तत्साधनताज्ञानादिच्छा भवति, प्रवृत्तिहेतुरिच्छा चिकीर्षा, सा च कृतिसाध्यत्वप्रकारकेच्छा, तत्र च कृतिसाध्यत्वज्ञानम्, इष्टसाधनताज्ञानम्, बलवदिष्टसाधनत्वज्ञानाभावश्च कारणम्, अतोन समुद्रलङ्घनतृष्यापर्य्यटनादौ चिकीर्षा नवा मधुविषसंपृक्तान्नभोजने क्षुधातुराणां चिकीर्षा, केचित्तु बलवद्द्विष्टासाधनत्वज्ञानं चिकीर्षाहेतुरित्याहुः ॥ ✱ ॥

दुःखद्वेषे दुःखज्ञानं दुःखोपायद्वेषे तु दुःखसाधनताज्ञानं कारणम्, बलवदिष्टसाधनताज्ञानञ्च द्वेषस्य प्रतिबन्धकं तेन नान्तरीयकदुःखजनके पाकादौ न द्वेष इति ॥ ✱ ॥

प्रयत्नस्त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् तत्र प्रवृत्तिं प्रति चिकीर्षा कृतिसाध्यत्वज्ञानमिष्टसाधनताज्ञानमुपादानप्रत्यक्षञ्च हेतुः, निवृत्तिं प्रति द्विष्टसाधनताज्ञानं द्वेषश्च कारणम्, जीवनयोनियत्नस्तु जीवनादृष्टजन्यः शरीरे प्राणसञ्चारे कारणम्, सतु अतीन्द्रियः, स सविषयक इति केचित्, ज्ञानेच्छाकृतिद्वेषाः सविषयका इति बहवः। भावनाख्यसंस्कारोऽपि सविषयकइत्यन्ये इति संक्षेपः ॥ ✱ ॥

वि० गुरुत्वं क्षितिजलयोस्तिष्ठति, तत्तु अतीन्द्रियम्, तन्नित्ये नित्यम्, अनित्येऽनित्यम्, आद्यपतनक्रियायां तदसमवायिकारणम्, द्वितीयपतनादौ तु वेगस्यासमवायिकारणत्वमिति, वल्लभाचार्य्यमतेऽस्य स्पार्शनप्रत्यक्षं भवतीति ॥ * ॥

द्रवत्वं क्षितिजलतेजःसु तिष्ठति, तद्द्विविधं सांसिद्धिकं नैमित्तिकञ्च, तत्राद्यं जल एव, वह्निसंयोगादिनिमित्तादुत्पन्नं नैमित्तिकन्तु घृतादिपृथिवीषु सुवर्णादितेजःसु च, जलपरमाणौ द्रवत्वं नित्यं तद्भिन्नेऽनित्यम्, स्यन्दनाख्यकर्म्मणि द्रवत्वमसमवायिकारणम्, सक्तुकादीनां संयोगविशेषे पिण्डीकरणाख्ये स्नेहसहितं द्रवत्वं निमित्तकारणमतो द्रुतसुवर्णादिना हिमकरकादिना च न सक्तुकादीनां संग्रहः ॥ * ॥

स्नेहस्तु जल एव वर्त्तते, परमाणौ स नित्यः, अन्यत्रानित्यः, तैलान्तर्वर्त्तिनि जले प्रकृष्टस्नेहोऽवर्त्तते ऽतस्तज्जलं न वह्नेः प्रतिकूलम्, अपकृष्टस्नेहयुक्तस्यैव वह्निनाशकत्वमिति, स्निग्धं जलमिति-प्रतीतिसिद्धोऽयं गुणोद्रवत्वेन नान्यथासिद्धः, हिमकरकादौ द्रवत्वानुपलम्भेऽपि स्नेहस्योपलम्भात् द्रवत्ववति सुवर्णादावनुपलम्भाच्चेति ॥ * ॥

संस्कारस्त्रिविधः वेगस्थितिस्थापकभावनाभेदात्। तत्र वेगः क्षितिजलतेजोवायुमनःसु तिष्ठति, स्थितिस्थापकः क्षितौ, केषाञ्चिन्मते पृथिव्यादिचतुष्के स वर्त्तते, भावनाख्यसंस्कारस्तु जीवात्मनि जायते, नित्यः संस्कारोनास्ति। वेगस्त्वावर्द्द्विविधः कर्म्मजवेगजभेदात्, तत्र शरादौ नोदनजनितेन कर्म्मणा वेगोजन्यते तेन च पूर्व्वकर्म्मनाशादुत्तरं कर्म्म, एवमुत्तरोत्तरमपि, वेगं विना कर्म्मणः कर्म्मप्रतिबन्धकत्वात् पूर्व्वकर्म्मनाश उत्तरकर्म्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनिते घटे वेगोजन्यते स वेगजोवेग इति। स्थितिस्थापकसंस्कारस्त्वतीन्द्रियः

वि० आत्मक्षणादीनां परित्यागे यत्पूर्व्वदेशागमनं तत्र स्थितिस्थापको हेतुरिति। भावनाख्यसंस्कारस्तु उपेक्षानात्मकनिश्चयेन जन्यते, स्मरणे प्रत्यभिज्ञायाञ्चायं हेतुः, अयमपि संस्कारोऽतीन्द्रियश्चरमफलनाश्यः क्वचित् रोगादिनाश्यः क्वचित् कालनाश्यश्च, केचित्तु समानविषयकं स्मरणमेव संस्कारनाशकमतएव "जायते च पुनः पुनः स्मरणाद्दृढतरसंस्कारः" इतिदीधितिरपि साधु सङ्गच्छते इत्याहुः॥ ※ ॥

धर्म्मोऽपि जीवे तिष्ठति सर्व्वेषामैहिकपारत्रिकाणां सुखानामसाधारणकारणम्, यागदानादिक्रियाव्यापारतया स कल्प्यते अन्यथा कर्म्मणामाशुविनाशित्वात् व्यापारान्तराभावाच्च कालान्तरभाविफलजनकत्वं न स्यात्, ननु ध्वंस एव कर्म्मणां व्यापारोऽस्तु, नच प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वम्, सर्व्वत्र तथात्वे मानाभावात्, नच कर्म्मणामविच्छिन्ना फलधारा स्यात् ध्वंसस्याविनाशित्वादिति वाच्यं कालविशेषस्य सहकारित्वोपगमादिति चेन्न गङ्गास्नानादिस्थलेऽनन्तजलसंयोगध्वंसानां व्यापारत्वकल्पनामपेक्ष्यापूर्व्वस्यैकस्य लाघवेन कल्पयितुमुचितत्वात् धर्म्मादीनां "धर्म्मः क्षरति कीर्त्तनात्" इत्याद्यागमसिद्धत्वाच्चेति संक्षेपः, धर्म्मोनित्योनास्ति, अयमतीन्द्रियो मिथ्याज्ञानजन्यवासनाजन्यश्च नातस्तत्त्वज्ञानिनां यागादिना धर्म्मोत्पत्तिः, एवमयं कर्म्मनाशाजलस्पर्शादिनाश्य इति ॥ ※ ॥

अधर्म्मस्तु निषिद्धकर्म्मणा जन्यते, दुःखानामसाधारणकारणं जीववृत्तिः, प्रायश्चित्तादिना नाश्यते, अयमप्यतीन्द्रियोऽनित्यो वासनाजन्यश्चेति, प्रारब्धानां धर्म्माधर्म्मयोः भोगादेव क्षयः, तदितरेषान्तु तत्त्वज्ञानादपिनाशः, तत्तच्छरीरभोगजनकं यत् कर्म्म तत् प्रारब्धमुच्यते, तदभिप्रायकमेव "नाभुक्तं क्षीयते कर्म्म" इति गीतावचनं वेदितव्यमिति ॥ ※ ॥

वि० शब्द आकाशे तिष्ठति, स द्विविधो ध्वनिवर्णभेदात्, ध्वन्यात्मक-शब्दस्तु भेरीदण्डाद्यभिघातजन्यः, वर्णश्च कण्ठताल्वभिघातादि-जन्यः, सोऽपि स्वरव्यञ्जनभेदाद्द्विविधः, स्वरा अकारादयः षोड-श, कादयो व्यञ्जनसंज्ञकाश्चतुस्त्रिंशत्, शब्दस्तु श्रोत्रोत्पन्नो गृह्यते श्रवणेन्द्रियेण, तदुत्पत्तिस्तु वीचीतरङ्गन्यायेन भवति तथाहि आद्यशब्दस्य वहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेन शब्देन जन्यते तेन चापरस्तद्व्यापक एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति। केषा-ञ्चिन्मते कदम्बगोलकन्यायात् शब्दोत्पत्तिस्तथाहि आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा उत्पद्यन्ते इति, एतन्मतन्तु बहुशब्दकल्पनागौरवग्रस्तमिति। क उत्पन्नः कोविनष्ट इत्युत्पादविनाशप्रतीतेः शब्दस्यानित्यत्वम्, तत्र उत्तरशब्देन पूर्व्व-शब्दस्य नाशः, अन्त्यशब्दस्योपान्त्यशब्दनाश्यः क्षणिक इति वदन्ति। नच सोऽयं क इति प्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वमिति वाच्यं प्रत्यभिज्ञायाः साजात्यविषयकत्वात् यदेवौषधं मया कृतं तदेव चैत्रेणापि कृतमित्यादिवदित्यन्यत्र विस्तर इति गुणनिरूपणम्॥०॥

कर्म्म पञ्चविधमुत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात्, कर्म्मत्वजातिः प्रत्यक्षसिद्धा, एवमुत्क्षेपणत्वादिकमपि, भ्रमण-रेचनस्यन्दनोर्द्ध्वज्वलनतिर्य्यग्गमनान्यपि गमन एवान्तर्भवन्ति इति न विभागन्यूनतेति। कर्म्म क्षित्यादिचतुष्के मनसि च तिष्ठति, इदञ्च स्वजन्योत्तरसंयोगेन नाश्यते, नित्यं कर्म्म नास्तीति संक्षेपः। इति कर्म्मनिरूपणम्॥ ❋ ॥

सामान्यं द्रव्यादित्रिके तिष्ठति नित्यञ्च, तच्च द्विविधं परापर-भेदात्, परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं सर्व्वजा-त्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वम्, द्रव्यत्वपृथिवी त्वादीनान्तु परत्वमपरत्वञ्च, घटत्वादिजातेरपरत्वमेव। जाति-बाधकानि आचार्य्योक्तानि यथा।

वि० "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" ॥

इति। एकव्यक्तिकत्वादाकाशत्वादिकं न जातिः, तुल्यव्यक्तिकत्वात् घटत्वं कलसत्वञ्च न जातिद्वयम्, सङ्कीर्णत्वाद्भूतत्वं मूर्त्तत्वञ्च न जातिः, अनवस्थाभयात् सामान्यत्वं न जातिः, व्यावृत्तस्वभावस्य विशेषपदार्थस्य रूपहानिः स्यादतो विशेषत्वं न जातिः, समवायसम्बन्धाभावात् समवायो न जातिरिति सामान्यनिरूपणम्॥✱॥

सङ्क्षिप्तत्वे सत्येकमात्र समवेतत्वं विशेषत्वम्, एकाश्रितगुणकर्म्मवारणाय सत्यन्तम्,सामान्यवारणाय विशेष्यदलम्, घटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः परमाणूनाञ्च परस्परंभेदकोविशेष एव, सतु स्वत एव व्यावृत्तस्तत्र विशेषान्तरापेक्षा नास्तीति, विशेषश्च नित्यद्रव्येषु तिष्ठति नित्यश्चेति संक्षेपः, विशेषपदार्थस्तु दर्शनान्तरकारैर्न मन्यते अतएवास्य दर्शनस्य विशेषदर्शनेति संज्ञा, एतन्मतानुयायिनामपि वैशेषिकेतिसंज्ञा यौगिकीति विशेषपदार्थनिरूपणम् ॥ ✱ ॥

अवयवावयविनो र्गुणगुणिनोः क्रियाक्रियावतो र्जातिजातिमतो र्नित्यद्रव्यविशेषयोश्च सम्बन्धः समवायः, सच लाघवादेक एव सिद्धः, तत्रानुमानं प्रमाणं तथाहि गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डीपुरुष इति विशिष्टबुद्धिवत्, नच स्वरूपसम्बन्धेनार्थान्तरमिति वाच्यम्, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकस्य समवायस्य सिद्धिः, वायौ रूपसमवायस्य सत्त्वेऽपि रूपाभावान्न वायूरूपवानिति प्रतीतिरिति, समवायश्च विशेषणतासम्बन्धेन द्रव्यादिपञ्चके तिष्ठति, अयमतीन्द्रियः नित्यत्वे सति चेतनान्यभावत्वात् कालादिवदित्यनुमानात् समवायस्यातीन्द्रियत्वसिद्धिरिति वैशेषिकाः इति समवायनिरूपणम् ॥ ✱ ॥

वि० अभावो द्विविधः संसर्गाभावान्योन्याभावभेदात्, संसर्गाभावोऽपि त्रिविधः प्रागभावध्वंसात्यन्ताभावभेदात्, द्रव्यादिषट्कभिन्नत्वमभावत्वम्, भेदभिन्नाभावत्वं संसर्गाभावत्वम्, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्, विनाश्यभावत्वं प्रागभावत्वम्, जन्याभावत्वं ध्वंसत्वम्, सदातनसंसर्गाभावत्वमत्यन्ताभावत्वम्, ध्वंसत्वादिकमखण्डोपाधिरिति केचित्। अभावस्तु विशेषणतासम्बन्धेन तिष्ठति, अभावानामधिकरणात्मकत्वमिति मीमांसकाः, तन्न तथा सति घटाभाववद्भूतलमित्याधाराधेयभावगाहिप्रतीत्यनुपपत्तेस्तत्तच्छब्दैरसमन्वाद्यभावानां प्रत्यक्षानुपपत्तेश्च तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वात्, यत्र भूतले घटादिकमपसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकत्वात् न घटकाले घटात्यन्ताभावबुद्धिः, तत्तत्कालीनभूतलादिस्वरूपस्यैव तत्तदभावसम्बन्धत्वोपगमात्। तत्रोत्पादविनाशशाली सामयिकनामा चतुर्थोऽयं संसर्गाभाव इति केचित् इत्यन्यत्र विस्तर इत्यभावपदार्थनिरूपणम्॥ ✻॥

एतेषु सप्तसु पदार्थेष्वेव गोतमोक्ताः षोडशपदार्था अन्तर्भवन्ति, तथाहि इन्द्रियरूपं प्रत्यक्षप्रमाणं द्रव्य एवान्तर्भवति, व्याप्तिज्ञानसादृश्यज्ञानपदरूपाणि अनुमानोपमानशब्दप्रमाणानि गुणे, आत्मशरीरेन्द्रियमनोरूपाणि प्रमेयाणि द्रव्ये, रूपादयोऽर्था गुणे, बुद्धिर्गुणे, प्रवृत्तिर्यत्नगुणे, रागद्वेषश्च मात्मकर्मोरूपा दोषा गुणे, शरीरसंयोगरूपप्रेत्यभावश्च गुणे, सुखदुःखभोगात्मकं फलं गुणे, दुःखं गुणे, आत्यन्तिकदुःखध्वंसरूपापवर्गोऽभावेऽन्तर्भवति। संशयाख्यज्ञानविशेषो गुण एव, प्रवृत्तिहेतुरिच्छाविषयरूपं प्रयोजनं यथायथं द्रव्यगुणकर्माभावपदार्थेषु अन्तर्भवति, साध्यसाधनोभयसाध्याभावसाधनाभावद्वयान्यतरवत्त्वेन वादिप्रतिवाद्युभयनिश्चयविषयरूपो दृष्टान्तो यथायथं द्रव्यादिषु अन्त-

वि॰ भवति, शास्त्रितार्थनिश्चयरूपः सिद्धान्तोगुणपदार्थः, शब्दविशेषात्मका अवयवा गुणेष्वन्तर्भवन्ति, आपत्त्याख्यमानसज्ञानविशेषात्मकस्तर्कोगुणपदार्थः, निर्णयोज्ञानविशेषोगुण एव, वाक्यविशेषरूपाः वादजल्पवितण्डा गुणा एवान्तर्भवन्ति, दुष्टहेतुरूपा हेत्वाभासा यथायथं द्रव्यादिष्वन्तर्भवन्ति, छलजात्योर्वाक्यविशेषरूपतया गुणत्वमेव, प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासन्न्यासहेत्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्तानां निग्रहस्थानानां शब्दरूपतया गुणेऽन्तर्भावः, अननुभाषणाज्ञानाप्रतिभाविक्षेपाणां अभावेऽन्तर्भावः। मतानुज्ञाया वाक्यरूपतया गुणेऽन्तर्भावः, पर्य्यनुयोज्योपेक्षणस्याभावेऽन्तर्भावः, निरनुयोज्यानुयोगस्य वाक्यरूपतया गुणेऽन्तर्भावः, सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गस्यापसिद्धान्तस्य गुणेऽन्तर्भावः, हेत्वाभासाख्यनिग्रहस्थानस्य दुष्टहेतुरूपत्वे यथायथं द्रव्यादिष्वन्तर्भावः, दोषोद्भावनरूपत्वेतु गुण एवान्तर्भाव इति संक्षेपः॥ ✳॥

तुतातभट्टमतानुयायिनस्तु द्रव्यगुणकर्म्मसामान्यरूपाश्चत्वार एव पदार्था इति वदन्ति। द्रव्यगुणकर्म्मसामान्यसङ्ख्यासमवायसादृश्यशक्तयोऽष्टौ पदार्था इति गुरवः॥ ✳॥

दीधितिकृतस्तु पदार्थतत्त्वनिरूपणाख्ये प्रकरणे कतिपयान् कणादमहर्षिप्रोक्तान् पदार्थान् खण्डयन्तिस्म तदनुक्तान् कतिपयानतिरिक्तानङ्गीकृतवन्तश्च, तदिह संक्षेपेण प्रदर्श्यते। दिक्कालौ नेश्वरादतिरिक्तौ, प्राच्यां घट इदानीं घट इत्यादिव्यवहारस्य ईश्वरात्मकविभुविषयकत्वेनैवोपपत्तेः, नच तयोर्भिन्नविषयकत्वमनुभवसिद्धमिति वाच्यं तथा सति प्राच्यां घटः प्रतीच्यां घटः इदानीं घटः तदानीं घट इत्यादेरपि भिन्नभिन्नविषयकत्वानुभवात् कालदिशोरपि बहुत्वाङ्गीकारप्रसङ्गात्, तथाच उपाधिभेदादेक-

वि० या दिशा एकेन कालेन च यथा भवतां बहूनां व्यवहाराणामुपपत्तिस्तथाऽस्माकमपि एकेनेश्वरेणागमानुमानाभ्यां सिद्धेन सर्व्वेषामेव तादृशव्यवहाराणामुपाधिभेदादुपपत्तिः सम्भवति, सूर्य्यक्रियादौ स्वसंयुक्तेश्वरसंयोगितपनाश्रितत्वादिसम्बन्धेन घटादेः स्वत्वसम्भवेन तत्सम्बन्धघटकतयाऽप्यतिरिक्तकालाद्यसिद्धेः। अथवा क्षणा एवातिरिक्ताः इदानीमित्यादिव्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्म्मणः क्षणत्वासम्भवात् भाविकर्म्मान्तरजन्यविभागान्तरप्रागभावावच्छिन्नस्य कर्म्मणः क्षणचतुष्टयादिस्थायित्वेन तादृशस्योपाधित्वासम्भवात्, नच विभागे स्वजन्यत्वं विवक्षणीयम्, स्वत्वाननुगमादननुगमापत्तेः, विभागजननादिदशायामुपाध्यन्तरस्य वाच्यतया तावताप्यननुगमाच, एवचोपाधीनामतिरिक्तानां क्षणिकपदार्थस्वरूपाणां क्षणानामवश्याभ्युपेयत्वा तैरेव तादृशाः सर्व्वे व्यवहारा उपपादनीयाः किमतिरिक्तेन कालेनेति ॥ ॥

एवं शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वं कल्पनीयं किमतिरिक्ताकाशकल्पनेन, नच जीवात्मगतादृष्टस्य शब्दकारणत्वात् जीवात्मनामपि शब्दनिमित्तकारणत्वेन विनिगमनाभाव इति वाच्यम्, अदृष्टस्य शब्दहेतुत्वेऽपि तदाश्रयस्य तद्धेतुत्वे प्रमाणाभावात्, अस्मदादेः शब्दाधिकरणत्वेऽहं शब्दवानित्यादिप्रत्ययापत्तेश्च, एवं तत्तत्कर्णविवराद्युपाधिभेदेनेश्वरस्यैव श्रोत्रेन्द्रियत्वं नतु तदनुरोधेनाकाशः कल्पनीयः ॥ ॥

मनोऽपि त्रसरेण्वात्मकं भूतमेव, अदृष्टविशेषस्य प्रतिबन्धकतया च न ज्ञानयौगपद्यमन्यथा तवापि रासनादिकाले स्पार्शनवारणासम्भवात् ॥ ॥

परमाणुद्व्यणुकयोर्मानाभावः त्रुटावेव विश्रामात्, त्रसरेणुः

वि॰ सावयवत्वाच्चाक्षुषद्रव्यत्वात् घटवत् त्रसरेणोरवयवाः सावयवा महदवयवत्वात् कपालवदित्यादेरप्रयोजकत्वात्, अन्यथा तादृशरीत्याऽनवस्थितावयवपरम्परासिद्धिप्रसङ्गात्, नचाणुपरिमाणासत्त्वेऽणुव्यवहारानुपपत्तिरतस्तत् परिमाणं तदधिकरणद्रव्यञ्चावश्यमेवाङ्गीकार्य्यमिति वाच्यं तदपेक्षयाऽपकृष्टपरिमाणवत्त्वस्यैव तदपेक्षयाऽणुत्वव्यवहारस्य विषयत्वात्, अन्यथा नारिकेलादामलकमणु इत्यादिव्यवहारः कथं स्यादिति । ※ ।

ईश्वरे किमपि परिमाणं नास्ति, द्रव्यत्वस्य परिमाणव्याप्यत्वासिद्ध्या द्रव्यत्वेन हेतुना त्रुटित्वादेरिव परिमाणस्यापि नेश्वरे सिद्धिरिति । ※ ।

एवमनुद्भूता गन्धरसरूपस्पर्शा अपि न सन्ति, तथा सति मूर्त्ताभावस्येव रूपाद्यभावस्याप्ययोग्यप्रतियोगिकत्वेनायोग्यतया वायौ रूपं नास्तीति प्रत्यक्षस्यानुपपत्तेः। नच समवेतद्रव्यं प्रति स्पर्शवत्त्वेन समवायिकारणत्वात् चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यक इति वाच्यमतीन्द्रियानन्तस्पर्शकोटिकल्पनामपेक्ष्य लाघवान्मूर्त्तत्वेनैव द्रव्यसमवायिकारणतायाः कल्पयितुमुचितत्वात्, मूर्त्तत्वन्तु स्पन्दसमवायिकारणतावच्छेदकतया सिद्धं जातिविशेषः नच भूतत्वेन सङ्कीर्णत्वान्मूर्त्तत्वं न जातिरिति वाच्यं मूर्त्तत्वभूतत्वयोर्घटत्वकलसत्वयोरिवाभिन्नत्वात्, नचेदं भूतं मूर्त्तञ्चेति सह प्रयोगस्यानुपपत्तिः, तत्र भूतपदस्य मूर्त्तपदस्य वा तत्पदवाच्ये लाक्षणिकत्वात्, समवेतेन्द्रियग्राह्यगुणवद्वृत्तिद्रव्यत्वव्याप्य जातिमत्त्वमेव भूतत्वमित्यपि केचित्, नच मूर्त्तत्वेन द्रव्यसमवायिकारणत्वेऽन्त्यावयविना घटादिनाऽपि द्रव्यान्तरस्यारम्भप्रसङ्ग इति वाच्यं तत्रासमवायिकारणस्य संयोगविशेषस्याभावेन द्रव्यान्तरारम्भासम्भवात् अन्यथा स्पर्शवत्त्वेन हेतुतामतेऽपि तद्दोषस्यानिरासादिति । ※ ।

वि॰ एवं पृथक्त्वमपि न गुणान्तरम्, अन्योन्याभावेनैवायमस्मात् पृथगितिव्यवहारोपपत्तेः, नचान्योन्याभावस्य सावधित्वाभावात् सावधित्वविषयकतादृशव्यवहारस्य कथं तेनोपपत्तिरिति वाच्यं तादृशव्यवहारस्य सावधित्वविषयकत्वे प्रमाणाभावात्, नचैवं घटः पटान्नेत्यपि प्रयोगापत्तिः अन्यारादित्यादिसूत्रस्थान्यपदस्य तदर्थकपरतया पृथक्शब्दसमभिव्याहारइव नञ्समभिव्याहारेऽपि पञ्चम्याः सम्भवादिति वाच्यं तत्सूत्रस्थान्यशब्दस्य तदर्थकशब्दविशेषपरतया नञस्तदन्तर्भावासम्भवात्, नच "अन्य इत्यर्थग्रहणमितरग्रहणं प्रपञ्चार्थम्" इतिसिद्धान्तकौमुदीविरोध इति वाच्यं तस्या अपि आकृतिगणविशेषे तात्पर्य्यात्, नच "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" इतिसूत्रे पृथक्शब्दग्रहणं निरर्थकमिति वाच्यं तृतीयाद्वितीयार्थमेव तत्सूत्रे तच्छब्दग्रहणात्, वस्तुतस्तु नञोऽन्यार्थकत्वमेव नास्ति तस्य भेदमात्रार्थकत्वात् पृथग्विनेतिसूत्रे पृथक्शब्दस्य असाहित्यार्थकस्यापि योगे पञ्चम्यर्थं पृथक्शब्दस्य ग्रहणमतएव "दुनोति चक्रात् पृथगप्यनङ्गः" इत्यादि प्रयोगोऽपि साधु सङ्गच्छते, यद्वा पृथक्शब्दस्य भेदमात्रार्थकत्वेन अन्यार्थत्वाभावात् पृथग्विनेतिसूत्रे पृथक्शब्दग्रहणम्, अव्ययनिपातातिरिक्तनामार्थयोर्भेदान्वयासम्भवे ऽपि पृथक्शब्दस्याव्ययतया अयमस्मात् पृथगित्यत्र भेदान्वयसम्भवादिति सङ्क्षेपः॥ ❋ ॥

एवं परत्वापरत्वे अपि न गुणान्तरे बहुतराल्पतरसंयुक्तसंयोगात्मकविप्रकृष्टत्वसन्निकृष्टत्वाभ्यां तत्प्रागभावाधिकरणक्षणोत्पत्तिकत्व-तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वरूपाभ्यां ज्येष्ठत्वकनिष्ठत्वाभ्याञ्च द्विविधपरापरव्यवहारोपपत्तेः, तत्र विप्रकृष्टत्वसन्निकृष्टत्वे तदन्यतरशून्यं तृतीयमपेक्षेते, प्रयागतः काशीविप्रकृष्टा मथुरा, मथुरातः काशीसन्निकृष्टः प्रयाग इत्या-

वि॰ दिव्यवहारात्, ज्येष्ठत्वकनिष्ठत्वे तु परस्पराश्रयमात्रमपेक्षेते लक्ष्मणाज्ज्येष्ठो रामः रामात्कनिष्ठो लक्ष्मण इत्यादिव्यवहारादिति ॥

एवं विशेषोऽपि न पदार्थान्तरम्, नित्यानां द्रव्याणां स्वतोव्यावृत्तत्वस्वीकारेणैवोपपत्तेः। ननु योगिनोऽतिरिक्तं विशेषपदार्थं प्रत्यक्षत एव पश्यन्तीति चेदेवं तर्हि सशपथमेव योगिनः पृच्छ्यन्तां किमेतेऽतिरिक्तं विशेषपदार्थं पश्यन्ति न वेति ॥ ✻ ॥

अव्याप्यवृत्तिरूपादिकमपि स्वीकार्य्यं पक्वे घटे रक्तं रूपमन्तर्नास्ति किन्तु वहिरेवेतिप्रतीतेः भग्ने तस्मिन् अन्तःश्यामत्वस्य प्रत्यक्षत एवोपलब्धेः। ननु व्याप्यवृत्तिवृत्ते रूपत्वादिजातेरव्याप्यवृत्तिवृत्तित्वं न सम्भवति सविषयकान्यव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्त्यवृत्तित्वनियमादिति चेन्न तादृशनियमस्याप्रामाणिकत्वात्। अतएव

"लोहितोयस्तुवर्णेन मुखे पुच्छे च पाण्डरः॥

श्वेतः खुरविषाणाभ्यां स नीलोवृष उच्यते" ॥

इति स्मृतिरपि साधु सङ्गच्छते, एवञ्च चित्रमपि रूपं नातिरिक्तं विजातीयरूपसमानाधिकरणरूपेणैव चित्रव्यवहारोपपत्तेः नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वेन चित्ररूपोत्पादासम्भवाच्च, स्पर्शोऽपि चाव्याप्यवृत्तिः अन्यथा सुकुमारकठिनाभ्यामवयवाभ्यामारब्धेऽवयविनि सुकुमारावयवावच्छेदेन त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः, न च सुकुमारत्वकठिनत्वे संयोगविशेषौ,चाक्षुषत्वप्रसङ्गात्। रसोऽपि चाव्याप्यवृत्तिः अन्यथा तिक्तमधुराभ्यामवयवाभ्यामारब्धेऽवयविनि तिक्तावयवावच्छेदेन रसनसंयोगे माधुर्य्योपलम्भप्रसङ्गः, नीरस एववाऽवयवी तत्रावयवरसानामेवोपलब्धेः, एतेन गन्धोऽपि व्याख्यातः ॥ ✻ ॥

कर्म्मापि चाव्याप्यवृत्ति चलन्तीषु सर्व्वासु शाखासु निश्चलमूले

वि० तरौ चलतीतिप्रत्ययात्। ननु शाखा एव चलन्ति न पुनर्वृक्ष इत्यपि प्रत्ययोऽस्तीति चेत्तस्य सर्व्वावयवावच्छेदेन चलनाभावो विषयः न पुनः सर्व्वथैव चलनाभावः, उक्तप्रत्ययविरोधात्, अतएव सदाकम्पोऽश्वत्थवृक्ष इति प्रसिद्धिरपीति ॥ * ॥

अथ द्वाभ्यां त्रिभिर्व्वा नीलावयवैर्यत्रावयवी आरभ्यते तत्रावयविनि तत्तदवयवावच्छेदेन नाना नीलं रूपं नोत्पद्यते तत्तदवयवगतरूपाणां भिन्नत्वादिति चेत् यथा घटादिसन्निकर्षस्य घटादिसाक्षात्कारजनकत्वेऽपि घटपटमठेषु सन्निकृष्टेषु घटपटमठान् विषयीकृत्यैकमेव प्रत्यक्षं जायते एवं वह्निपरामर्शस्य वह्न्यनुमितिमात्रजनकत्वेऽपि यत्र वह्नेरालोकस्य च परामर्शद्वयं वर्त्तते तत्र वह्न्यालोकोभयविषयिणी एकैव समूहालम्बनानुमितिस्तथा तत्तदवयवरूपैर्मिलित्वा एकमेव व्यापकं रूपमुत्पाद्यते तत्र न कोऽपि विरोधः ॥ * ॥

एवमेकत्वसंख्याया असमवायिकारणं नास्ति भावकार्य्यमात्रस्यासमवायिकारणजन्यत्वे मानाभावात् ॥ * ॥

द्रव्यनाशं प्रति असमवायिकारणनाश एव कारणं नतु समवायिकारणनाशः, तस्याक्लृप्तत्वात्, नित्यसमवेतद्रव्यनाशे असमवायिकारणनाशस्य हेतुतायाः क्लृप्तत्वात्, समवायिकारणनाशस्थले च असमवायिकारणनाशानन्तरमेवावयविनाशः कार्य्यकारणभावान्तरकल्पनामपेक्ष्य क्षणविलम्बकल्पनाया एव लघीयस्त्वादिति ॥ * ॥

द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकं नतूद्भूतरूपवत्त्वमपि, अतएव शीतोवायुरिति स्पार्शनभ्रमोऽपि साधु सङ्गच्छते, त्रसरेणोः स्पार्शनाभावेतु प्रकृष्टपरिमाणमपि द्रव्यस्पार्शनप्रयोजकं वाच्यम्, रूपस्य प्रयोजकत्वे त्वक्सन्निकर्षानन्तरं वायुर्वातीति सार्व्वलौकिकप्रत्यक्षानुपपत्तेर्गौरवाच्च। एकः फूत्कारः द्वौ फूत्कारौ

वि॰ अयः फूत्कारा इत्याद्याकारकं वायुगतसङ्ख्याप्रत्यक्षन्तु भवत्येव, अपिच वायुसङ्ख्याया अग्रहे दोषात्। द्रव्यचाक्षुषप्रत्यक्षे तु रूपमेव प्रयोजकं नतु स्पर्शवत्त्वं मानाभावात् उद्भूतस्पर्शशून्यायाः प्रभायाश्चाक्षुषे व्यभिचाराच्च। समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षे तु आत्मासमवेतरसगन्धशब्दजातीतरयोग्यधर्म्मसमवायित्वं प्रयोजकम्, सुखादिमादायात्मनस्तादृशप्रत्यक्षवारणायात्मासमवेतेति, शब्दवत ईश्वरस्य तादृशप्रत्यक्षवारणाय शब्देतरेति, योग्यरसवतो रसनगतपित्तद्रव्यस्य त्रसरेणोर्व्वाऽत्यर्थं रसेतरेति, वायूपनीतसुरभिभागस्य त्रसरेणोर्वारणाय गन्धेतरेति, पृथिवीत्वादिमादाय तद्दोषतादवस्थ्यवारणाय जातीतरेति, नित्यज्ञानमादायेश्वरस्य तादृशप्रत्यक्षवारणाय योग्येति, नच नित्यज्ञानस्यात्मासमवेतत्वाभावाद्योग्येति विशेषणं किमर्थमिति वाच्यं सुखादिसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेरीश्वरावृत्तित्वेन नित्यज्ञानादेरात्मासमवेतत्वसत्वात्, आत्मासमवेतत्वं विहाय सविषयकधर्म्मासामानाधिकरण्यनिवेशे तु शब्देतरत्वं नोपादेयम्, पिशाचारम्भकसंयोगादिवारणार्थन्तु योग्यत्वं निवेशनीयमिति। अस्मदादीनां परिमाणशून्यत्वं नयनसंसृष्टपित्त द्रव्यस्य परिमाणवत्त्वञ्च यद्यङ्गीक्रियते तदा तादृशप्रत्यक्षे परिमाणवत्त्वमेव प्रयोजकम्, वायूपनीतसुरभिभागादेः परिमाणानङ्गीकारात्, अथवा नयनसंसृष्टपित्तद्रव्यस्य परिमाणानङ्गीकारेऽपि परिमाणवत्त्वं न तादृशप्रत्यक्षव्यभिचारि, तादृशद्रव्यस्य रूपानङ्गीकारेण प्रत्यक्षानङ्गीकारात्, नच तद्गतपीतरूपस्यैव शङ्खादावारोपात्मकं पीतः शङ्ख इति ज्ञानं जायते तत्तस्य रूपशून्यत्वे कथमुपपद्यते इति वाच्यं वस्त्वन्तरदृष्टस्य स्मृतस्य पीतरूपस्यैव दोषवशाच्छङ्खादावारोपोपपत्तेः, अन्यथा चैत्रीयनयनसंसृष्टपित्तद्रव्यस्य पीतिमा मैत्रेण कथं न गृह्यते। द्रव्यप्रत्यक्षसा-

वि० मान्येतु शब्दरसगन्धजातीतरयोग्यधर्म्मसमवायित्वं तन्नम, नच रसनगतपित्तद्रव्यवायूपनीतसुरभिभागयोः कथमध्यक्षमिति वाच्यम् असिद्धेः, तयोारूपविरहेण चाक्षुषस्य स्पर्शाभावेन च स्पार्शनस्यासम्भवात्, नच रसनघ्राणाभ्यां तयोर्ग्रह इति वाच्यं तयोर्द्रव्यग्रहणासामर्थ्यात्॥ ✳॥

एवं घटत्वत्वादिना घटत्वादेरभावस्यापि न प्रत्यक्षं घटत्वत्वस्य घटेतरावृत्तित्वघटितस्य घटेतरातीन्द्रियघटितत्वेनातीन्द्रियत्वात्, एवं जातित्वस्यापि नित्यानेकसमवेतत्वात्मकत्वेन अतीन्द्रियत्वात् तद्रूपावच्छिन्नाभावोऽपि न प्रत्यक्षविषयः॥ ✳॥

सत्ता च न द्रव्यगुणकर्म्मवृत्तिरेका प्रत्यक्षसिद्धा जातिः, धर्म्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात् सामान्यादावपि सद्व्यवहाराच, नच सत्ताजात्यनङ्गीकारे घटः सन्नित्यादिव्यवहारस्यानुपपत्तिरिति वाच्यं वर्त्तमानत्वस्य तद्व्यवहारविषयत्वात्, ननु सच्छब्दस्य शक्यतावच्छेदकं किमिति चेत् भावत्वमिति गृहाण, भावत्वञ्चाभावान्यत्वम्,अभावत्वञ्चानुगतप्रत्ययसिद्धमखण्डोपाधिः, अथवा भावत्वमेवाखण्डोपाधिः। नच भावत्वं सदितिव्यवहारः कथमुपपद्यते इति वाच्यं ज्ञेयत्वं ज्ञेयं घटाभावो घटाभाववानित्यादिवत् स्वस्मिन् स्ववृत्तित्वाङ्गीकारेण तदुपपत्तेः॥ ✳॥

एवं गुणत्वमपि न रूपादिचतुर्विंशतावेका प्रत्यक्षसिद्धा जातिः, अतीन्द्रियेषु प्रत्यक्षायोगात् तुरगादेरुत्कृष्टगतिमत्त्वे ब्राह्मणादेश्च वेदाद्यभावेऽपि गुणवानयमश्वः सगुणोऽयं ब्राह्मण इत्यादिव्यवहाराच, नच द्रव्यकर्म्मान्यसामान्यवद्वृत्तिकारणतात्वेनानुगतीकृतानां रूपादिकारणतानामवच्छेदकतया गुणत्वजातिः सेत्स्यतीति वाच्यं कार्य्यतावच्छेदकस्य एकस्य विरहेऽपि येन केनापि रूपेण कारणत्वान्यनुगमय्य जातिकल्पने द्रव्यकर्म्मरूपभिन्नसामान्यवृत्तिकारणतावच्छेदकतया अयोविंशतिगुणवृत्तिजातेरपि

वि० सिद्धिप्रसङ्गात् रूपद्वयेतरसामान्यवद्वृत्तिकारणतावच्छेदकतया उक्तयुक्त्या सिद्धेन जात्यन्तरेण सङ्करप्रसङ्गाच्च ॥ ✻ ॥

एवं प्रत्यक्षानुमित्यादिसाधारणम्, अनुभवत्वं न जातिः, अनुमित्यादावनुभवव्यवहारस्य स्मृत्यन्यज्ञानत्वमेव विषयः। जातिस्त्वनुभवत्वं साक्षात्कारित्वमेव, साक्षात्कारिणि ज्ञान एव तत्प्रत्ययात् सुखाद्यनुमित्यादिज्ञाने सत्यपि सुखमनुभवामीति प्रत्ययाभावात् इति ॥ ✻ ॥

एवं घटाभावाभावोऽपि न घटस्वरूपः किन्त्वतिरिक्त एव, घटाभावो नास्तीत्यबाधिताभावत्वप्रत्ययात्, नचैवं तृतीयतुरीयाभावादीनामतिरिक्तत्वेऽनवस्थेति वाच्यम्, एकस्यैव घटाभावस्य स्वाभावाभावरूपत्वे विरोधाभावात् ॥ ✻ ॥

भेदसामान्यभेदस्तु भावत्वं संसर्गाभावत्वमित्युभयस्वरूपमेव तस्यातिरिक्तत्वेऽनवस्थापातात् ॥ ✻ ॥

ध्वंसस्य प्रागभावो न प्रतियोगितत्प्रागभावात्मकः, नवा प्रागभावस्य ध्वंसः प्रतियोगितद्ध्वंसस्वरूपः, घटादेः सत्त्वकाले तस्य ध्वंसप्रागभावौ न स्त इत्यबाधिताभावत्वप्रत्ययात्। प्रागभाव एवापारमार्थिक इत्यन्ये ॥ ✻ ॥

सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञायाञ्च तत्तासंस्कार एव हेतुः तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकत्वेन संस्कारसाधारणेन ज्ञानसामान्यस्यैव कारणत्वात्, नच प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापत्तिः संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वादिति वाच्यं प्रयोजकत्वस्य व्यापकतारूपत्वे विरोधाभावात्, नच व्याप्यत्वमेव प्रयोजकत्वम्, मानाभावेन तस्य व्याप्यत्वस्यासिद्धेः, परन्तूद्बोधकासमभिव्याहारस्थले स्मृतिप्रतिबन्धकसमभिव्याहारस्थले च संस्कारात् प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतिरेव तद्धेतुरिति मन्तव्यम् ॥ ✻ ॥

वि० अयं स्थाणुर्नवेत्यादिवाक्यश्रवणान्ते शाब्दबोधात्मक एव संशयोजायते पदाधीनायाः धर्म्मुपस्थितेः कोटिद्वयोपस्थितेश्च तदुभयविरोधज्ञानसंशयात्मकयोग्यताज्ञानादिसमभिव्याहृतायाः शाब्दसामग्र्याः सत्त्वात्। "समानानेकधर्म्मोपपत्ते र्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षोविमर्शः संशयः" इति सूत्रं प्रणयतोमहर्षेरपि सम्मतमिदम्। एवमेकधर्म्मिकनानाविरुद्धधर्म्मप्रकारकज्ञानत्वरूपं संशयत्वं कोटिद्वयोपस्थितिप्रभृतिसामग्रीसमाजाधीनं न कस्यापि कार्य्यतावच्छेदकं यथा नीलघटत्वम्, एवं संशयत्वशून्यज्ञानत्वरूपं निश्चयत्वमपि नीलत्वशून्यघटत्ववन्न कार्य्यतावच्छेदकम्॥ ※॥

एवं स्वत्वमपि पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वं तदिति चेत,तर्हि कोविनियोगः। भक्षणादिकमिति चेन्न परकीयेऽप्यन्नादौ तत्सम्भवात्, शास्त्रसिद्धं तत्तथेति चेत् किं तच्छास्त्रम्, परस्वं नाददीतेत्यादिकमिति चेत् स्वत्वाप्रतीतौ कथं तस्य प्रवृत्तिः, तस्मात् स्वत्वमतिरिक्तमेव, तत्र प्रमाणञ्च परस्वं नाददीतेत्यादिकं शास्त्रमेव, तच्च प्रतिग्रहोपादानक्रयपित्रादिमरणैर्जन्यते, नाश्यते च दानादिभिः, कारणानामेकशक्तिमत्त्वात् कार्य्याणां वैजात्याद्वा कार्य्यकारणभावनिर्व्वाह इति दिक्॥ ※॥

एवं शक्तिरप्यतिरिच्यते तृणारणिमणिस्थले वह्निगतजातित्रयकल्पनामपेक्ष्य तेषु फूत्कारनिर्म्मथनरविकिरणसम्बन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात्, सम्बन्धत्रितयनिष्ठैकजात्यङ्गीकारे नोदनत्वादिना सङ्करप्रसङ्गः। यदि चान्वयव्यतिरेकाभ्यां तृणादेरपि कारणत्वमिष्यते तदा तेषामप्येकशक्तिमत्त्वेन कारणत्वमस्तु तथापि जातित्रयकल्पनामपेक्ष्य शक्तिद्वयकल्पनैव लाघवेन न्यायसीति। मण्यादिष्वप्येकजातिस्वीकारे च मणित्वादिना सङ्करप्रसङ्ग इति॥ ※॥

वि० एवं शाब्दस्थलेऽपि घटमितिवाक्यघटकपदजन्यपदार्थोपस्थितिघटितसामग्र्यां शक्तिः शाब्दबोधानुकूला स्वीकर्त्तव्या, नातोघटः कर्म्मत्वमित्यादिनिराकाङ्क्षवाक्यस्थले तादृशशाब्दबोधः। इदन्त्ववधेयम्, अदृष्टदशरथानामीदानीन्तनानां दशरथादिपदात् केन रूपेणोपस्थितिः, दशरथत्वजातेरज्ञातत्वेन तद्रूपेण शक्तिग्रहस्य पदार्थोपस्थितेश्चासम्भवात्, एवं पिशाचाद्यतीन्द्रियशक्तपदस्थलेऽपि कीदृशी शक्तिधीःपदार्थोपस्थितिर्वा। अत्र केचित् दशरथपदवाच्यत्वादिनैव दशरथाद्युपस्थितिरिति वदन्ति॥ *॥

एवं संख्याऽपि पदार्थान्तरं नतु गुणः, एकं रूपमित्यादिप्रत्ययात्, नचासौ भ्रमः, बाधकाभावात्, एकार्थसमवायप्रत्यासत्त्या तथा प्रत्यय इति चेत् विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात्, नच मञ्जारञ्जने तदुपरक्तपटादौ च यथाऽविलक्षणा लौहित्यप्रतीतिस्तत्र समवायस्वसमवायिसंयोगयोः सम्बन्धयोर्वैलक्षण्येऽपि प्रकारस्य लौहित्यस्यावैलक्षण्यात् तथात्रापीति वाच्यं तथापि घटत्वादौ एकार्थसमवायसम्बन्धेन एकत्वस्येव द्वित्वस्यापि सत्त्वेन द्वे घटत्वे इत्यादिप्रत्ययस्य दुर्व्वारत्वात्, रूपत्वादौ एकार्थसमवायेन द्वित्वाभावात् रूपत्वरसत्वे द्वे सामान्ये इत्यादिप्रत्ययस्यापलापापत्तेश्च॥ *॥

समवायोऽपि च नैकोजलादेर्गन्धादिमत्त्वप्रसङ्गात्, परन्तु नानैव, समवायत्वं पुनरनुगतमखण्डोपाधिरिति॥ *॥

वैशिष्ट्यमपि पदार्थान्तरं रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः, स्वरूपसम्बन्धविशेष एव तथाप्रतीतिनिमित्तमिति चेन्न समवायोच्छेदप्रसङ्गात् तत्रापि स्वरूपसम्बन्धस्यैव सुवचत्वात्, एतेन ज्ञानादिविषयतादयोव्याख्याताः॥ *॥

कारणत्वञ्च पदार्थान्तरम्, तच्च कार्य्यभेदादवच्छेदकभेदाच्च

वि० भिद्यते, कारणत्वेनाखण्डोपाधिना ऽनुगतञ्च तत् कारणपद-शक्यतावच्छेदकम्, ग्राहकञ्च तस्य क्वचिदन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षं यथा वह्न्यादौ धूमादिकारणत्वस्य, क्वचिच्चागमादिकं यथा यागादौ स्वर्गादिकारणत्वस्य। एतेन कार्य्यत्वं व्याख्यातम्, कारणत्वप्रतियोगित्वमेव कार्य्यत्वमिति चेत् कार्य्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेस्तस्मात् कार्य्यत्वं कारणत्वञ्चोभयमेवातिरिक्तमिति वक्तव्यम्, प्राभाकरमते कलञ्जभक्षणाभावे अपूर्व्वजनकत्वं "न कलञ्जं भक्षयेत्" इति निषेधेन बोध्यते नञ्पदानुत्तरवर्त्तिविभक्त्यर्थेनापि नञर्थान्वयस्य व्युत्पत्तिसिद्धत्वात्, अतएव "अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावात्।" "तेषांमोहः पापीयान् नामूढस्येतरोत्पत्तेः" इति न्यायसूत्रद्वयं सङ्गच्छते, अनुपमृद्य प्रादुर्भावाभावात् अमूढस्य मोहशून्यस्य इतरयो रागद्वेषयोरुत्पत्त्यभावादिति सूत्रद्वयार्थ इति कृतं पल्लवितेन। पदार्थतत्त्वनिरूपणग्रन्थस्य शेषे त्रीणि पद्यानि दीधितिकृता लिखितानि। यथा,

"अर्थानां युक्तिसिद्धानां *मदुक्तानां प्रयत्नतः।
सर्व्वदर्शनसिद्धान्तविरोधेनैव दूषणम्॥
अर्था नियुक्ताः सिद्धान्तविरोधेनापि पण्डिताः।
विना विचारं न त्याज्या विचारयत यत्नतः।
सर्व्वशास्त्रार्थतत्त्वज्ञान् नत्वा नत्वा भवादृशान्।
इदं याचे मदुक्तानि विचारयत सादरम्"॥ * ॥

साधर्म्म्यवैधर्म्म्ये अपि प्रदर्श्येते॥ * ॥

ज्ञेयत्वादिकं सप्तानां पदार्थानां साधर्म्म्यम्, अनेकत्वे सति भावत्वं समवायित्वञ्च द्रव्यादीनां पञ्चानां साधर्म्म्यम्, द्रव्यादयस्त्रयः सत्तावन्तः, गुणादयः षट् निर्गुणा एवं निष्क्रियाः, सामान्यादीनां

* मयोक्तानामिति पाठः साधुः।

वि० चतुर्णां सामान्यहीनत्वम्। अणुपरिमाणकालादिगतपरमम-
हत्परिमाणातीन्द्रियसामान्यविशेषपदार्थानां कारणत्वं वैधर्म्यं त-
दितरेषां साधर्म्म्यम्, कारणत्वञ्चान्यथासिद्धिशून्यत्वे सति नियत-
पूर्व्ववर्त्तित्वम्, तच्च त्रिविधं समवायिकारणत्वासमवायिकारणत्व-
निमित्तकारणत्वभेदात्, समवायसम्बन्धेन कार्य्याश्रयत्वं समवायि-
कारणत्वम्, समवायस्वसमवायिसमवायान्यतरसम्बन्धेन समवा-
यिकारणप्रत्यासन्नत्वे सति कारणत्वम् असमवायिकारणत्वम्, उक्त-
कारणत्वद्वयभिन्नकारणत्वं निमित्तकारणत्वम्। अन्यथासिद्धास्तु
पञ्च, कारणतावच्छेदकधर्म्मः प्रथमोऽन्यथासिद्धः, कारणगतगुणा-
दिधर्म्मो द्वितीयोऽन्यथासिद्धः, कार्य्यान्तरकारणं तृतीयः, यथा
घटादिकार्य्ये शब्दसमवायिकारणं गगनम्, कारणकारणं चतु-
र्थोऽन्यथासिद्धः घटादिकार्य्ये कुलालजनकादिकः, एतच्चतुष्टयभिन्नं
नियतावश्यकपूर्व्ववर्त्तिभिन्नं पञ्चमं घटादौ कार्य्ये रासभादिक-
मिति। समवायिकारणत्वं द्रव्यस्य साधर्म्म्यम्, असमवायिकार-
णत्वं गुणकर्म्मभिन्नानां वैधर्म्म्यम्, कालिकान्यसम्बन्धावच्छिन्नवृ-
त्तित्वं नित्यद्रव्याणां वैधर्म्म्यम्, क्षित्यादीनां नवानां द्रव्यत्ववत्त्वं
गुणवत्त्वञ्च साधर्म्म्यम्, क्षित्यप्तेजोमरुन्मनसां परत्ववत्त्वमपरत्वव-
त्त्वमपकृष्टपरिमाणात्मकमूर्त्तत्ववत्त्वम् कर्म्मवत्त्वम् वेगवत्त्वञ्च सा-
धर्म्म्यम्, कालाकाशात्मदिशां सर्व्वमूर्त्तसंयोगित्वं परममहत्परि-
माणवत्त्वञ्च साधर्म्म्यम्, क्षित्यप्तेजोवाय्वाकाशानां वहिरिन्द्रियज-
न्यलौकिकप्रत्यक्षस्वरूपयोग्यविशेषगुणात्मकं भूतत्वं साधर्म्म्यम्,
क्षित्यादीनां चतुर्णां स्पर्शवत्त्वं साधर्म्म्यम्, क्षित्यादिचतुष्टयभिन्नानां
द्रव्यसमवायिकारणत्वं वैधर्म्म्यम्, आकाशात्मनाम् अव्याप्यवृत्ति-
विशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च साधर्म्म्यम्, क्षित्यप्तेजसां
रूपवत्त्वं द्रवत्ववत्त्वं, वहिरिन्द्रियजन्यप्रत्यक्षविषयद्रव्यत्वञ्च साध-
र्म्म्यम्, क्षितिजलयोर्गुरुत्ववत्त्वं, रसवत्त्वञ्च साधर्म्म्यम्, क्षितिते-

वि० ओभिन्नानां नैमित्तिकद्रवत्वं वैधर्म्म्यम्, क्षित्यप्तेजोमनसोमात्मनां विशेषगुणवत्त्वं साधर्म्म्यम्। यस्य यत् साधर्म्म्यम्, तदितरेषां तद् वैधर्म्म्यम्, यस्य यद् वैधर्म्म्यं तदितरेषां तत् साधर्म्म्यमिति संक्षेपः॥ ※ ॥

इति श्रीजयनारायण-तर्कपञ्चानन-भट्टाचार्य्य-प्रणीतायां कणादसूत्रविवृतौ दशमाध्यायस्य द्वितीयमाह्निकम्।

समाप्तश्चायं दशमोऽध्यायः, समाप्तं वैशेषिकदर्शनम्, समाप्ता चेयं कणादसूत्रविवृतिः॥ ※ ॥



काशीपीठोपकण्ठस्थलमिलितवपुस्तालिगङ्गप्रतीच्या
माले शस्तैर्द्विजौघैः प्रथिततमतनुर्या पुरी पश्चिमाख्या॥
वड्स्यासंज्ञाभिषङ्गा कलितकुलचतुःसागरीरत्नपूर्वैः
सावर्णैः स्थापितोऽभूदतिविमलमतिर्यत्र तत्रैव पूर्व्वम्॥१॥

श्यामसुन्दरनामाऽसौ भक्तिमान् श्यामसुन्दरे।
वाचस्पतिरितिख्यातो वाचस्पतिरिवापरः॥२॥

पाश्चात्यवैदिकश्रेणीजसत्काश्यपगोत्रजः।
तत्रत्यानां पूजनीयो बभूव विजितेन्द्रियः॥३॥

तद्भ्रातृजो रामचन्द्रस्तर्कालङ्कारसंज्ञितः।
पितृव्याद्विविधां विद्यामधीत्य प्रथितोऽभवत्॥४॥

तत्सुतः श्रीहरिश्चन्द्रो विद्यासागरसंज्ञकः।
धर्म्मशास्त्रे पुराणे च निपुणोऽद्यापि विद्यते॥५॥

तद्द्वितीयसुतः श्रीमान् जयनारायणः पुनः।
तर्कपञ्चाननाभिख्याविख्यातस्तर्कसंश्रयात्॥६॥

बाल्ये व्याकरणादीनि धर्म्मशास्त्राणि च क्रमात्।
ज्ञातपादपद्मस्य सन्निधानादधीतवान्॥७॥

वि॰ तत्तायाः शाकतोयपाः कारकाग्रामतोयथात्।
विद्याकङ्कारविख्यातादोऽलङ्कारमथागमत् ॥ ८ ॥
अस्ति स्वस्तिमदूर्ज्जितार्थ्यनिवहं भूषायमाणं भुवः।
कलिकातानगरं सुधाब्धिलहरीन्यक्कारिसौधोज्ज्वलम् ॥
पारेगङ्गममुष्य चाङ्गमिव या शाखापुरी शालिका।
तत्रासीद्बुधवृन्दवन्दितगुणाम्भोधिर्ज्जगन्मोहनः ॥ ९ ॥
तर्कसिद्धान्तनामासाववतीर्णः कलौ युगे।
गीष्पतिर्मानवीं लीलां कर्त्तुमिच्छन् महीतले ॥ १० ॥
सत्तर्ककर्कशमतेः सहजानुभाव—
वाग्वैभवस्फुरितनिर्ज्जितवादिवृन्दात्।
यस्तर्कदर्शनमितः स्थिरधीरधीत्य
वादस्फुरद्बुधसमाजसमादृतोऽभूत् ॥ ११ ॥
तथा गुर्ज्जरदेशीयाद्यो नाथूरामशास्त्रिणः।
वाग्देव्याः पौत्रशाद्रूपादेदान्तादीन्यधीतवान् ॥ १२ ॥
कलिकाताराजधान्यन्तर्विराजत्पाठमन्दिरे।
दर्शनाध्यापने राज्ञा यः परीक्ष्य नियोजितः ॥ १३ ॥
यो नारिकेलडाङ्गाख्यस्थले लोहाध्वसन्निधौ।
निवसन् सुधियः शिष्यानध्यापयति सन्ततम् ॥ १४ ॥
यस्य ज्येष्ठः शालिकायां मठे श्रीमधुसूदनः।
पाठयत्यधुना तर्कं तर्कवागीशविश्रुतः ॥ १५ ॥
शाके दृग्गजशैलसोमविमिते वर्षे गतं भारतम्।
कानिङ्नामनि राजनीत्य नयतः संशासति श्रीमति ॥
चैत्रे मासि कणादसूत्रविवृतिः सिद्धान्तसंघाश्रिति—
र्नीता तेन समाप्तिमत्र मुदितो भूयादशेषेश्वरः ॥ १६ ॥
यदत्र स्खलितं किञ्चित् प्रमादेन भ्रमेण वा।
मान्या मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥ १७ ॥

वि० समितिर्मच्छतोदानीमासियाखच्छमयच्छनी।
विद्यावारिधिभिः सभ्यै र्भूषिता भाति भूतले ॥ १८ ॥
बङ्गवागीशसंयोगाद्वियोगात्तमसस्तथा।
याऽधश्चकार नितराममन्दा देवसंसदम् ॥ १९ ॥
कीर्त्तिः कवीनां प्राचीनाऽतिजीर्णा यत् प्रभावतः।
यौवनं पुनरादत्तेऽमरत्वमपि गच्छति ॥ २० ॥
साराम् स्वकीयामादायासियाभूमिर्भयादिव।
यदाश्रयपरीभूत्वा प्रश्रे यां प्रश्रयं गता ॥ २१ ॥
तदाश्रया कित्र दधती समुद्गता—
न्तथागता न्मतिपदवीसमीपतः।
कणादभूरतिजरती सरस्वती
कलेवरं पुनरवहन्मनोहरम् ॥ २२ ॥

॥ * ॥ अथैव शिवम् ॥ * ॥



# वैशेषिकदर्शनस्य

## शुद्धिपत्रम्।

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| २ | ८ | मनसिकृत्य | मनसि कृत्वा |
| २ | १३ | मृतत्वमिति | मृतत्वम्" इति |
| ५ | ६ | नियमादिति" | नियमात्" इति |
| ५ | २२ | यज्ञेनेत्यादि" | यज्ञेन" इत्यादि |
| ६ | ७ | आत्यन्तकोदुख | आत्यन्तिकी दुःख |
| ६ | १६ | व्यापकं | व्यापकम् |
| ६ | १६ | किं | किम् |
| ७ | १६ | जुहोतीति" | जुहोति" इति |
| ७ | २२ | मानं | मानम् |
| ८ | ११ | दोषेभ्य" | दोषेभ्यः" |
| ८ | १७ | यथोक्तम- | यथोक्तम् "अ |
| ८ | १९ | दोषेभ्य" | दोषेभ्यः" |
| ८ | २३ | कथा | "कथा |
| ८ | २४ | कथावत | कथावतः" |
| १० | २५ | मननं | मननम् |
| ११ | २१ | याग | योग |
| १३ | २१ | विदित्वेति | विदित्वा" इत्यादि |
| १४ | १२ | भावेवा- | भावेवा |
| १४ | १७ | भाव" इति | भावः" इति |
| १४ | १९ | न्याय लीलावत्यां | न्यायलीलावत्याम् |
| १४ | २२ | वत्यां | वत्याम् |
| १५ | ७ | समाप्तं | समाप्तम् |
| १५ | ८ | ब्रह्मेति | ब्रह्म" इति |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| १५ | १६ | सप्तधर्म्माः | सप्त धर्म्माः |
| १७ | १८ | मथत्वं | मथत्वम् |
| १८ | २० | वाच्यं | वाच्यम् |
| २० | ११ | लोकानां | लोकानाम् |
| २० | १९ | नैयायिकानां | नैयायिकानाम् |
| २१ | २० | गुणा" इति | गुणाः" इति |
| २२ | ६ | जनकत्वं | जनकत्वम् |
| २२ | ८ | वचनं | वचनम् |
| २३ | १२ | पणं अवक्षेपणं आकुञ्चनं | पणम् अवक्षेपणम् आकुञ्चनम् |
| २४ | २१ | कारणत्वं | कारणत्वम् |
| २५ | ३ | यत्नन | यत्नेन |
| २५ | ८ | क्षेपणं | क्षेपणम् |
| २७ | १५ | नवायारि- | नवा यारि- |
| २७ | १६ | सामान्यंसद्विशेषो | सामान्यं सद्विशेषो |
| २८ | ७ | दिभ्य" इति | दिभ्यः" इति |
| २८ | १३ | मत्त्वं अनित्यत्वं | मत्त्वमनित्यत्वं |
| ३० | १४ | मेवद्रव्य- | मेव द्रव्य- |
| ३७ | २ | तथागुणः | तथा गुणः |
| ४१ | ५ | गुणानां | गुणानाम् |
| ४९ | २२ | शास्त्रार्थ" इत्यपि | शास्त्रार्थः" इत्यपि |
| ५० | ४ | नियम" इत्यपुचितम् | नियमः" इत्यप्युचितम् |
| ५१ | १७ | विशेषत्वम्। ३ ॥ | विशेषत्वम्। |
| ५३ | १५ | समर्थक" इति | समर्थकः" इति |
| ५३ | १९ | संग्रह" इति | सङ्ग्रहः" इति |
| ५५ | ५ | तथास्तु | तथाऽस्तु |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ५५ | १३ | भावःसत्ता | भावः सत्ता |
| ५६ | २३ | समुच्चय- | समुच्चयः |
| ५७ | १८ | नुमानं | नुमानम् |
| ६० | १५ | नाऽननु | नानन् |
| ६३ | ४ | कर्म्मत्वतदवा | कर्म्मत्वं तदवा |
| ६५ | १२ | समाधिकरण | समानाधिकरण |
| ६६ | २ | तिङ्कंकार | तिङ्कं कार |
| ६६ | १८ | रूपानुमितिः | रूपाऽनु मितिः |
| ६७ | १६ | भासं | भासम् |
| ६८ | १० | वत्त्वात | वत्त्वात् |
| ६८ | १६ | त्येवाऽवि | त्येवावि |
| ७१ | ५ | रसाऽना | रसाना |
| ७२ | २३ | यदुष्या | यउष्या |
| ७३ | ५ | नाऽनन्त | नानन्त |
| ७८ | २१ | रूपाऽना | रूपाना |
| ७६ | ६ | ष्टतस्याऽग्रहणस्याऽभि | ष्टतस्याग्रहणस्याभि |
| ७६ | १३ | न्यस्याऽनु | न्यस्यानु |
| ८१ | १० | एवाऽनुद्भूत | एवानुद्भूत |
| ८४ | २१ | नवार्था | नवाऽर्था |
| ८५ | १४ | चरितत्वेनाऽनुप | चरितत्वेनानुप |
| ८५ | २० | तस्यभावो | तस्य भावो |
| ६० | १० | तत्राऽस्ति | तत्रास्ति |
| ६१ | ११ | नाऽनुमितिः | नानुमितिः |
| ६२ | २० | वेतस" | वेतसः" |
| ६४ | ११ | कर्म्माऽपि | कर्म्मापि |
| ६६ | १६ | अनिङ्गं आकाश | अनिङ्गमाकाश |

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धानि । | शुद्धानि । |
|---|---|---|---|
| १०१ | २ | परिभाषा | परिशेषा |
| १०१ | २१ | सिद्ध | सिद्धम् |
| १०१ | २३ | वद् द्रव्य | वद्द्रव्य |
| १०४ | ४ | इतिषा | इतिरा |
| १०७ | १४ | द्रव्यत्व | द्रवत्व |
| १०८ | १० | रभमान | रभमाण |
| ११० | २१ | उम्बेयं | उन्नेयं |
| ११० | २४ | वत्वा.. | वद्रव्यत्वा |
| ११३ | ५ | वशादेत | वशादप्येत |
| ११३ | ७ | एतत् काल | एतत्काल |
| ११८ | १७ | हितात्व | हितत्वा |
| १२२ | २२ | दृष्ट.. | दृष्टे |
| १३५ | १२ | कार्य्यो रैषमो | कार्य्यरैषमो |
| १३५ | १६ | इत्यादि | इत्यादिका |
| १३६ | १५ | नानाक्षपाय | नाना, क्षपाय |
| १३७ | १७ | इत्यादि | इत्यादिका |
| १४७ | १४ | मपिनत्य | मपि नित्य |
| १४९ | ६ | दिनाकर | दिना कर |
| १४९ | १६ | सत्त्वाच नियत | सत्त्वाच, नियत |
| १५१ | ३ | वक्रे | वक्रे |
| १५१ | ६ | प्रसङ्गात् | प्रसङ्गात्, |
| १५१ | १२ | कारणत्वं | कारणत्वम् |
| १५२ | ४ | यावत् स्व | यावत्स्व |
| १५२ | ७ | यावत् साध | यावत्साध |
| १५२ | १२ | वक्रि.. | वक्रि |
| १५२ | १४ | वक्र्य.. | वक्र्य |

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धानि । | शुद्धानि । |
|---|---|---|---|
| १५२ | १५ | बक्रि | वक्रि |
| १५२ | २० | कतनीय | कथनीय |
| १५३ | ८ | व्यापकं | व्यापकम् |
| १५४ | १२ | चारित्वे न | चारित्वेन |
| १६४ | २ | दृष्टपरत्र | दृष्टे परत्र |
| १६५ | २ | भावाऽभावश्च | भावोऽभावश्च |
| १७३ | २२ | ष्वव | ष्वेव |
| १८४ | २२ | प्रयोगाणां | प्रयोगाणां |
| २०२ | २० | नरूप | तेन रूप |
| २०८ | ११ | विशेषगुणानाश्रय | गुणानाश्रय |
| २१३ | ६ | मुसतो | मुखतो |
| २२८ | ४ | यत्र पुण्य | यत्र न पुण्य |
| २२९ | ३ | कारणम् | कारणकम् |
| २३७ | १६ | द्रव्यत्व | द्रवत्व |
| २३७ | २३ | नाध्यइति | नाध्येति |
| २३९ | २१ | ऽसम वायिका रणं तद्दश | ऽसमवायिकारणं तादृश |
| २४४ | २ | मधूनां मनसश्चाद्यं | मधुमनसोश्चाद्यं, वरदराजधृतोऽयं पाठः |
| २५५ | ६ | १६ | २६ |
| २५६ | १ | वशे | वैशे |
| २५६ | १५ | तमोहरन् | तमो हरन् |
| २६२ | १३ | संसगार्त् | संसर्गात् |
| २७० | १४ | क्षमा | “क्षमा |
| २७० | १५ | दद्यात् | दद्यात्” |
| २७० | २० | कर्म्म | कर्म्म, |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| २७० | २३ | सन्ताष | सन्तोष |
| २७१ | ३ | नपधा | नुपधा |
| २७२ | १२ | मर्ज्जयेदि | मर्ज्जयेत्" इ |
| २७२ | १२ | बोधितम्" | वोधितम् |
| २७२ | १६ | प्रश्न याज | प्रश्न-याज |
| २८० | ८ | धर्म्माधर्म्मा | धर्म्माधर्म्मा |
| २८७ | ६ | त्वानुपपत्ते | त्वापत्ते |
| २९१ | २ | स्थल | स्थले |
| २९९ | १९ | चात्मस्त | चोत्मस्त |
| ३०१ | ११ | महत्त्वेऽपि | महत्त्वे अपि |
| ३०१ | २३ | गणा | गुणा |
| ३०८ | १७ | परमह | परम मह |
| ३०९ | ६ | परमह | परममह |
| ३०९ | २१ | परत्वा | परत्वयोर |
| ३१२ | २४ | स्मृतेः पञ्चमी | स्मृतेः "पृथग्विनानामा<br>भिः" इत्यादि पाणिनि<br>सूत्रस्य च पञ्चमी |
| ३२२ | १२ | द्विषोप | द्विश्लेषोप |
| ३२७ | २१ | भेदा | भेदात् |
| ३३० | २० | विभागन | विभागं न |
| ३३० | २२ | विभगो | विभागो |
| ३३२ | ७ | यत्तु | यत्र तु |
| ३३८ | २२ | समुतिष्ठ | समुत्पिष्ठ |
| ३४१ | २ | स्त्वि प्र | स्त्विप्र |
| ३४१ | २१ | कालाभ्यामिव | कालाभ्यामिवि |
| ३५५ | २ | द्रव्येष | द्रव्येषु |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ३५६ | १८ | द ा धर्माः | दयो धर्माः |
| ३५९ | ६ | सार्थ | सा अर्थ |
| ३६० | २२ | प्रत्यक्ष | प्रत्यक्षे |
| ३६४ | ८ | यन | येन |
| ३६६ | १५ | तन्वेवं | नन्वेवं |
| ३६८ | १९ | शाब्दबोध | शाब्दबोध* |
| ३७४ | २२ | पागभावे | प्रागभावे |
| ३७७ | २० | योगितत् प्रागभाव | योगि-तत्प्रागभाव |
| ३७९ | १८ | विवक्षित | विवक्षितम् |
| ३८२ | २३ | नैकइति | नैकेति |
| ३८९ | १३ | योजगज | योगज |
| ३९८ | १६ | समभिव्यवहारा | समभिव्याहारा |
| ४०१ | ८ | कत्याम्नयि | कत्यान्वयि |
| ४०१ | १० | शङ्कुध्वनि | शङ्खध्वनि |
| ४०१ | १३ | दशसंख्या | दश संख्या |
| ४०१ | १७ | तद्वोधक | तद्बोधक |
| ४०१ | १८ | आक्कादि | आकाङ्क्षादि |
| ४०२ | १७।१८ | अपदेशस्यानुमित्यजनकत्वस्योक्तत्वादिति | अपदेशस्य स्वरूपाच्छादनरूपतयाऽनुमित्यजनकत्वादिति |
| ४०२ | १९ | परिभाषया हेत्वाभासे, | स्वरूपाच्छादने |
| ४०३ | २ | मितिबुद्ध्या | मिति-बुद्ध्या |
| ४०३ | १७ | हेत्वाभासमात्र बोधकाः हेत्वाभासस्थान | स्वरूपाच्छादनमात्रबोधकाः स्वरूपाच्छादनस्थान |
| ४०५ | ४ | कारीवाच्यः | कारी वाच्यः |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ४०६ .. | १९ .. | वटे वटे .. .. | इह वटे |
| ४०८ .. | २२ .. | स्तत् सह .. .. | स्तत्सह |
| ४१० .. | १८ .. | तिथिनम् .. .. | तिथिम् |
| ४१५ .. | ९ .. | नवमोऽध्यायः .. | नवमाध्यायस्य द्वितीय-माह्निकम् |
| ४२७ .. | ३ .. | मयवि .. .. | मवयवि |
| ४२७ .. | ६ .. | द्रव्यत्व .. .. | द्रवत्व |
| ४२९ .. | २३ .. | द्रार्ष्ठार्थं .. .. | दार्ष्ठार्थं |
| ४३२ .. | ४ .. | सम्भावन्ते .. .. | सम्भाव्यन्ते |
| ४३३ .. | १६ .. | निरवयवानि.. .. | निरवयवाणि |
| ४३५ .. | ३ .. | कारकयाः .. .. | कारकयोः |
| ४४१ .. | ११ .. | चेतनोह .. .. | चेतनोऽह |
| ४४७ .. | १५ .. | व्यापिकावङ्ग .. | व्यापिका वङ्ग |
| ४५३ .. | १२ .. | वर्त्तते .. .. | वर्त्तेते |
| ४५६ .. | १० .. | सक्तका .. .. | सक्तुका |
| ४५७ .. | २४ .. | भागजनकं .. .. | भोगजनकं |
| ४५९ .. | १९ .. | विशेषणविशेष्य .. | विशेष्यविशेषण |
| ४६२ .. | २४ .. | रेयमात्मकं .. .. | रेखात्मकं |
| ४६८ .. | २४ .. | रूपादिकारणता .. | रूपादिनिष्ठकारणता |

## ॥*॥ वैशेषिकदर्शनस्य शुद्धिपत्रं समाप्तम् ॥*॥

एतस्यास्तनुतनुतामियेष संसत् सम्भूता विवृतिरियं ततः क्षमाङ्गी।
सद्रूपा रसलसितैर्गुणप्रकाशैः सद्भावैरपि समितेस्तनोतु मोदम्॥

BIBLIOTHECA INDICA;

# A COLLECTION OF ORIENTAL WORKS,

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

---

## SANSKRIT WORKS IN PROGRESS.*

The ELEMENTS OF POLITY, by KÁMANDAKÍ. Edited by Bábu RÁJENDRALÁLA MITRA. Already published, Fasciculus I. being No. 19.

The LALITA VISTARA, or Memoirs of the Life and Doctrines of SÁKYA SINHA. Edited by Bábu RÁJENDRALÁLA MITRA. Already published, Fasciculi I. II. III. IV. and V. Nos. 51, 73, 143, 144 and 145.

The Prákrita Grammar of Kramadís'wara. Edited by Bábu RÁJENDRALÁLA MITRA.

An English translation of the CHHÁNDOGYA UPANISHAD of the Sáma Veda, by Bábu RÁJENDRALÁLA MITRA. Already published, Fasciculus I. No. 78.

The VEDÁNTA SU'TRAS. Edited by DR. RÖER, Published, Fasciculi I. and II. Nos. 64 and 89.

The TAITTIRÍYA SANHITÁ of the Black Yajur Veda. Edited by Dr. E. RÖER, and E. B. COWELL, M. A. Published, Fasciculi I. II. III. IV. V. VI. VII. VIII. IX. X. XI. and XII. Nos. 92, 117, 119, 122, 131, 133, 134, 137, 149, 157, 160 and 161.

The TAITTIRÍYA BRÁHMANA of the Black Yajur Veda. Edited by Bábu RÁJENDRALÁLA MITRA. Published, Fasciculi I. II. III. IV. V. VI. VII. VIII. and IX. Nos. 125, 126, 147, 150, 151, 152, 153, 154 and 155.

The MA'RKANDEYA PURA'NA. Edited by the Rev. K. M. BANNERJEA. Already published, Fasciculi I. II. and III. Nos. 114, 127 and 140.

An English Translation of the SÁHITYA DARPANA by DR. BALLANTYNE.

* For a list of the Persian and Arabic works in progress, see No. 130 of the Bibliotheca Indica.

## SANSKRIT WORKS PUBLISHED.

| | *Former Price.* | *Reduced Price.* |
|---|---|---|
| The first two Lectures of the Sanhita of the Rig Véda, with the Commentary of Mádhava Ácharya, and an English translation of the text. Edited by Dr E. Röer, Nos. 1 to 4, .......................................... | 4 0 0 | 2 8 0 |
| The Brihad Áranyaka Upanishad, with the Commentary of S'ankara Ácharya, and the Gloss of Ánanda Giri. Edited by Dr. E. Röer, Nos. 5 to 13, 16 and 18, ...... | 11 0 0 | 6 14 0 |
| An English Translation of the above Upanishad and Commentary. Nos. 27, 38 and 135,...................... | 3 0 0 | 1 14 0 |
| The Chhándogya Upanishad, with the Commentary of S'ankara Ácharya, and the Gloss of Ánanda Giri. Edited by Dr. E. Röer, Nos. 14, 15, 17, 20, 23 and 25, .......... | 6 0 0 | 3 12 0 |
| The Taittiríya, Aittaréya and S'wétas'watara Upanishads with Commentary, &c. Nos. 22, 33, and 34, ................ | 3 0 0 | 1 14 0 |
| The I's'a, Kéna, Katha, Pras'na, Mundaka, and Mándukya Upanishads, with Commentary, &c. Edited by Dr. E. Röer, Nos. 24, 26, 28, 29, 30 and 31,.................. | 6 0 0 | 3 12 0 |
| The Taittiríya, Aittaréya, S'wétas'watara, Kéna, I's'á, Katha, Pras'na, Mundaka and Mándukya Upanishads. Translated from the Original Sanskrit, by Dr. E. Röer, Nos. 41 and 50, ...................................... | 2 0 0 | 1 4 0 |
| Division of the Categories of the Nyáya Philosophy, with a Commentary and an English Translation, by Dr. E. Röer, Nos. 32 and 35,... ........................... | 2 0 0 | 1 4 0 |
| The Sáhitya-Darpana, or Mirror of Composition, by Viswanátha Kavirája, edited by Dr. E. Röer, Nos. 36, 37, 53, 54 and 55, ............................................ | 5 0 0 | 3 2 0 |
| The Chaitanya Chandrodaya Nátaka of Kavikarnapura, Edited by Bábu Rájendralál Mittra, Nos. 47, 48 and 80, .... | 3 0 0 | 1 14 0 |
| The Uttara Naishadha Charita, by Sri Harsha, with the Commentary of Náráyana. Edited by Dr. E. Röer, Nos. 39, 40, 42, 45, 46, 52, 67, 72, 87, 90, 120, 123 and 124, ................................................ | 12 0 0 | 7 8 0 |
| The Sánkhya-Pravachana-Bháshya. Edited by Fitz-Edward Hall, A. M., and to be translated by J. R. Ballantyne, LL. D. Nos. 94, 97 and 141, ............... | 0 0 0 | 1 14 0 |
| The Sarvadarsana Sangraha; or an Epitome of the different systems of Indian Philosophy. By Mádhaváchárya. Edited by Pandita I's'warachandra Vidyáságara. Nos. 63 and 142, ................................. ...... | 0 0 0 | 1 4 0 |
| The Súrya-siddhánta, with its Commentary the Gúdhártha-prakás'aka. Edited by FitzEdward Hall, A. M. Nos. 79, 105, 115 and 146,.................................. | 0 0 0 | 2 8 0 |
| The Tale of Vásavadattá, by Subandhu, with its Commentary entitled Darpana. Edited by FitzEdward Hall, A. M. Nos. 116, 130, 148 ......................... | 0 0 0 | 1 14 0 |